॥ श्रीः ॥

न्यायाचार्यश्रीमदुदयनाचार्यविरचितः

# न्यायकुसुमाञ्जलिः ॥

# कुसुमाञ्जलिविस्तरसमेतः ॥



NYĀYACHĀRYA SRI UDAYANA'S

# NYAYAKUSUMANJALI

**with Commentary of**

## KUSUMANJALIVISTHARA

BY

**TARKARNAVA PANDITARATNA**
**T. Viraraghavacharya Siromani,**
Professor, S. V. S. College, Tirupati.

## Vol. I

Printed at
THE SRINIVASA PRESS, TIRUVADI.

**Price** ] **1941** [ **Rs. 3—4—0**

*Registered*

॥ श्रीः ॥

न्यायाचार्यबिरुदभूषितश्रीमदुदयनाचार्य-

विरचितः

# न्यायकुसुमाञ्जलिः ॥

---

तर्कार्णवेन पण्डितरत्नेन शिरोमणिना

(उत्तमूर्) ति. वीरराघवाचार्येण

विरचिताभ्यां

## कुसुमाञ्जलिविस्तर-

समाख्यविशदव्याख्यान- विशेषविषयटिप्पणाभ्यां

समुल्लासितः

---

तञ्जापुरसन्निकृष्टपञ्चनदस्थे

श्रीनिवासमुद्रणालये

मुद्रितः ।

---

1940.

|| श्रीः ||

# न्यायकुसुमाञ्जलिः ॥

प्रथमस्तबकः ।

सत्पक्षप्रसरस्सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरस १ प्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रमत्
चेतो मे रमयत्वविघ्नमनघो(घं) २ (घ)न्यायप्रसूनाञ्जलिः ॥ १ ॥

---

श्रीगुरुभ्यो नमः ॥

# कुसुमाञ्जलिविस्तरः ॥

अयमनघविभूतिर्वत्सलो वेङ्कटाद्रौ विनतजनविशिष्टाभीष्टविश्राणनाय ।
श्रुतिशतशुभतर्कव्यक्तरूपः श्रियेह स्वयमधिगतवासः श्रीनिवासः श्रियै नः ॥

वेदापहारि मधुकैटभदर्पहारि वेधोमुखार्तिपरिहारि विहारि लक्ष्म्या ।
तत्किञ्चिदच्छसरसीरुहधाम धाम तुङ्गं तुरङ्गममुखं शुभमातनोतु ॥

कणचरणमक्षचरणं कृतकृत्यं योऽकृत स्वयं कृतिभिः ।
न्यायाचार्यः श्रीमान् उदयननामा जगद्गुरुर्जयति ॥

---

१ प्रकाशे, 'अमृतं मोक्षस्तत्र रस इच्छा ; रस्यमानममृतमिति यावत् । तस्य प्रस्यन्दः उत्पत्तिः तदेव माध्वीकं तस्य भूः' इति । २ बोधन्यां, 'अनघमिति व्यस्तपाठे चेतोविशेषणं, क्रियाविशेषणं वा' इति ।

अदृष्टमधितिष्ठति स्वयमदृष्टबोधिश्रुतिप्रणेतरि कथञ्चिदप्यनधिगम्यबाधाङ्कुरे।
प्रमातरि तथा बहुप्रबलतर्कसिद्धेऽर्पितः परे स्तबकपञ्चकप्रथित एष पुष्पाञ्जलिः॥

शङ्कोत्तरविवेकार्थे नव्यशैल्या विशुद्धया।
अत्यक्तप्राच्यमार्गोऽहं व्याकुर्वे कुसुमाञ्जलिम्॥

प्रतीकधरणे प्रायः क्लेशं द्रष्टृषु पश्यता।
कारिकाभिन्नभागेषु च्छायाव्याख्या विधीयते॥

तत्रभवानुदयनो न्यायाचार्यस्तर्कशास्त्रं प्रणीतवतोर्महर्षिकणादगौतमयोः परमोद्देश्यभूतं आत्मेश्वरविवेचनं अद्भुतप्रबन्धमुखेनाऽऽधित्सुः आत्मतत्त्वविवेकं प्रणीय संप्रति विशिष्य सर्वेश्वरमननरूपं न्यायकुसुमाञ्जलिनामकं ग्रन्थमारभमाण इष्टदेवतावस्तुनिर्देशरूपं मङ्गलमाचरति— **सत्पक्षे**ति। अत्र **अमृतरसे**त्यनेन प्रयोजनं, **ईशस्ये**ति विषयः, **निवेशित** इति सम्बन्धः **भ्रमचेतो मे** इत्यधिकारी चादर्शि। **न्यायाः** समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यानि; तान्येव कुसुमानि तेषामञ्जलिः। न्यायपक्षे अञ्जलिशब्देन ग्रन्थो विवक्षितः। करद्वयकृतकुसुमसन्निवेशविशेष इवायं न्यायनिकुरुम्बसन्निवेशात्मा ग्रन्थः। एष कुसुमाञ्जलिर्भ्रमतो मच्चेतोभृङ्गस्य भ्रमनिवर्तनेन रतिहेतुर्भवत्विति वाक्यार्थः। सत्पक्षप्रसरत्वादीन्युभयानुगतानि विशेषणानि।

तत्र पुष्पाञ्जलिपक्षे **सत्पक्षप्रसरत्वं** समीचीनदलविकासवत्त्वम्। **सतां परिमलप्रोद्बोधबद्धोत्सवत्वं** अनुपहतघ्राणानां सौरभसंवेदनकल्पितप्रीतिकत्वम्। **विमर्देऽप्यविम्लानत्वं** दिव्यपुष्पाञ्जलित्वात्। **अमृतरसप्रस्यन्दमाध्वीकभूत्वं** अमृततुल्यरस्यताकप्रस्यन्दमानमकरन्दस्थानत्वम्। **अनघत्वं** शास्त्रप्रतिषिद्धविलक्षणत्वात्। ईशस्य पदयुगे निवेशितत्वं अर्चनाबुद्ध्याऽर्पितत्वम्। **भृङ्गस्य, भ्रमत्वं** अमधुमधुविवेकविरहेणतस्ततस्सञ्चारित्वम्॥ न्यायग्रन्थपक्षे तु **सत्पक्षप्रसरत्वं** निर्दुष्टपक्षताशालिधर्मिबोधकत्वम्। अनेन पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-अबाधितत्व-असत्प्रतिपक्षितत्वात्मकेषु पञ्चसु रूपेषु हेतोरपेक्षितेषु पक्षसत्त्वमस्तीति बोधितम्। हेतोः **परिमलो** नाम सपक्षसत्त्वविपक्षासत्त्वसम्पादितान्वयव्यतिरेकव्याप्तिमत्तारूपो विशेषः; सत्सु परामर्शकुशलेषु तद्बोधनेन सम्पादितानन्दत्वमेव **बद्धोत्सवत्वम्। विमर्दने न विम्लान** इति अबाधितत्वासत्प्रतिपक्षितत्वात्मकाविशिष्टरूपद्वयमुक्तं भवति। **अमृतरसप्रस्यन्दमाध्वीकभूत्वम्** माध्वीकतुल्यमोक्षेच्छाप्रवाहविधायित्वम्; कुतर्कविच्छिन्नमोक्षेच्छादार्ढ्यकरणात्; यद्वा मोक्षेच्छाधीनप्रवृत्तिकयोगाभ्यासरसात्मकमाध्वीकवहत्वम्। **एषः पञ्च-**

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥

---

स्तबकात्मा ; यत्रैकैकस्तबके कारिकोक्ता हेतवः प्रसूनानि, अवान्तरविचारहेतवो दलानि। **ईशस्य पदयुगे** निवेशितत्वं तत्प्रतिपादकत्वम् ॥ ननु तार्किकमते ईश्वरस्याशरीरत्वात् कथं **पदयुग** इत्युच्यते ? सत्यम्, ईश्वरस्य सृष्ट्यर्थशरीराभावेऽपि सम्प्रदायप्रवर्तनाय कथञ्चित्तात्कालिकशरीर-परिग्रहस्याभ्युपगतत्वात् ध्यानालम्बनतया कल्पितप्रतिमादिपदविषयकत्वाद्वा न दोषः । यद्वा **पदयुगे** पदयोरीश्वरबोधकयोः प्रमाणतर्कयोर्युगे ; अथवा पदयोरीश्वरानुमानयोः शब्दार्थरूप-योर्युगे ; श्रुतिरूपशब्देन कार्यादिरूपार्थेन च हीश्वरमनुमास्यति ॥ पूर्वार्धे प्रथमेन विशेषणेन पक्षधर्मताविरोधिनां दोषाणां, द्वितीयेन व्याप्तिविरोधिनां, तृतीयेनानुमितिविरोधिनां चाभावस्य ज्ञापनेनार्थदोषराहित्यावगमात् **अनघपदं** ग्रन्थे शब्ददोषराहित्यपरम् । तत्रापि शब्दस्य स्वरसतो विवक्षितार्थाप्रतिपादकत्वरूपदोषराहित्यं 'निवेशित' इत्यनेन सूचितमिति अपशब्द-राहित्यमत्र विवक्षितम् । चेतसो **भ्रमत्त्वं** न्यायपरिशीलनात् प्राक् विपरीतबुद्धिमत्त्वं सन्देहवत्त्वं वा । यद्वा **भ्रमत्** भ्रान्तिजननयोग्यम् अविघ्नं रमयतु भ्रमप्रमासाधारणत्वात् कदाचित् भ्रान्तिं लभेतापि ; तथा विभ्रममनुत्पाद्य निश्चिततत्त्वं करोतु । अथ वा एष मे न्यायप्रसूनाञ्जलिः पठितॄणां भ्रमच्चेतोऽविघ्नं रमयतु । यद्वा पदयुगेऽविघ्नं निवेशित एष ग्रन्थश्चेतो रमयतु ; अनेनाविघ्नसमाप्तिरप्यर्थिता भवति । **अनघ**मिति पाठे चेतसः साहजिक-मुचितार्थप्रावण्यमुच्यते । ईदृशग्रन्थशतावतारेऽप्यघिचेतोरमणमशक्यम् ; अनघं तु चेतो रमयितुमयं ग्रन्थः पर्याप्त इति ग्रन्थान्ते दर्शयिष्यमाणोऽर्थ इह सूच्यत इति संक्षेपः ॥ १ ॥

नन्वीश्वरसाधकन्यायग्रन्थस्यामृतरसावहत्वमुक्तं न सम्भवति ; स्वात्मस्वरूपस्य तद्गतपुण्या-पुण्यानां च योगमाहिम्ना प्रत्यक्षे सति नित्यनैमित्तिकाचरणेन युगपदेव स्वानुमाव्यमनुजभुजग-विहगादिसर्वशरीरपरिग्रहेण च पुण्यपापे विधूय 'दुःखजन्मे'ति सूत्रोक्तरीत्या पुमान् मुक्तो भवति । तत्रेश्वरज्ञानं कोपयुज्यते इति चेन्नैवं शङ्क्यम्—यस्योपासनं स्वर्गादेस्त्रिवर्गस्य । अपव-र्गस्य च हेतुं शास्त्रविदो वदन्ति, स उपासनार्थं ज्ञातव्यः परमात्मा निरूप्यते । ईश्वरोपासन-जनिततदनुग्रहाभावे स्वात्मयोग एव न सुकरः, नतरां च स्वात्मगतपुण्यापुण्यादिसाक्षात्कारः । तथा च गीयते—'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' (८. १३) इत्यादि । अतस्तन्निरू-पणमावश्यकम् । श्लोके उपास्तिशब्दः श्तिपा निर्दिष्टो धातुपरस्सन् उपासनारूपार्थलक्षक इति ध्येयम् ॥ २ ॥

[2] इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः— शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाऽऽशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रद्योत१(वर्त)कोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, २ सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित (नोदित) इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, ३ यावदुक्तोपपन्न इति नैयायिकाः, किं बहुना—कारवोऽपि यं विश्वकर्मेति —उपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारं प्रसिद्धानुभा(भ)वे भगवति भवे सन्देह एव कुतः ? किं निरूपणीयम् ?—

---

[2] यद्यपीह निरूपण एवमाशङ्क्यते—

अनपेक्षितमिदं न्यायतः परमात्मनिरूपणम् ; 'नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते किं तु संशयितेऽर्थे' इति न्यायेन सन्देहे सत्येव निरूपणस्य कार्यत्वात् ; परमात्मनि च सन्देहाभावात् । धर्मार्थकाममोक्षेषु यं कमपि पुरुषार्थमपेक्षमाणाः—निर्मलस्वप्रकाशस्वभाव इत्येवंरूपेणौपनिषदाः, सर्गादौ विद्वान् अणिमाद्यष्टसिद्धिसम्पन्न इति सांख्याः, अविद्याऽस्मितारागद्वेषाभिनिवेशरूपैः क्लेशैः विहितनिषिद्धरूपेण कर्मणा ब्राह्मणादिजाति-आयु-र्भोगरूपैस्त्रिविधैर्विपाकैः फलपर्यन्तास्थायिपुण्यपापात्मकैराशयैश्चासंसृष्टो वेदादिनिर्माणार्थं शरीरमाश्रित्य वेदादिसम्प्रदायप्रकाशकः फलप्रदानेनानुग्राहकश्चेति योगमतस्थायिनः, दृष्टादृष्टानिष्टहेतुभिर्लोकवेदविरुद्धैरपि कर्मभिरनुष्ठीयमानैरनाधेयफलसङ्गो जगत्कर्ता चेति महाव्रतचारिणः पाशुपताः, अन्वर्थशिवनामधेय इति शैवाः, सर्वज्ञत्वसर्वशक्तित्वादिना पुरुषेषूत्तमः पुरुषः सन् अन्तर्यामी शरीरविशिष्टःसन्नुत्तमः अखिलहेयप्रत्यनीककल्याणगुणैकतानोऽप्राकृतदिव्यमङ्गलविग्रहः श्रीमन्नारायण इति वैष्णवाः, पितामहश्चतुर्मुख इति पौराणिकाः, यज्ञरूपी यज्ञाराध्यः पुरुष इति याज्ञिकाः,

---

१ बो- 'संप्रदायो वेदो घटपटादिव्यवहारश्च ; तत्प्रवर्तकः ; वक्ता प्रवक्ता च वेदे, कर्ता ग्राहयिता चान्यत्र ।' २ 'निरावरण इति दिगम्बराः सर्वज्ञ इति सौगताः' इति बोधनीपाठक्रमः । ३ अन्ते नैयायिकमतनिवेश एव स्वरसः सर्वव्याख्यासंमतश्च । प्र- 'यावदुक्तेषु यदुपपन्नं सर्वज्ञत्वादि तेनोपपन्न इति मध्यमपदलोपी समासः । यावदुक्तेषूपपन्नः प्रामाणिको धर्मो यस्येति बहुव्रीहिर्वा' इति । यावच्छब्दस्तच्छब्दनिरपेक्षः सकलार्थक इति युक्तम् । विग्रहो विस्तरे द्रष्टव्यः ।

[3] तथाऽपि—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्यो भवति ; 'श्रोतव्यो मन्तव्य' इति श्रुतेः ;

'आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥' इति स्मृतेश्च ।

[4] तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः—अलौकिकस्य परलोकसाधनस्याभावात् ; अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवात् ; तदभावाऽऽवेदकप्रमाणसद्भावात् ; सत्त्वेऽपि तस्याप्रमाणत्वात् ; तत्साधकप्रमाणाभावाच्चेति ॥

---

क्षणिकसन्तानरूपत्वसांवृतिकसत्यत्वादिना सर्ववेदितेति बौद्धाः, धर्माधर्मशरीरात्मकावरणरहित इति जैनाः, जपहोमादिरूपोपासनविषयत्वेन विहितमन्त्रादिरूप एवेति मीमांसकाः, प्रजापालकमहाराजरूपेण वा आलयादिष्वभिमन्यमानप्रतिमादिरूपेण वा विलक्षणप्रभावशालिश्रीरामकृष्णादिरूपेण वा लोकव्यवहारसिद्ध इति लोकायतमतस्थाः, उक्तेषूपपन्नानि यावन्ति यस्य स युक्तियुक्तसर्वांशविशिष्ट इति नैयायिकाः—किं बहुना तत्त्वविचारप्रवृत्तवादिवृन्दाशयवर्णनेन—अतत्पराः कर्मीजीवाः शिल्पिनोऽपि विश्वकर्मेत्येवंरूपेण, यमुपासते ; तस्मिन् ब्राह्मणत्वादिजाति- श्रीवत्सादिगोत्र-भार्गवादिगोत्रर्षिगणकीर्तनरूपप्रवर-शाखापरपर्यायचरण-सत्सन्तानादिरूपकुल - धर्माधर्मादिवत् सृष्टिमारभ्य प्रसिद्धमहिमनि परमात्मनि विषये विचाराङ्गभूतसन्देह एव कुतः ? कुतस्तरां तदज्ञानम् ? अतः किं निरूपणीयमिति—

[3] तथाऽप्याचार्यमुखादर्थग्रहणरूपश्रवणानन्तरकर्तव्या मनननाम्नी न्यायैः परीक्षणरूपेयमुपासना क्रियत इति न कश्चिद्दोषः । उपासनं नामोत्कृष्टं निकृष्टेन प्रीत्या यथा क्रियते तत्सर्वम् । 'श्रोतव्यो मन्तव्य' इति श्रुतिर्हि श्रुतिस्मृतीतिहासपुराणेभ्यो गुरुमुखाद्बहुशः श्रुतस्य भगवतो मननं विदधाति । स्मृतिश्च प्रथमत आगमेन, पश्चादनुमानेन ततः प्रीतिरूपापन्नध्यानावृत्त्या एवं प्रकारत्रयेण सम्पादितप्रज्ञः साक्षात्कारापरपर्यायमुत्तमं योगं लभत इति ब्रुवती मननस्य आवश्यकतां दर्शयति । मननं च हेतुभिरनुचिन्तनम् ; तदत्र क्रियत इति ॥

[4] तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः । ननु पूर्वं 'परमात्मा निरूप्यत' इति परेभ्यस्तद्व्युत्पादनं प्रतिज्ञातम् । अथ कस्यापि सन्देहाभावाद्व्युत्पादनं व्यर्थमित्याक्षेपे शास्त्रविहितं मननं स्वयमनुष्ठीयत इति समाधानमुक्तम् । पुनश्च 'तत्र पञ्चतयी विप्रतिपत्ति' रिति संशयोपन्यासः क्रियते । एवं च प्रतिज्ञातत्याग, पुनस्त्यक्तनिरूपणस्वीकारः, अविद्यमानसन्देहोपन्यास-

श्चेति दोषा इति चेन्न–व्युत्पादनं प्रतिज्ञातं न त्यक्तमिति न प्रथमदोषद्वयम् । न च संशयाभावे न्यायप्रवृत्त्ययोगात् किमिति निरूपणारम्भः, कथं च तर्हि मननं क्रियत इति शङ्क्यम्–एवं तात्पर्यात्। तत्तद्वादिनामीश्वरविषये कथञ्चिज्ज्ञानसद्भावात् सन्देहो नास्त्येव । एवं श्रुत्यादिमुखेन श्रुतत्वात् स्वस्यापि सन्देहो नास्ति। एवमपि मननं भवितुमर्हति । अत एव श्रोतव्यो मन्तव्य इति श्रुतार्थे मननमाम्नायते । न च सिद्धसाधनं दोषः; परव्युत्पादनार्थन्यायप्रयोग एव तस्य दोषत्वात्। स्वयं सिषाधयिषया च पुनः पुनः साधनसम्भवात्। अत एव 'मन्तव्यश्चोपपत्तिभि'-रित्यनुमितानुमानमपि स्मर्यते । सुनिश्चितस्याप्यर्थस्य युक्तिभिरजस्रमवधारणमासाक्षात्कारं पुंसः सहजो धर्मः । अतः श्रुतमेव संप्रति मन्यते । एवमपि येऽन्य एवं श्रुतमर्थं मन्तुं व्यवस्यन्ति परं तु नानागुल्मकण्टकाकीर्णे तर्कारण्ये पदं निधातुं न पारयन्ति–तेषामुपकारायेयमस्मन्मननपद्धतिर्ग्रन्थरूपेण निबद्ध्यते। इदमेव प्राक् प्रतिज्ञातं निरूपणमपि। यत्तु कथं पश्चाद्विप्रतिपत्त्युपन्यास इति––तत्रोच्यते–न हि विप्रतिपत्तिरित्यस्य संशयतज्जनकवाक्यमिति वाऽर्थः; किं तु विरुद्धार्थप्रतिपादकवाक्यद्वयं विप्रतिपत्तिः । अतः साध्यकोटिविपरीतकोट्युल्लेखाद्विप्रतिपत्तित्वमक्षतम्। किं च 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय' इति सूत्रे न्यायप्रवृत्त्यङ्गतयोक्तस्य संशयस्य सार्वत्रिकत्वं नास्तीति, 'शास्त्रे वादे च विमर्शवर्ज'मिति भाष्य एवोक्तम् । अतस्तत्त्वनिरूपणार्थे ग्रन्थे संशयो नापेक्षितः। सुतरां च स्वकृतमनननिबन्धरूपेऽत्र। अतः श्रवणाधिगतानां मन्तव्यकोटीनां वस्तुतो यादृशकोटिविरोधित्वं तादृशकोट्युल्लेखार्थोऽयं विप्रतिपत्तिशब्दप्रयोग इति। अत्र 'यद्यपि-तथापी'त्यनेन वस्तुतो निरूपणीयत्वमस्त्येवेति सूच्यते । तदेवम्––तत्तद्वादिनां पृथक्पृथगसन्दिहानत्वेऽपि यथावस्थितार्थश्रवणानन्तरं सर्वमतदर्शिनो मध्यस्थस्य विरुद्धनानाप्रकारग्रहणेन सन्देहो भवेदेव । मननानन्तरमप्यातत्त्वसाक्षात्कारं मालया संशयानुवृत्तिरिति पक्षस्यानुपगमेऽपि मनननिष्पत्तिपर्यन्तं तदनुवृत्तिरस्तीति युक्तम् । किंच तैस्तैरन्यथाऽन्यथा गृहीतत्वात् स्थितमपि धर्मिज्ञानं शुक्तिरजताहमर्थशरीरभ्रमवन्न पुमर्थहेतुः । अतो भ्रमोऽपि निरस्यः । अतो नैयायिकोक्तयावदुक्तोपपन्नत्वविवेचनाय किमत्रोपपन्नमिति न्यायैश्शोधनरूपं मननं क्रियते । तेनोपपन्नप्रकारेष्वश्रद्धामलक्षालनं भवति । अतो निरूपणस्य कार्यत्वात् संशयविषयविपरीतकोटिपराविप्रतिपत्तिनिर्देशः कामं युज्यत इति ॥

एवं निरूपणीयत्वात्परमात्मनि विप्रतिपत्तयोऽवान्तरविप्रतिपत्त्यविवक्षया पञ्च प्रदर्श्यन्ते, अप्रत्यक्षस्य परलोकसाधनस्यादृष्टाख्यस्याभावात्; ईश्वराभावेऽपि नित्यनिर्दोषवेदमूलकत्वाङ्गीकारेण वा वेदस्य कपिलादिकृतत्वाङ्गीकारेण वा परलोकसाधनयागाद्यनुष्ठानसम्भवात्; ईश्वराभावसाधक-

प्रमाणसद्भावात् ; ईश्वरस्य सत्त्वेऽपि प्रमाणभूतत्वाभावात् ; ईश्वरसाधकप्रमाणाभावाच्चेति । कः पुनरिह पञ्चम्यर्थः ? उच्यते । इमास्तावत् पञ्चम्यन्तप्रतिपाद्याः पञ्च विपरीतकोटयः । तत्प्रतिपादकवाक्यं च विप्रतिपत्तिः । अथ बुध्या शब्दरचनेति विप्रतिपत्त्यात्मकशब्दप्रयोगे कोटिज्ञानं कारणमिति कोटीनां विषयविधया जनकतावच्छेदकत्वात्प्रयोजकत्वमस्तीति तदेव पञ्चम्यर्थ इति । यद्वा इह ईश्वरेऽस्ति न वेति विप्रतिपत्तिरुक्त लौकिकसाधनाभावादिपञ्चहेत्वधीनत्वात् पञ्चतयी । तदधीनत्वं च तत्साधनास्तित्वविषयकत्वम् ।

इदमत्र बोध्यम् —अदृष्टाधिष्ठातृतया परलोकसाधनबोधकवेदोपदेष्टृतया क्षित्यादिकार्यकर्तृत्वेन चश्वरः सिषाधयिषितः । तत्रालौकिकसाधनस्यैवाभावे सुतरां न तदधिष्ठातृतयेश्वरसिद्धिरिति चार्वाकप्रत्यवस्थानम् । अत्र प्रथमेऽवान्तरविप्रतिपत्तिविवेचने तु वेदोपदेष्टृत्वादिना तत्साधनमपि निरस्तं भवति । तथा हि—पर एव लोको नास्ति , यस्य साधनमन्विष्यत इति यदि ब्रूयात् तर्हि तद्बोधकस्य वेदस्य प्रामाण्याभावेन न तदुपदेष्टृतयाऽयं साधनीयः । यदि तु कार्यकारणभाव एव नास्ति , कुतः परलोकस्य साधनविचार इति शङ्केत , तदा सामान्यतः कार्यकारणभावस्यैवास्वीकारात् क्षित्यादिकर्तृतयेश्वरसाधनं दुष्करमिति । एवं सर्वथेश्वरनिराकरणं चार्वाकचिकीर्षितम् । तत्र च प्रथमविप्रतिपत्त्यन्तर्गता अवान्तरविप्रतिपत्तयः पञ्च । कार्यकारणभावस्यानङ्गीकारेण कार्यस्य कारणसापेक्षत्वाभावात् , क्वचित्सापेक्षत्वदर्शनेऽपि सर्वत्र तन्नियमाभावात् , सत्यपि नियमे सर्वत्रैकरूपकारणजन्यत्वसम्भवात् , विलक्षणविविधकारणावश्यकत्वेऽपि परलोकस्तत्साधनस्वीकारस्यानावश्यकत्वात्, आवश्यकत्वेऽपि यागदानादेरेव साधनत्वसम्भवेनात्मसमवेतादृष्टसद्भावे प्रमाणाभावाच्चेति । आसां निरसनेनात्र प्रथमविप्रतिपत्तिर्निरस्ता भवति ।

अथ मीमांसकस्य सांख्यादेश्च द्वितीया विप्रतिपत्तिः । तदवान्तरविप्रतिपत्तयस्तु—ज्ञानानां स्वतः प्रामाण्याङ्गीकारेण वेदप्रामाण्यसिद्धये तज्ज्ञतयेवाऽऽप्तोक्तत्वस्यानपेक्षितत्वात् , अन्यत्र सर्वत्र परतः प्रामाण्यसिद्धावपि वेदस्य नित्यत्वेन तत्प्रामाण्यस्य परायत्तत्वायोगात् , तत्प्रामाण्यज्ञप्तेश्च महाजनपरिग्रहबलादेव सम्भवात् , वेदानित्यत्वेऽपि अनादौ संसारे प्रवाहाविच्छेदेन सर्वदा तत्स्थितिस्वीकारेण तत्प्रणेतृतयेश्वरसिद्धेरयोगात् , सृष्टिप्रलयावश्यकतया प्रवाहनित्यत्वस्याप्यसंभवेऽपि कपिलादिकारुणिकमहर्षिकृतत्वेनैव प्रामाण्यसम्भवाच्चेति । अत्र अन्तिमा विप्रतिपत्तिः सांख्यादेः , अन्याः मीमांसकस्य । ततस्तृतीयस्तबके—यथाऽग्निरनुष्णः प्रमेयत्वादित्यनुमानं प्रत्यक्षप्रमाणबाधितम् , एवमीश्वरसाधकानुमानमपि प्रत्यक्षेणानुमानेनोपमानेन शब्देनार्थापत्त्याऽनुपलब्ध्या वा बाधितुं शक्यमिति— पुनर्मीमांसकस्य तृतीया विप्रतिपत्तिः । तत्र प्रत्यक्षादि-

[5] तत्र न १ प्रथमः कल्पः—यतः—

२ सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः॥ ४॥

---

प्रमाणभेदेन षडवान्तरविप्रतिपत्तयः। ततश्चतुर्थी विप्रतिपत्तिः—एवं बाधितविषयकत्वाभावेन वेदकर्तृतयेश्वरानुमानेऽपि न वेदप्रामाण्यसिद्धिः। आप्तप्रामाण्येन हि तद्ग्रन्थप्रामाण्यमिष्यते। ईश्वरस्याप्रामाण्याच्च नेदं सम्भवतीति मीमांसकस्यैव। तदवान्तरविप्रतिपत्तयश्च—अज्ञातार्थग्राहकत्वरूपप्रमात्वस्येश्वरज्ञाने दुर्वचत्वात्, सर्वविषयकस्य तस्यास्मदीयभ्रमविषयकत्वस्याप्यावश्यकत्वेन भ्रमत्वस्यावर्जनीयत्वात्, तस्य प्रमात्वेऽपि नित्यत्वाङ्गीकारेण तत्कारकत्वरूपप्रमाणत्वस्य परमात्मन्यसम्भवाच्चेति। एतन्निरसनानन्तरमीश्वरसाधकत्वेनाभिमतानां हेतूनां कार्यायोजनेत्यादीनामेकैकस्यापि हेत्वाभासत्वशङ्कारूपावान्तरविप्रतिपत्तिबहुला तत्साधकप्रमाणाभावरूपा सर्वानीश्वरवादिकृता पञ्चमी विप्रतिपत्तिः पञ्चमेन स्तबकेन परास्यत इति ग्रन्थसारः।

[5] आसु च पञ्चसु महाविप्रतिपत्तिषु न प्रथमः कल्पः, यस्मादेतन्निषेध्यमलौकिकं साधनं सापेक्षत्वादिभिः प्रमाणैर्गम्यमस्ति। तथा चालौकिकं परलोकसाधनं नास्तीति प्रथमविप्रतिपत्तिवाक्यमप्रमाणं प्रामाणिकार्थनिषेधरूपत्वादित्युक्तं भवति।

सापेक्षत्वादित्यादि—अयमर्थः—सर्वस्य निर्हेतुकत्वाददृष्टरूपहेतुविशेषोऽपि नेति न युक्तम्—सहेतुकत्वात् निर्हेतुकत्वरूपहेतोरसिद्धत्वात्। कार्यं सापेक्षं कादाचित्कत्वादिति सहेतुकत्वरूपसापेक्षत्वसिद्धेः। न च— कादाचित्कस्य सर्वस्यापि पूर्वपूर्वकारणस्य सापेक्षत्वस्वीकारेऽनवस्था स्यादित्येकं कादाचित्कमप्यकारणकं स्वीकार्यम्; एवं च तद्दृष्टान्तेन सर्वत्राकारणकत्वं साध्यमिति वाच्यम्—कुत्राप्यकारणकत्वास्वीकारात्। अनवस्थायाश्चात्र बीजाङ्कुरवदनादित्वेनादोषत्वात्। न चैवमपि दृष्टैकमात्रकारणकत्वान्नादृष्टमावश्यकमिति वाच्यम्—कार्यं विचित्रकारणकं विचित्रत्वादिति एककारणपक्षनिरासात्। न च तावता घटपटादौ दण्डवेमादिनानाकारणसिद्धा-

---

१ प्र- 'न प्रथमः पक्षः, कल्पो यतः कल्पनाऽसत्ख्यातिस्तद्विषयः। कार्यकारणभावानभ्युपगमे ....वचनप्रयोगानुपपत्तेः....व्याघात एवेत्यर्थः। तथापि साधकं विना न तत्सिद्धिरिति चेदत्राह—'सापेक्षत्वा' दिति। इदं च क्लिष्टं व्याख्यानं मकरन्दे विमृष्टम्।

२ प्र- 'सापेक्षत्वात् कादाचित्कत्वादित्यर्थः' इति। बो-'विवादाध्यासितं हेतुमत् सापेक्षत्वात् सापेक्षत्वं च कादाचित्कत्वात्' इति। मूले, 'तदा हि....न तु कदाचित् स्या' दिति, 'नियमस्यैवापेक्षार्थत्वात्तस्यैव च कारणात्मत्वा' दिति च दर्शनात् सापेक्षत्वं सहेतुकत्वमिति प्रतीयते।

**[6] न ह्ययं संसारः १ अनेक (नैक)विध (विधो) तु स्वमयां निरपेक्षो भवितुमर्हति । तदा हि—स्यादेव, न स्यादेव वा—न तु कदाचित् स्यात् ॥ अकस्मादेव भवतीति चेन्न—**

**हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।**
**स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥**

**[7] हेतुनिषेधे भवनस्यानपेक्षत्वेन २ सर्वदा भवनम्, अविशेषात् । भवनप्रतिषेधे, प्रागिव पश्चादप्यभवनम् , अविशेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन**

---

वापि परलोकसाधनं न सिद्ध्यतीति वाच्यम्-विश्वमहाजनप्रवृत्तिस्सफला प्रेक्षावत्प्रवृत्तित्वादिति तत्सिद्धेः । न चैवमपि यागादेरेव साधनत्वादन्यथासिद्धिरिति शङ्क्यम्—आशुविनाशिनस्तस्य फलजनने व्यापारापेक्षायां सुखदुःखानुभवरूपो भोगः प्रत्यात्मनियतगुणाधीनः प्रत्यात्मनियतत्वादित्यनुमानेन तत्सिद्धेः । एतेन कथमसौ व्यापारो भोग्यनिष्ठ एव न भवतीति शङ्काऽपि निरस्ता , उक्तानुमानविरोधात् । अतोऽदृष्टमस्तीति ॥ अथ सर्वमिदं विस्तरेणोपपादयामः ।

[6] अयं हि संसारो देशकालदशाभेदभिन्नबहुविधदुःखप्रचुरत्वान्न निरपेक्ष एव भवितुमर्हति । निरपेक्षत्वे हि कादाचित्को न भवेत् । किं तु सत्त्वपक्ष आकाशादिवत् सर्वदैव स्यात् ; असत्त्वपक्ष शशविषाणवत् कदाऽपि न स्यात् ; न पुनरित्थं कदाचिदवर्तमानः कदाचिद्वर्तमानश्च स्यात् । एवं चापलभ्यमानत्वाद्दुःखपयस्य शशविषाणतुल्यत्वायोगात् सदातनत्वप्रसक्तौ जनः पूर्वं पश्चाच्च सदैकरूपदुःखस्स्यात् । अतः कादाचित्कत्वात्सहेतुकः संसार इति । अथ सर्वोऽयमकस्मादेव भवतीति भ्रम इति चेन्न-विकल्पासहत्वात् । तथा हि—हेतुभूतीत्यादि—अयं भावः—अकस्माद्भवतीत्यस्य कोऽर्थः ? किं, न कस्माच्चिद्भवतीति जायमानस्यास्य हेतुनिषेधः क्रियते ? किं वा कस्माच्चिन्न भवतीति उत्पत्तिनिषेधः ; यद्वा अकस्मात् किञ्चिद्भिन्नात् स्वेतरव्यक्तिभिन्नात् स्वस्माद्भवतीति स्वजन्यत्वं स्वस्य विधीयते ; आहो अकस्मात्किञ्चित्पदार्थभिन्नात् अपदार्थादलीकादुपाख्यातुमशक्याच्छशविषाणाद्भवतीति असज्जन्यत्वं विधीयते ; अथवा अकस्माच्छब्दस्य स्वभावे रूढिमूरीकृत्य स्वभावात् भवतीति वर्ण्यते । इमे पञ्चापि पक्षाः न भवन्ति, कार्याणां नियतावधिकत्वस्यावश्यकत्वादिति ।

[7] तथा हि—प्रथमे हेतोर्निषेधपक्षे कार्यसत्तायाः किञ्चिदपेक्षत्वाभावेन गगनादिवत् सर्वदा सत्त्वप्रसङ्गः , प्रागसत्त्वसाधकाभावात् । द्वितीये भूतेरुत्पत्तेर्निषेधपक्षे प्रागिव पश्चादप्य-

---

१ बो- 'नैकविधः सर्वकाले न एकरूपःकादाचित्क इति यावत् । **अनेकविध इति** पाठे वक्ष्यमाणहेतुवैचित्र्योपयुक्ततया कार्यवैचित्र्यमुक्तम्' इति ।　२ क. अनपेक्षत्वे ।

स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्य १ नियमश्च कार्यकारणभावः । न चैकं पूर्वमपरं च, तत्त्वस्य भेदाधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः।

[8] स्यादेतत्—न अकस्मादिति कारणनिषेधमात्रं वा भवनप्रतिषेधो वा स्वात्महेतुकत्वं वा निरुपाख्यहेतुकत्वं वाऽभिधित्सितम् । अपि त्वनपेक्ष एव कश्चिन्नियतदेश-२ स्वभाववन्नियतकालस्वभाव इति ब्रूमः— ३ न, निरवधित्वे अनियतावधिकत्वे वा

सत्त्वमेव वस्तुनः स्यात्, सद्भावनियामकाभावात् । तथा स्वस्माद्भवतीति तृतीयः पक्षोऽप्यनुपपन्नः; स्वोत्पत्तेः पूर्वं स्वयमवर्तमानस्य स्वोत्पादनसामर्थ्याभावात् । न च स्वमेव स्वं प्रति कारणम् । कार्यकारणभावो हि नाम पौर्वापर्यनियमः । न चैकस्य वस्तुनः पूर्वत्वमपरत्वं च भवितुमर्हति, स्वपूर्वत्वस्वापरत्वरूपपौर्वापर्यस्य विभिन्नव्यक्तिनिष्ठत्वात् । अनुपाख्याद्भवतीति चतुर्थपक्षे चेदानीमिव प्रागपि तस्मादेवानुपाख्यादुत्पत्तिरापाद्यत इति पुनरपि सदा सद्भावप्रसङ्ग एव ।

[8] ननु—अस्तुतावदेषु चतुर्ष्वपि पक्षेषु दोषः । नैते पक्षा अस्माद्विवक्षिताः । किं तु निरपेक्षमेव वस्तु नियतकालस्वभावकं भवतीति स्वभावतो भवनरूपं पञ्चमं पक्षमेव वयं ब्रूमः । न चैतत्पक्षे कादाचित्कत्वानुपपत्तिः । यथा तदेव कार्यं घटादिकं दण्डचक्रकपालाद्यनेककारणजन्यत्वेनाभिमतमपि तेषु मध्ये कपालादिरूपदेशमात्रवर्ति भवति, न दण्डादिवर्ति । तत्र हि स्वभाव एव नियामकः। तद्वत्कादाचित्कत्वे किञ्चित्कालसम्बन्धेऽपि स्वभाव एव नियामकोऽस्तु—इति चेत्—नैवम् । नियतदेशत्वमपि हि वस्तुनो न निष्कारणं भवितुमर्हति । किं तर्हि—अनुभवबलात् कपालस्य स्वस्मिन् घटोत्पादनसामर्थ्यम दण्डचक्रादेश्च कपाले घटोत्पादनसामर्थ्यमिति कल्प्यते । अतः कारणबलादेव तदिति, दृष्टान्तस्तावदसिद्धः । प्रकृते च यदि नियतावधित्वं न स्वीक्रियते, न स्यादेव कादाचित्कत्वम् । किं भवता अवधिरेव न स्वीक्रियते । किं वा तत्स्वीकारेऽपि अस्य कार्यस्यायमवधिरिति अवधिनियमो न स्वीक्रियते । प्रथमे सर्वदा भवनं स्यादेव । द्वितीयेऽप्यनियतावधिकतया सर्वमपि पूर्वपूर्वमवधीभवतीति सदातनत्वप्रसङ्ग एव । न च सदातनत्वेऽपि न कादाचित्कत्वव्याघातः, किञ्चित्कालसम्बन्धित्वस्यैव तदर्थत्वा-

१ बो. "चो हेत्वर्थः ? यस्मात् पौर्वापर्यनियमः कार्यकारणभावः, तस्मादिति अथवेतश्च न स्वस्मादुत्पत्तिरित्याह पौर्वापर्येति ।" २ अयं क॰ रीत्या पाठः । 'नियतदेशवत्' पा० ।

३ बो. "अत्राप्यवधेर्नियतत्वत इत्येतदेवोत्तरयति 'न निरवधित्व' इति । प्रकाशेऽपि 'परिहरति न निरवधित्व' इति पाठो युक्तः ; नञोऽभावे मूले पञ्चम्यन्तस्यालग्नत्वात्" ।

कादाचित्कत्वव्याघातात् । न ह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वम्; किं तु प्रागसत्त्वे सति । सावधित्वे तु स एव प्राच्यो हेतुरित्युच्यते ।

[9] अस्तु प्रागभाव एवावधिरिति चेन्न, अन्येषामपि तत्काले सत्त्वात् अन्यथा तस्यैव निरूपणानुपपत्तेः । तथा च न तदेकावधित्वमविशेषात् । इतरनिरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः १ कार्यस्य सत्त्वप्रसङ्गात् ।

[10] सन्तु ये केचिदवधयः, न तु तेऽपेक्ष्यन्त इति स्वभावार्थ इति चेत्—'नापेक्ष्यन्त' इति कोऽर्थः? किं न नियताः, आहोस्विन्नियता अप्यनुपकारकाः? प्रथमे धूमो

---

दिति वाच्यम्—तावन्मात्रस्य तदर्थत्वे आकाशादावपि कादाचित्कत्वव्यवहारापत्तेः । अतः प्रागसत्त्वे सति कालसम्बन्धित्वं कादाचित्कत्वम् । नियतावधिकत्वास्वीकारे च प्रागसत्त्वं दुरुपपादम् । ततस्तत्स्वीकारे च लोके एकैककार्यस्याप्यवधिः पूर्व उत्तरश्चेति द्विविध इति तत्रायमवधिः पूर्व इत्ययमेव हेतुशब्दार्थ इति सिद्धं सकारणकत्वम् ।

[9] नन्वस्तु सकारणकत्वम् । अथापि प्रागभावमात्रं कारणम्; न तु दण्डचक्रादिभावपदार्थोऽपीति चेन्न—विनिगमकाभावात् । घटोत्पत्तिप्राक्काले तस्येव दण्डादीनामपि सत्त्वात् । दण्डाद्यसत्त्वे च घटप्रागभावस्यैव दुर्निरूपत्वात् । कारणकलापदर्शने ह्यत्र घटो भविष्यतीति प्रागभावो गृह्यते । एवञ्च प्रथमगृहीतानां दण्डादीनां कारणत्वमत्याज्यम् । अतो न प्रागभावमात्रावधिकत्वम् । न चावश्यं प्रागभावस्य कारणत्वमेषितव्यम्; अन्यथा घटवति घटान्तरोत्पत्त्यापत्तेः । अतो गौरवान्न तेषां कारणत्वमिति वाच्यम्—प्रागभावमात्रस्य कारणत्वे तस्यानादित्वेन दण्डादिसमवधानात्प्रागपि तस्मादेव प्रागभावरूपादवधेः कार्यसत्त्वप्रसङ्गात् ।

[10] नन्वन्येऽपि भावा अवधित्वेन स्वीक्रियन्ताम् । अथापि कार्यस्य तदवधिकत्वमात्रं स्वीक्रियते, न तु तदपेक्षत्वम् । तथा च स्वभावतो भवतीत्यस्य तदनपेक्षं भवतीत्येवार्थ इति चेत्—किमिदं तेषामनपेक्ष्यमाणत्वम्? किं कार्यनियतपूर्ववर्तित्वाभाववत्त्वम् किं वा कार्यानुपकारकत्वम्। नाद्यः, दहनस्येव गर्दभस्यापि धूमं प्रत्यवधित्वेन व्यवहारापत्तेः नियतपूर्ववर्तिभिन्नस्याप्यवधित्वे गर्दभे तद्बाधकाभावात् । नान्त्यः, इष्टत्वात् । न ह्युपकारः कश्चिद्भवतीति वयं ब्रूमः; किं तु नियतत्वमेवापेक्ष्यमाणत्वं तदेव च कारणत्वमित्येव । इदं चेद्भवद्भिरुच्यते, न कश्चिदावयोर्भेद इति ।

---

१ बो- 'तदवधेः प्रागभावैकावधिकस्य कार्यस्य, तस्मादवधेर्वा' इति । अनेन कार्यसत्त्वेति समासं विना कार्यस्येति व्यस्य पाठः सिद्धः ।

दहनवत् गर्दभमप्यवधीकुर्यात्, नियामकाभावात् । द्वितीये तु किमुपकारान्तरेण, नियमस्यैवापेक्षार्थत्वात् , तस्यैव च कारणात्मत्वात् , ईदृशस्य च स्वभाववादस्येष्टत्वात् ।

[11] 'नित्यस्वभावनियमवदेतत् । न ह्याकाशस्य तत्त्वमाकस्मिकमिति सर्वस्य किं न स्यादिति वक्तुमुचितम्' इति चेन्न , सर्वस्य भवतः स्वभावत्वानुपपत्तेः । न ह्येकमनेकस्वभावं (वो) १ नाम, व्याघातात् । नन्वेवमिहापि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघात इति तुल्यः परिहारः–न तुल्यः—निरवधित्वे अनियतावधित्वे वा कादाचित्कत्वव्याघातात् नियतावधित्वे हेतुवादाभ्युपगमात् ॥

---

[11] अथ नैव किञ्चित् कारणं स्वीकुर्मः । कारणानपेक्षत्वेऽपि कादाचित्कत्वं न भज्यते स्वभावरूपत्वात् नित्यस्वभाववदिति ब्रूमः । यथा हि नित्यस्याकाशस्याकाशत्वं कारणनिरपेक्षत्वादाकस्मिकमेवसदप्यात्मनि न भवति ; आत्मत्वं वाऽऽकाशे । तत् कस्य हेतोः । तस्य तस्य तत्तत्स्वभावत्वात् । न हि पूर्वं घटादीनां कपालादिमात्रे सद्भावे कारणसामर्थ्यस्य नियामकत्ववदत्र कस्यचिन्नियामकत्वकथनं सम्भवति , आकाशत्वादेर्नित्यत्वेन कारणानपेक्षणात् । अतः स तस्य स्वभाव इत्येवोत्तरम् । तद्वद्घटादीनां कादाचित्कत्वं स्वभाव इति चेदुच्यते । सत्यमिदं, यद्दृष्टान्ते कथ्यते । अन्यथाऽऽत्मादेरप्याकाशत्वं चेद्भवेत् तस्य स्वभावत्वमेव न स्यात् । स्वासाधारणो हि भावो धर्मः स्वभाव इत्युच्यते । न ह्येकं वस्त्वनेकतत्तत्प्रतिनियतधर्मविशिष्टं भवति । न ह्येकमेकस्वभावात्मकमनेकेषां स्वभावो भवति । प्रतिनियतत्वे एकत्रासमावेशात् समाविष्टत्वे प्रतिनियमाभावात् । अतो दृष्टान्ते स्थितिरेवमेव । अथापि दार्ष्टान्तिके नेष्टसिद्धिः । ननु प्रतिनियतस्याकाशत्वस्यात्मन्यङ्गीकारे यथा प्रतिनियतत्वभङ्गः , तथा कादाचित्कस्य सदातनत्वे कादाचित्कत्वभङ्ग इति भवदाशङ्कापरिहारस्तुल्य इति चेन्न—अतुल्यत्वात् । मिथो विरुद्धयोरेकत्राङ्गीकारायोगात् । तथा हि निरपेक्षत्वं ब्रुवता निरवधित्वमिष्यते न वा । आद्ये निरवधित्वमवधिराहित्यं पूर्वोत्तरकालवृत्त्यभावाप्रतियोगित्वरूपम् ; कादाचित्कत्वं च पूर्वकालिकाभावप्रतियोगित्वमित्युभयं मिथो विरुद्धम् । अन्त्येपीदं सावधित्वमनियतावधित्वरूपं नियतावधित्वरूपं वा । आद्ये अनियतावधित्वं नाम नियतावधित्वेनास्मदभिमतकपालादितत्तत्कारणासमवधानकालाव्यवहितकालस्थत्वम् । तदपि प्रागसत्त्वरूपकादाचित्कत्वविरोधि । अन्त्ये तु नियतावधित्वेऽस्मन्मतस्वीकार एव । अतो न कार्यकारणभावासिद्धिरिति ॥

---

१ बो- "न ह्येकमनेकस्वभावो नाम' इति संप्रदायवतां पाठः" इति ।

[12] स्यादेतत्—उत्तरस्य पूर्वः, पूर्वस्योत्तरो मध्यमस्योभयमवधिरस्तु; दर्शनस्य दुरपह्नवत्वात् । त्वयाऽप्येतदभ्युपगन्तव्यम् । न हि भाववदभावेऽप्युभयावधित्वमस्ति । तद्वद्भावेष्वप्यनुपलभ्यमानैकैककोटिषु स्यात्—न स्यात्, अनादित्वात् ।

[13] प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

[14] प्रागभावो ह्युत्तरकालावधिरनादिः ; एवं भावोऽपि घटादिः स्यात् । अनुपलभ्यमानप्राक्कोटिकघटादिविषयं नेदमनिष्टमिति चेन्न—तावन्मात्रावधिस्वभावत्वे तदहर्वत् पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात् ; अपेक्षणीयान्तराभावात् । एवं पूर्व-

---

[12] नन्वस्तु सापेक्षत्वम् ; अथापि नेदं सर्वत्र । यत्तावत् उत्तरत्वेनैवोपलभ्यते, न तु किञ्चित्पूर्वत्वेन, तस्य भावस्योत्तरोऽवधिर्न स्वीकार्यः । तथा पूर्वत्वेनैवोपलब्धस्य किञ्चित्प्रत्युत्तरत्वेनानुपलब्धस्य न पूर्वावधिरेष्टव्यः । मध्यवर्तित्वेनोपलभ्यमानस्य तु काममुभयोऽप्यवधिरस्तु, नियतावधित्वेनोपलब्धस्यापलापायोगात् । कादाचित्कत्वस्वभावव्याघातवर्णनेन च भवद्भिरुपलम्भानुसारावश्यकत्वस्योपपादितत्वात् । न चैकमात्रावधिकत्वं कुत्रापि नेष्टमिति वाच्यम्——प्रागभावे ह्युत्तरावधिमात्रम् ; प्रध्वंसे च पूर्वावधिमात्रम् । अतोऽभाव इव भावेऽपि , यत्र नैकोवधिरुपलभ्यते , तत्र स मास्तु । यद्यनुपलम्भेऽपि पूर्वावधिः कल्प्येत । सर्वस्यापि पूर्वपूर्वस्य पूर्वपूर्वावधिकल्पनादनवस्था स्यात्—इति चेन्न, अनादित्वादनवस्थाया अदोषत्वात् । अन्यथा कार्यानादित्वप्रसङ्गात् । तथा हि—

[13] एष कार्यप्रवाह आदिमान् न ; किं तु बीजाङ्कुरवदनादिः । नन्वेवमप्येकजातीयस्य कार्यस्यैकजातीयमेव कारणं भवतीति न नियमः , तृणारणिमणिभ्योऽग्निदर्शनादिति चेत् —नैकजातीयप्रवाहः विजातिमान् विभिन्नजातिककारणवान् भवति । ननु तेषां विलक्षणानामप्येकशक्तिमत्त्वेन कारणत्वमस्त्विति चेत्—नायं प्रवाह एकशक्तिककारणवानपि भवति । यद्वा नायं प्रवाहो विजातिकवस्तुनिष्ठैकशक्त्यधीन इत्येक एव द्वितीयपादार्थः । तर्हि किं तवेष्टमिति चेत्—तृणारणिमणिस्थलेऽप्यन्वयव्यतिरेकयोस्तत्त्वे याथात्म्यविषये प्रयत्नवता पुरुषेण भाव्यम् । अवधानेन तृणादिकारणभेदेन कार्येऽग्नावपि विलक्षणजातिमवबुद्ध्य तत्तदवच्छिन्नं प्रति तत्तत्कारणमित्यन्वयव्यतिरेकावधिगन्तव्याविति ।

[14] न तावदभावदृष्टान्तेन भावेऽपि पूर्वावधिराहित्यं युक्तम् । तथा सति प्रागभावस्येव तस्याप्यनादित्वप्रसङ्गात् । अथ तत्र भावे घटादावनादित्वमिष्टमिति चेन्न—तस्योत्तरावधिमात्रवत्त्वे

पूर्वमपि । भावे, तदेव सदातनत्वम् । तदहरेवानेन भवितव्यमिति अस्य स्वभाव इति चेन्न—तस्याप्यह्नः पूर्वन्यायेन पूर्वमपि सत्त्वप्रसङ्गात् । तस्मात्तस्यापि तत्पूर्वकत्वं, एवं तत्पूर्वस्यापीत्यनादित्वमेव न्यायः । न त्वपूर्वानुत्पादे कस्यचिदपूर्वस्य सम्भव इति ।

[15] तथाऽपि व्यक्त्यपेक्षया नियमोऽस्तु, न जात्यपेक्षयेति चेन्न, नियतजातीयस्वभावताव्याघातात् । १ यदि हि यतःकुतश्चिद्भवन्नेव तज्जातीयस्वभावस्स्यात्, सर्वस्य सर्वजातीयत्वमेकजातीयत्वं वा स्यात् । एवं (यदि) तज्जातीयेन यतःकुतश्चिद्भवितव्यमिति अस्य स्वभावः, तदाऽपि सर्वस्मात्सर्वजातीयमेकजातीयं वा स्यात् ।

---

तस्मिन्नहनीव पूर्वदिनेऽपि तत्सत्त्वप्रसङ्गेन तदवधिकत्वेनाङ्गीकृतस्य तत्कार्यस्यापि कस्यचित्तस्मिन्नहनीव पूर्वेद्युरपि तमेव घटमवधीकृत्य सत्त्वप्रसङ्गात् । यद्धि तत्कार्यं प्रत्यवधित्वेन स्वीकृतं, तत् पूर्वेद्युरप्यस्ति ; यत्त्वकारणम्, तत्तावन्नापेक्ष्यमिति । एवमेव तत्पूर्वपूर्वदिनेष्वप्यनादितया तस्य स्थितेस्तत्कार्यस्यापि तदा सत्त्वप्रसङ्गः । इष्टापत्तौ च पूर्वोक्तं सदातनत्वं पुनरापद्यते । ननु घटादेरवधेरनादित्वेऽपि, अस्मिन्नेवाहन्यनेन भाव्य'मिति तत्कार्यस्य स्वभाव इति चेन्न—अह्नोऽप्युपाधिविशेषावच्छिन्नकालरूपत्वात् उपाधेश्चानुपलभ्यमानानवधिककार्यन्यायेन पूर्वेद्युः सत्त्वप्रसक्तौ तस्य दिनस्यापि प्राक्कालसत्त्वापादनसम्भवात् । तथा चेदं कार्यमपि पूर्वं स्यादेवेति । नन्वेवं सदातनत्वप्रसङ्गपरिहाराय पूर्वावधेरप्यवध्यङ्गीकारेऽनवस्था स्यात् । अतोऽवध्यस्वीकारेण कादाचित्कत्वभङ्गपरिहारोऽन्वेषणीय इति चेन्न—प्रवाहानादित्ववर्णनस्यैव न्यायस्त्वात् । अनवस्थायाः ईदृशविषयेऽदोषत्वात् । अनुपलभ्यमानप्राक्कोटिकस्य घटादेरपि अपूर्वस्य प्रागस्थितस्य सतः पश्चात् सामग्रीबलादुत्पाद इत्यस्याभावे तत्कार्यस्याप्यपूर्वस्य पूर्वमस्थितस्यैव पश्चादुत्पत्तिर्दृश्यमाना न घटेत ; अवधिसदातनत्वेन कार्यसदातनत्वस्यैवापत्तेः । अतः सर्वमपि कार्यं सपूर्वावधिकमिति ।

[15] नन्वयं कार्यकारणभावो घटजातीयं प्रति कपालजातीयं कारणमिति जात्यपेक्षया तावन्न भवति, विजातीयेभ्यस्तृणारणिमणिभ्योऽग्निजातीयस्यैवोत्पत्त्या व्यभिचारात् । अतस्तद्व्यक्तिं प्रति तद्व्यक्तिः कारणमिति दर्शनानुरोधाद्व्यक्त्यपेक्षयैव नियमः कल्प्यः । न चैतेन किञ्चिदिष्टसिद्धिः ; कार्यार्थिनः कारणे प्रवृत्तेर्वा कार्यात्कारणानुमानादेर्वा प्रसक्त्यभावात् । अतो व्यर्थमिदं नियमकल्पनमिति चेन्न—विभिन्नजातीयादप्येकजातीयकार्योत्पादोपगमे कपाला-

---

१ यदीत्यादिवाक्ये यत कुतश्चिद्भवन्तमुद्दिश्य तज्जातीयस्वभावत्वं विधीयते । एवमित्यादिवाक्ये तज्जातीयमुद्दिश्य यतःकुतश्चिद्भवनं विधीयते इति व्याख्यानान्तरं बोधन्याम् ।

[16] **कथं तर्हि तृणारणिमणिभ्यो भवन्नाशुशुक्षणिरेकजातीयः ? [1] एकशक्तिमत्त्वादिति चेन्न ; यदि हि विजातीयेष्वप्येकजातीय [2] कार्यकरणशक्तिः समवेयात्, न कार्यात्कारणविशेषः क्वाप्यनुमीयेत ; कारणव्यावृत्त्या च न तज्जातीयस्यैव कार्यस्य व्यावृत्तिरवलीयेत । तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवात् । यावद्दर्शनं व्यवस्था भविष्यतीति चेन्न, निमित्तस्यादर्शनात्, दृष्टस्य चानिमित्तत्वात् ॥ एतेन [3] सूक्ष्मजातीया (सूक्ष्मादेकजातीयत्वा)दिति निरस्तम्, अवह्नेरपि तत्सौक्ष्म्यात् धूमोत्पत्त्यापत्तेः।**

ज्जातो घट एव भवतीति कार्यजातिस्वभावासिद्धिप्रसङ्गात् । यदि तज्जातीयं कार्यं यादृशतादृशकारणादुत्पन्नमपि तज्जातीयमेव भवतीति कार्यस्य स्वभावः, तदा घटजातीयस्य पटजातीयकारणात्तत्त्वादितोऽप्युत्पत्तिसम्भवात् पटेऽपि घटजातीयता स्यादिति सर्वस्मिन्कार्ये सर्वा जातयः स्युः । अथ तासां सर्वासामपि जातीनां समनियतत्वप्राप्त्या घटत्वकलशत्वादिवत् भिन्नत्वे प्रमाणाभाव इति चिन्त्यते, तर्हि सर्वत्रैकैव जातिः स्यात् । एवं यदि तज्जातीयेन यतःकुतश्चिद्भवितव्यम् । अभवनेऽस्य स्वातन्त्र्यं नास्ति । यत्किमप्यस्तु कारणम, तत् तज्जातीयमुत्पादयत्येवेति कारणस्य स्वभाव इत्युच्यते–तदाऽपि सर्वस्मादपि कारणात् सर्वकार्योत्पत्तिरिति पूर्ववत् सर्वं सर्वजातीयमेकजातीयं वा स्यादेव । अतो न विभिन्नजातीयादेकजातीयोत्पत्तिः ।

[16] अथ तर्हि तृणारणिमणिभ्यः कथमेकजातीय उत्पद्यते ?

ननु मीमांसकसम्मतं त्रयाणामप्येकानुगतशक्तिमत्त्वेन कारणत्वं स्वीक्रियत इति न व्यभिचार इति चेन्न–विजातीयेष्वप्येकजातीयोत्पादनशक्तिस्वीकारे, लोके कार्यबलात्कारणविशेषानुमानस्य तादृशकारणाभावेन तज्जातीयकार्याभावावधारणस्य च कुत्राप्यसम्भवप्रसङ्गात् । शक्तेरन्यत्रापि संभावितत्वेनोक्तकारणाभावेऽपि कार्योत्पत्तिसम्भवात्। न च यद्धर्मावच्छिन्नसत्त्व एव कार्यं दृश्यते, तद्धर्मावच्छिन्न एव शक्तिः, नान्यत्रेति व्यवस्थेति नान्यतः कार्योत्पत्तिरिति वाच्यम्–यद्धर्मपदेन शक्तिं गृहीत्वा 'शक्त्यवच्छिन्ने सति कार्यं दृश्यत' इत्यस्य दुर्वचत्वात् ; शक्तेर्निमित्तस्यादर्शनात् ।

१ बो- एकशक्तित्वात् । २ क. ख. कारण. ३ कथमेकजातीय इति प्रश्ने, पूर्वं 'एकशक्तिमत्त्वा' दित्युत्तरवदत्रापि सूक्ष्मजातिमत्त्वादित्येवोत्तरं शुद्धम् । न पुनर्धर्मिपर्यन्तवाचि 'सूक्ष्मजातीया'दिति पदप्रयोगशैली रम्या । क[2] 'सूक्ष्मादेकजातीया'दिति पाठान्तरं लक्ष्यते । बोधन्यां–'सूक्ष्मात्' इति प्रतीको धृतः । प्रकाशकारस्यादपि धर्ममात्रवाचिपदं युक्तम् । एकजातीये तु सौक्ष्म्यं बाधितम् । अत उपरि-निर्दिष्टस्ततो रम्यतरो वा पाठो भाव्यः ।

**[17] कार्यजातिभेदाभेदयोः समवायिभेदाभेदावेव तन्त्रम् , न निमित्तासमवायिनी इति चेन्न, तयोरकारणत्वप्रसङ्गात् । न हि सति भावमात्रं तत् ; किं तु सत्येव भावः । न च जातिनियमे समवायिकारणमात्रं निबन्धनम् , अपि तु सामग्री । अन्यथा द्रव्य-**

---

'तृणत्वावच्छिन्ने सत्येव कार्योत्पत्ति'रित्यस्यापि दुर्भणत्वात् ; तृणत्वरहितान्मणेरपि कार्यदर्शनेन तृणत्वादेरनवच्छेदकत्वात् ।। एतेन एकशक्तिमत्त्वपक्षे कार्यत्कारणविशेषस्य कारणव्यावृत्त्या कार्यव्यावृत्तेश्चावधारणासम्भवप्रसङ्गरूपेण हेतुनैव , 'तृणादिष्वेकातीन्द्रियानुगतजातिसत्त्वाद्वेभ्योऽग्निरेकजातीय' इति पक्षोऽपि निरस्तः । अयं हि जातिवादिनामाशयः—शक्तिस्तावल्लोके प्रतिबन्धकविनाश्या आश्रयनाशनाश्या प्रातव्यक्तिभिन्ना चानन्तैव भवति । अतस्तस्या एकत्वमेकजातीयत्वरूपमेव पर्यवस्यति । एवं चानन्तशक्ति-तद्गतजातिविशेषकल्पनापेक्षया तृणादिष्वेव शक्तिस्थाने नित्यैकजातिकल्पनं युक्तम् । अतीन्द्रियत्वाच्च शक्तेरिव तस्या अपि न प्रत्यक्षमिति । एवमेतन्मते लाघवसत्त्वेऽपि अतीन्द्रियतया तृणादिष्विव सत्त्वे मानाभावेनान्यतोऽपि तज्जातिमतोऽग्न्युत्पत्तिप्रसङ्गेनोक्तो दोषस्तदवस्थः । तथा च दृष्टकारणतावच्छेदकत्यागाविशेषेणाग्नित्वस्यापि धूमजनकतावच्छेदकत्वमस्वीकृत्याग्निगतातीन्द्रियजातेर्जनकतावच्छेदकत्वसम्भावनयाऽग्निभिन्नादपि तज्जातिमतो धूमोत्पत्त्यापत्तिरिति ।

[17] न च तृणादिष्वेकजात्यनङ्गीकारेऽपि न दोषः, तेषामग्निं प्रति निमित्तत्वात् । समवायिकारणगतवैजात्यसाजात्ये एव न कार्यवैजात्यसाजात्यप्रयोजकं, न निमित्तासमवायिकारणगते इति वाच्यम् । एवं सति तत्तदजन्यव्यक्तिष्वपि कार्यतावच्छेदकसत्त्वेन तृणादेः कारणत्वस्यैवासिद्धिप्रसङ्गात् । न हि कारणे सति कार्यसत्त्वमात्रं कारणत्वप्रयोजकम् ; किं तु कारणे सत्येव कार्यस्य भाव इत्येवकारसिद्धो व्यतिरेकांशोऽपि । प्रकृते च तृणाभावेऽप्यग्निभावात् कारणत्वमेव न स्यात् । किं च कार्यवैजात्ये समवायिवैजात्यमेव प्रयोजकमित्यपि नास्ति ; किं तु सकलकारणसमावेशरूपा सामग्र्येव प्रयोजिका । अन्यथा द्रव्यगुणकर्मणां द्रव्यमेव समवायिकारणमिति समवायिकारणवैजात्याभावात् त्रयाणां वैजात्यं न स्यात् । न च कार्यवैजात्यं सर्वं समवाय्यधीनमिति न ब्रूमः , किं तु कार्यभूतं यत् द्रव्यं तस्य तत्समवायिकारणाधीनं वैजात्यमित्येव । अतो गुणादेर्विजातीयत्वेऽपि न दोष इति वाच्यम्—दुग्धद्रव्यारम्भकपरमाणुभिरेव दधिद्रव्यारम्भदर्शनेन समवायिकारणभेदाभावेऽपि कार्यवैजात्यस्य स्वीकार्यत्वात् । तत्र दध्यारम्भकपरमाणुषु पाकवशाद्रसादिवैलक्षण्ये सत्यपि द्रवात्मकदुग्धविलक्षणकाठिनावस्थदध्युत्पत्तौ परमाणुमात्रस्यातन्त्रत्वात् । तस्मात् सामग्र्येव कार्यवैजात्ये निबन्धनम् । ततः सामग्रीनिविष्टस्यैकैकस्यापि कार्यं प्रति कारणत्वस्यावश्यकतया तृणादेरपि तदुपपादनीयम् । तच्चैकशक्तिमत्त्वेनैकजातिमत्त्वेन वा न संभवतीत्युक्तम् ।

गुणकर्मणामेकोपादानकत्वे विजातीयत्वं १ न स्यात् । न च कार्यद्रव्यस्यैषा रीतिरिति युक्तम् ; आरब्धद्रव्यैरेवावयवैर्द्व्यारम्भदर्शनात् ॥

[18] एतेनापोहवादे नियमो निरस्तः ; "कार्यकारणभावाद्वे" २ त्यादिविप्लवप्रसङ्गात् । तस्मान्नियतजातीयतास्वभाव ३ भङ्गेन व्यक्त्यपेक्षयैव नियम इति—

[19] ४ न ; फूत्कारेण तृणादेरेव, निर्मन्थनेनारणेरेव प्रतिफलिततरणिकिरणैर्मणेर-

[18] एतेनोक्तपक्षद्वयनिरासकेन हेतुना बौद्धसम्मतापोहवादेऽपि नियमो निरस्तः । तथा हि—अपोहो ह्यतद्व्यावृत्तिः । एवं च सर्वसम्मतापोहेनैव व्यवहारनिर्वाहेऽतिरिक्ता जातिर्न कल्प्येति वह्नित्वरूपजात्यभावात् धूमं प्रति वह्नेरवह्निव्यावृत्तिरूपेण वह्निभिन्नभिन्नत्वेन कारणत्वमिति वदद्भिर्बौद्धैः वह्नित्वेन सर्ववह्निक्रोडीकारासम्भवात्, यावत्स्थले स्वयं धूमदर्शनं तावद्वह्निव्यक्तीर्गृहीत्वा तावदन्यान्यत्वेन कारणत्वस्वीकारेऽन्यवह्निव्यक्तितो धूमाभावप्रसङ्गात्सर्वव्यक्तिनिवेशावश्यकत्वे सति, 'कतीनां व्यक्तीनां कुर्वद्रूपत्वं तदपि हि किञ्चित् अपोहरूपमेव । 'कासां च पृथक्पृथग्ग्रहणेन कारणत्वं वर्ण्येत' इत्यत्र व्यवस्थाया दुर्वचतया कदाचिदवह्नेरपि धूमसम्भावनया धूमं प्रति वह्नेर्नियमो न सिद्ध्यति । एवमेकजातीयस्थल एव नियमासिद्धौ का कथा तृणारणिमणिस्थले । अतश्चापोहवादे 'कार्यकारणभावाद्वे' ति तदुक्तमपि विप्लुतं भवति । ते ह्यनुमानोपयोगी हेतुसाध्यभावो न साध्यवति हेतुदर्शनरूपादन्वयाद्भवति , नापि विपक्षे तददर्शनरूपाद्व्यतिरेकाद्भवति ; किं तु यत्र कार्यकारणभावो वा तादात्म्यापरपर्यायस्वभावो वा, यथा—अग्निमान् धूमात्, अयं वृक्षः शिंशपाया इत्यादौ—तत्रैव भवति । अतस्तदुभयमेव नियामकमिति, 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो ५ ऽदर्शनान्न, न दर्शनात्' इति वर्णयन्ति । उक्तरीत्या च कार्यकारणभाववर्णनासम्भवात्सर्वमिदं विप्लुतमेव स्यात् । अतोऽपोहवादोऽपि न युक्तः । अतश्शक्तिजात्यपोहपक्षाणामयुक्ततया सामान्यापेक्षया नियमस्य दुर्वचतया व्यक्त्यपेक्षयैव नियमः स्वीकार्यः । तथा च यथोपलम्भं तद्व्यक्तिस्तद्व्यक्तेः कारणमिति किमनेनैतत्स्थापनप्रयासेनेति ॥—

[19] नैवम्— कार्ये वैजात्याङ्गीकारेण सामान्यापेक्षयैव कार्यकारणभावोपपत्तेः । तथा हि—यथा तृणादिकमग्नेः कारणं , तथा फूत्कारादिव्यापारोऽपि । तत्र फूत्कारस्तृणादित एवाग्निं जनयति , निर्मन्थनमरणित एव , दिनकरकरप्रतिफलनमपि सूर्यकान्तमणित एवेति व्यापारव्यवस्था

१ क² 'विजातीयत्वानुपपत्तेः' पा० २ कार्यकारणभावादिविप्लवेति क्वचित् ।

३ क. भङ्गे । ४ बो. 'सिद्धान्त्याह नेति । एवशब्दो भिन्नक्रमः । तृणादेः फूत्कारेणैवेत्यादि' इति । ५ 'दर्शनान्न न दर्शनात्' इति पाठे न दर्शनात् इति नञ् समासः ।

**वेति प्रकारनियमवत् तेनैव व्यज्यमानस्य कार्यजातिभेदस्य भावात्। दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्यापकमालोकमारभते ; न तथा ज्वालाजालजटिलोऽपि दारुदहनः, न तरां च कारीषः। यस्तु तं नाकलयेत्, स कार्यसामान्येन कारणमात्रमनुमिनुयादिति किमनुपपन्नम् ॥**

[20] **एवं तर्हि धूमादावपि कश्चिदनुपलक्षणीयो विशेषः स्यात्, यस्य दहनापेक्षेति, न धूमादिसामान्याद्वह्निसामान्यादिसिद्धिः। एतेन व्यतिरेको व्याख्यातः। तथा च कार्यानुपलब्धिलिङ्गभङ्गे स्वभावस्याप्यसिद्धे[1]र्गतमनुमानेनेति चेत्—[2] न। प्रत्यक्षानुप-**

---

तावद्दृश्यते। अतः सहकारिवैलक्षण्यवत् कार्यवैलक्षण्यमपि युक्तम्। अन्यथा हि शक्तिस्वीकारे तृणादाविव फूत्कारादावपि सा कल्प्या। एवं च निर्मन्थनविशिष्टात् तृणादप्यग्न्यापत्तिः। एवमनन्तकारणेष्वनन्तशक्तिकल्पनामपेक्ष्यात्र लाघवमपि लक्ष्यते। तृणत्वादेरनिमित्तत्वे दोषश्च दर्शितः। अतो व्याप्यधर्मावच्छिन्नं प्रत्येव तृणादेः कारणत्वम्। लक्ष्यते चाग्नित्वव्याप्यमनेकं वैलक्षण्यम्। तैलवर्त्यादिसामग्री खलु प्रभाभरितप्रदीपहेतुः। दार्वादिकं यद्यपि ज्वालामालभारिणं महत्तममेव दहनं जनयति, अथापि न तत्र तादृशी प्रभा। करीषादितस्तु निष्प्रभो विलक्षण एवाग्निः। अतो नानाजात्यनुभवादनुमीयते। तृणादिजन्योऽग्निररण्याद्यग्निविजातीयः, तद्भिन्नकारणजन्यत्वात् प्रदीपवदिति। अत्र यो यत्कारणातिरिक्तकारणजन्यः स तत्कारणजन्यविजातीय इति सामान्यमुखी व्याप्तिरपि सुवचा। तथा अयमरण्यग्निरग्नित्वव्याप्यजातिमान् अग्नित्वात् प्रदीपवदित्यप्यनुमानम्। शक्यते च ब्राह्मणमातापितृसम्बन्धज्ञानादिव्यञ्जकसहकृतेनेन्द्रियेण ब्राह्मणत्वरत्नत्वादेरिवोक्तप्रकारविशेषरूपव्यञ्जकसहकारिबलादीदृशजातिभेदस्य व्यज्यमानत्वं प्रत्यक्षविषयत्वमेवास्तीत्यपि वक्तुम्। अतस्तादृशजातिरूपसामान्यापेक्षयैव कार्यकारणभावो न व्यक्त्यपेक्षयेति सर्वं सुस्थम्। न चेदृशजातिभेदमगृह्णतः पुंसोऽग्निदर्शने सति कार्यात्कारणानुमानं न सम्भवेदिति वाच्यम्–विशेषजात्यविवेकेन विशेषकारणानुमानासम्भवेऽपि तेनाग्निसामान्यं प्रति यत् कारणं तदनुमानसम्भवात्, तावताऽनुपपत्त्यभावात्।

[20] ननु तर्ह्यग्नौ दुर्ग्रहं वैजात्यं स्वीकृत्य तस्य तृणापेक्षत्ववर्णनवत् धूमेऽपि अवान्तरविशेषं स्वीकृत्य तस्यैव दहनसापेक्षत्ववर्णनसम्भवात् धूमसामान्येनाग्न्यनुमानं क्रियमाणं न सिद्ध्येत्। अनेनैवाग्न्यभावतो धूमाभावानुमानासिद्धिरपि सिद्धा। तथा च कार्यकारणभावनिर्णयासम्भवादनुमानप्रमाणमेव गतम्। न चैतदभावेऽपि तादात्म्यापरपर्यायस्वभावबलेनानुमानं सम्भवतीति

---

१ क[2] 'कृतं'। २ बो· 'परिहराति नेति'

लम्भगोचरो जातिभेदो न कार्यप्रयोजक इति वदतां बौद्धस्य शिरस्येव प्रहारः । अस्माकं तु यत्सामान्याक्रान्तयोर्ययोरन्वयव्यतिरेकवत्ता , तयोस्तथैव हेतुहेतुमद्भावनिश्चयः । तथा चावान्तरविशेषसद्भावेऽपि न नो विरोधः ॥

[21] किं पुनस्तार्णादौ दहनसामान्यस्य प्रयोजकम् ; तृणादीनां विशेष एव नियः-

---

वाच्यम्- तत्रापि कार्यकारणभावापेक्षाध्रौव्यात् । तथा हि-अयं वृक्षः शिंशपाया इति तादात्म्यानुमाने हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्कायां विपक्षे बाधकमुपन्यसनीयम् । तदित्थम्— शिंशपायाः वृक्षसामग्रीजन्यतया शिंशपायां सत्यां वृक्षसामग्र्याऽपि भाव्यम् । अतो वृक्षोऽप्यावश्यकः । अन्यथा कार्यकारणभावभङ्ग इति । यद्वा वृक्षकारणानुपलब्धौ शिंशपाऽभावदर्शनात् सत्यां शिंशपायां वृक्षोऽप्यावश्यक इति । अत्र प्रथमं कार्यात्कारणानुमानमूलकम् ; द्वितीयं कारणानुपलब्ध्या कार्याभावानुमानमूलकम् । किञ्च बौद्धैरभावसाधनीनामनुपलब्धीनां मध्ये कार्यानुपलब्धिरेका वर्णिता, यथा–'नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमानुपलब्धे'-रिति (न्यायबिन्दुः 1.) तथा कारणानुपलब्धिरपि, 'नात्र धूमोऽग्न्यभावा' दिति । अतश्च प्रकृते वृक्षाभावे वृक्षसामग्र्यभावः , तदभावे च शिंशपाभाव इति कार्यानुपलब्धिरेव परम्परया स्वभावसिद्धौ लिङ्गम् । एवं च कार्यकारणभावासिद्धिवर्णनात् कार्यरूपालिङ्गस्य , कारणानुपलब्धिरूपलिङ्गस्य , कार्यानुपलब्धिरूपलिङ्गस्य च भङ्गे सिद्धे विपक्षे बाधकस्य वर्णनासम्भवेन स्वभावोऽप्यसिद्ध एवेति सर्वात्मनैवानुमानप्रमाणं गतमिति चेत्–अयमाक्षेपो बौद्धं प्रत्येव युज्यते । स हि– यत्सत्त्वे कार्यसत्त्वं , यदभावे च कार्याभावश्चानुभविकम् — तस्यान्वयव्यतिरेकापरपर्यायप्रत्यक्षानुपलम्भविषयस्य बीजत्वादेः कारणतावच्छेदकत्वमस्वीकृत्याप्रामाणिकं कुर्वद्रूपत्वं कल्पयति । तथा च तन्मतेऽसम्भावितकारणतावच्छेदककल्पनवत् असम्भावितकार्यतावच्छेदककल्पनसम्भवेन दृश्यमानाग्नित्वधूमत्वादिसामान्यानां प्रयोज्यप्रयोजकभावासिद्ध्या धूमादिना वह्न्याद्यनुमानासम्भवादनुमानमेव गतमिति । अस्माभिस्तु दृष्टकारणतावच्छेदकनानाधर्मानुसारेण कार्यवैजात्यं क्वचिदभ्यूह्यते । सर्वथा दृष्टं धर्ममादाय कार्यकारणभावो न त्यज्यते । अतो धूमसामान्यस्याग्निसामान्यस्य चान्वयव्यतिरेकभङ्गादर्शनात् तत्राप्रामाणिकधूमावान्तरविशेषो न सिद्ध्येत् । अतः प्रमाणतः क्वचिदवान्तरविशेषसद्भावेऽपि न सर्वत्र तदापत्त्यादिविरोधप्रसक्तिः । एवं स्वभावस्थल इव कार्यकारणस्थल इव चास्वभावभूतेष्वकार्यकारणरूपेष्वपि भूयो दर्शनबलादविनाभावं वदतामस्माकं मतेऽनुमानविलोपरूपविरोधप्रसञ्जनमपि नावकाशं लभत इति ॥

[21] नन्वेवं सामान्यकार्यकारणभावस्यापि स्वीकारे तार्णातार्णदहनसामान्यकारणं किमिति चेदुच्यते । तेजस्त्वावच्छिन्नं प्रति वायुर्निमित्तकारणम् । तत्र तत्रावयवसंयोगा असमवायि-

तत्त्वादिति चेत्— १ न । तेजोमात्रोत्पत्तौ पवनो निमित्तम् ; अवयवसंयोगोऽसमवायी ; तेजोऽवयवास्समवायिनः । इयमेव सामग्री गुरुत्ववद्द्रव्यसहिता पिण्डितस्य । इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनं , तत्रापि जलं प्राप्य दिव्यं, पार्थिवं प्राप्य भौमं, उभयं प्राप्योदर्यमारभत इति स्वयमूहनीयम् ॥

[22] तथाऽप्येकमेकजातीयमेव वा किञ्चित्कारणमस्तु कृतं विचित्रेण । दृश्यते ह्यविलक्षणमपि विलक्षणानेककार्यकारि । यथा—प्रदीप एक एव तिमिरापहारी वर्तिविकारकारी रूपान्तरव्यवहारकारीति चेन्न—वैचित्र्यात् कार्यस्य ।

एकस्य न क्रमः क्वापि वैचित्र्यं च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ७ ॥

[23] न तावदेकस्मादनपेक्षादनेकम्, अक्रमात् क्रमवत्कार्यानुपपत्तेः । क्रमवत्ताव-त्कार्य(क)कारणस्वभावत्वात्तस्य, तत् तथा ; यौगपद्यवदिति चेत्— २ अयमपि च क्षणभङ्गे परिहारो न तु सहकारिवादे । पूर्वपूर्वानपेक्षायां क्रमस्यैव व्याहतेः । क्रमनियमे त्वनपेक्षानुपपत्तेः ॥

---

कारणम् । अवयवाश्च समवायिकारणम् । तेजोविशेषेषु च सुवर्णाख्यपिण्डितं प्रति गुरुत्ववद्द्रव्यरूपं विशेषनिमित्तकारणम् । तेजोऽवयवानामेवोद्भूतस्पर्शवत्त्वे दहनोत्पत्तिः । तत्र च केवल-जल-केवलपृथिवी-तदुभयरूपनिमित्तभेदात् दिव्यभौमादर्याणामुत्पत्तिरित्येवमूह्यताम् ॥

[22] नन्वस्तु सापेक्षत्वमनादित्वं च ; अथापि कृत्स्नस्यैकमेव कारणं भवितुमर्हति । एकस्यैवाऽविचित्रस्य प्रदीपस्य तमोहरण-वर्तिविनाश-घटादिरूपव्यवहारात्मकानेककार्यजनकत्वदर्शनात् । यदि त्वेकस्य युगपदनेककार्यजनकत्वेऽपि न क्रमेणानेकजनकत्वमित्याशंक्यते—तर्हि यदेकं प्रथमकार्यकरणं तज्जातीयमेव विभिन्नं द्वितीयादिकार्यकरणमस्तु । सर्वथा न विचित्रकारणस्यावश्यकतेति चेन्न—कार्यवैचित्र्यात्कारणवैचित्र्यानुमानात् ॥

[23] एकस्य न क्रमः क्वापि । नह्येकस्य सहकार्यन्तरनिरपेक्षस्य कार्ये क्रमः क्वापि दृष्टः। सहकार्यपेक्षत्वे तु सामग्र्याः सहकारिमेलनरूपायाः क्रमभावित्वात्कार्यायौगपद्योपपत्तिः । अन्यथा तु क्रमप्रसक्तिरहितात्कारणान्न क्रमेण कार्यसम्भवः; अपेक्षणीयान्तराभावात् । अथ कारणस्य क्रमशालितावत्कार्यजनकत्वस्वभावकत्वात्तत् कार्यं तथा क्रमिकं भवति, यथा दीपस्य युगपज्जनक-

---

१ बो- 'किं पुनरिति किमाक्षेपे....अनुवृत्तं तु न किञ्चित् दृश्यत इति भावः । नेति'
२ बो- ''अपि चेति समुच्चयो 'बौद्धस्य शिरस्येष सं(?)प्रहारः' इत्येतदपेक्ष्ये''ति ।

[24] **नाप्यनेकमविचित्रम् । १ यदि ह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुः, नासावदहनो दहनो वा स्यात्; उभयात्मको वा स्यात् । न चैवम् । शक्तिभेदादयमदोष इति चेन्न—धर्मिभेदाभेदाभ्यां तस्यानुपपत्तेः । असङ्कीर्णोभयजननस्वभावत्वादयमदोष इति चेन्न । न हि स्वाधीनमस्यादहनत्वम्; अपि तु तज्जनकस्वभावाधीनम् । 'तथा च तदायत्तत्वाद्दहनस्यापि तदत्र केन वारणीयम् । न हि तस्मिन् जनयितव्ये नासौ तत्स्वभावः । तस्माद्विचित्रत्वात् कार्यस्य कारणेनापि विचित्रेण भवितव्यम् ।**

---

स्वभावकत्वात्तत्र कार्ये यौगपद्यं तद्वदिति चेत्तर्हि प्रथमकार्यजननकाले तद्वस्तु द्वितीयकार्यजननस्वभावं न वा; नाद्यः, प्रथमस्येव द्वितीयस्यापि तदानीमेवोत्पत्त्यापत्तेः । नान्त्यः, स्वभावो हि दुरतिक्रमः । अतः सति वस्तुनि तत्स्वभावत्यागायोगात् स्वभावो नास्तीति वदता वस्तु नास्तीत्येव वक्तव्यम् । तथा च क्षणभङ्गपक्षावलम्बनेन परिहारोऽयम् । न सहकारिवादपर्यवसायिवस्तुस्थैर्यपक्षे । स च बौद्धपक्षो नावयोरिष्टः । स्थैर्यैककारणवादिना च त्वया सहकारिवादमनिच्छताऽपि स स्वीकर्तव्य एव भवति । तादृशस्वभावं तत्कारणं यदि तृतीयक्षणे कार्योत्पादनाय द्वितीयक्षणं नापेक्षते, तर्हि तृतीयक्षणभाव्यपि द्वितीयक्षण एव स्यादिति क्रमभङ्गः । यदि क्रम आवश्यकस्तर्हि पूर्वक्षणापेक्षाऽस्त्येवेति सिद्धं कारणानेकत्वं सहकारिवादश्च ।

[24] अस्त्वनेकं कारणम्; अथापि तत्कृतः कार्यान्तरकारणापेक्षया विचित्रमिति चेत्—**वैचित्र्यं च समस्य न** । न सजातीयस्य कार्ये वैचित्र्यं भवितुमर्हति । अतोऽनेकमपि नाविचित्रं सत् कारणम् । अविचित्रकारणाद्विचित्रकार्यवादिना हि यावत् दहनं प्रति कारणं तावदेवादहनं प्रत्यपि कारणमित्युक्तं भवति । तत्र च दहनत्वादहनत्वयोर्विरोधस्य स्थिततया कारणस्य परस्परविरोधिसामग्रीरूपत्वात् तत्कार्यं दहनोऽदहनो वा न भवेत् । दहनत्वादहनत्वयोरविरोधस्वीकारे तु कार्यं दहनादहनोभयरूपं स्यात् । ननु दहनशक्तिविशिष्टं तदेव दहनं जनयति, अदहनशक्तिविशिष्टं त्वदहनमिति चेत्—शक्तिभेदो न चाभिन्नः स हि शक्तिविशेषो न धर्म्यभिन्नः, तथा सति पूर्वदोषतादवस्थ्यात् । अतो धर्मितो भेदः स्वीकार्यः । तथा च विभिन्नशक्तिसमावेशप्रयुक्तं सामग्रीवैचित्र्यमवर्जनीयम् । ननु मास्तु शक्तिः । तदेव कारणं परस्परासङ्कीर्णद्विविधकार्यजनकस्व-

---

१ बो.'किं तत् कारणं दहनैकजननस्वभावं, अदहनैकजननस्वभावं, उभयजननस्वभावं वेति विकल्पं हृदि निधाय प्रथमे दोषमाह यदि हीति....द्वितीयेऽप्याह दहनो वेति । 'तृतीयेऽप्याह उभयात्मक इति' । प्रकाशे तु आद्यपक्षद्वयदूषणं नासावित्यनेन । नासावदहनः किन्तु दहनस्स्यात् नासौ दहनः किं त्वदहनस्स्यादिति च योजना दर्शिता ।

न च तत् स्वभावतस्तथा। ततः सहकारिवैचित्र्यानुप्रवेशः। न तु(च)१ क्षणोऽपि तदनपेक्षस्तथा भवितुमर्हतीति ॥

[25] अस्तु दृष्टमेव सहकारिचक्रम्; किमपूर्वकल्पनयेति चेन्न—विश्ववृत्तितः।

विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनम्, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत। न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते; प्रागेव जगत्।

स्वभाववत्त्वात् पृथगेव दहनमदहनं चोत्पादयतीति निर्दुष्टोऽयं पक्ष इति चेत्—स्वभावो दुरतिक्रमः। तत्रापि हि दहनस्य कस्माददहनत्वं नेत्याशङ्कायामदहनसामग्र्यजन्यत्वादित्येवोत्तरस्य वाच्यतया तदर्थं दहनोत्पत्तिकाल तस्या दहनजननस्वभावास्वीकारेण पश्चात्तत्स्वीकारे तस्य स्वभावत्वभङ्गापत्तेः, तदर्थं कालभेदभवत्स्वभावभेदशालिनो वस्तुनोऽपि भेदाङ्गीकारे क्षणभङ्गपक्षापत्तेः, दुरतिक्रमोऽयं स्वभावस्तदाऽपि स्वीकार्य इत्युभयस्वभावानन्तरभाविनो दहनस्य कथमदहनत्वं न भविष्यति। तस्मात्कार्यवैचित्र्यं कारणवैचित्र्यायत्तमेव सर्वत्र। न च तत् कारणं सहकार्यसमावेशे स्वयमेव तथा विचित्रं भवति। अतो विभिन्नसहकारिसम्बन्धः स्वीकार्यः। नन्वेककारणकत्वरक्षणाय क्षणभङ्गपक्षमवलम्ब्य क्षणस्यैव कारणत्वं स्वीक्रियत इति चेन्न हि क्षणोऽपि सहकार्यनपेक्षः कारणं भवितुमर्हति। अन्यथा कुसूलादाहृत्य क्षेत्रे समुप्तबीजस्येव कुसूलस्थबीजस्यापि तावति काले कुर्वद्रूपत्वविशिष्टबीजोत्पादकत्वसम्भवेन तत्रैवाङ्कुरोत्पत्त्यापत्तेः बौद्धैरपि सहकार्यपेक्षताया वक्तव्यत्वात्; प्रत्यक्षे इन्द्रियस्यालोकादिसहकारिकत्वस्य तैरुक्तत्वाच्चेति ॥

[25] ननु विचित्रकारणकत्वेऽपि दृष्टसहकारिकल्पनैव निर्वाहान्नादृष्टसिद्धिरिति चेन्न—परलोकादिसाधनविश्वमहाजनप्रवृत्तित एवादृष्टसिद्धेः। तथा हि—इयं विश्वप्रवृत्तिः निष्फला सफला वा; अन्त्येऽपि दुःखैकफला सुखफला वा। तत्र चान्त्ये किं लाभादिजन्यसुखफला आहो विप्रलम्भफला अथ वा विलक्षणसुखफलैवेति विकल्पाः। न तावदाद्यः कल्पः—पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुष इति यथादृष्टं पूर्वपूर्वमुत्तरोत्तरकार्यजनकं स्वीक्रियते; न तु विश्ववृत्त्यादेरपि किञ्चित्फलमदर्शनादिति यदि; तर्हि न कश्चित् परलोकमुद्दिश्य यागहोमादि-

१ बो. 'क्षणभङ्गवादेऽपि सहकारिवैचित्र्यमाहरणीयमित्याह 'न च क्षणोऽपी' ति'। प्र. 'नत्विति।'

**[26] लाभपूजाख्यात्यर्थमिति चेत्—लाभादय एव किन्निबन्धनाः ? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः । यतो वानेन लब्धव्यं यो वैनं पूजयिष्यति, स किमर्थम् ? ख्यात्यर्थमनुरागार्थं च । जनो दातरि मानवितरि च रज्यते । 'जनानुरागप्रभवा हि सम्पदः' । इति चेन्न—नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवस्थापनात् । त्रैविद्यतपस्विनो धूर्तबकाः एवेति चेन्न—तेषां दृष्टसम्पदं प्रत्यनुपयोगात् ।**

**[27] सुखार्थं तथा करोतीति चेन्न—नास्तिकैरपि तथा करणप्रसङ्गात्, सम्भोगवत् ।**

---

रूपेष्टे तटाकनिर्माणादिरूपपूर्ते च प्रवर्तेत । साध्यादिप्रेक्षणपूर्वमेव कस्यचित्करणात् । प्रयोजनमनुद्दिश्य हि न मन्दोऽपि प्रवर्तते । अत एव न द्वितीयः । न च दृश्यत एव यागाद्यनुष्ठाने कायक्लेशार्थव्ययादिना दुःखमिति वाच्यम्–तस्य पाकादाविव नान्तरीयकत्वेनाफलत्वात् ; तावताऽपि दुःखैकफलकत्वस्याप्रसक्तेश्च । अन्यथाविधे नैकोऽपि प्रवर्तेत न तरां च सर्वमेव जगत् ।

[26] ननु लाभाय पूजायै ख्यातये वेति तृतीयः पक्षोऽस्त्विति चेन्न कृषिसस्ययोरिव यागलाभयोः कार्यकारणभावस्यासिद्धत्वात् । न खलु यागे कृते स्वयमेव लाभः पूजा वा भवितुमर्हति ; तयोः पुरुषान्तरद्वारकत्वेन यागमात्रादसम्भवात् । पुरुषान्तरद्वारैवास्त्विति चेत्—यो हि पुरुष एनमर्थं दानेन लम्भयति, पूजयति वा , स किमर्थं तत् करिष्यति, स्ववृत्तिनैष्फल्ये जोषमेव स्थितिप्रसक्तेः । ननु सोऽपि दानादौ कृते ख्यातिर्भवति, प्रतिग्रहीतुश्च स्वस्मिन्ननुरागो भवतीति तत्करोति । अनुरागस्य दानपूजाफलत्वं च लोकसिद्धम् । अनुरागसम्पादनमप्यावश्यकम् ; संपदां जनानुरागमूलकत्वस्य प्रसिद्धत्वात् । अतः सर्वो व्यापार एतदन्यतमे फले पर्यवस्यतीति चेन्न—ये राज्यभरणाङ्गभूताः नीतिसचिवाः, ये च केलिसचिवास्तेष्वेव ख्यात्यनुरागार्थतया दानस्य व्यवस्थितत्वात् ; वनवासितपस्विप्रभृतिभ्यः प्रदानस्य तत्फलत्वायोगात् । न च तैरपि यागाद्यनुष्ठाने ख्यातिरस्त्येवेति वाच्यम्–ख्यातेः स्वयंफलत्वाभावात् दृष्टसम्पत्पर्यवसायित्वस्य वक्तव्यत्वात् तस्याश्च ततो विरहात् । ननु त्रयीविद्याविदस्तपस्विनो बकवद्धूर्ता अर्थकामाः कथञ्चिदागत्य गृह्णन्तीति चेत्–तेषां तथात्वेऽपि स्वापेक्षितदृष्टसंपदं प्रत्यनुपयोगात् विवेकिभिर्दानविधानस्याप्रसक्तत्वात् । नन्वदाने तेऽनेकमनर्थमावहेयुरिति दीयत इति चेन्न–तेषामर्थग्रहणेन सम्पाद्यस्य कस्यचित् दृष्टस्याभावात् । यागादिना सर्वस्य तदात्व एव व्ययविधानात्; स्वयं चाम्बरभूषणाद्यडम्बरमन्तरेण कन्दमूलफलादिनैव जीवनात् । अतो दातृप्रतिग्रहीतृदृष्टसम्पदुपयुक्तत्वाभावान्न दानप्रसक्तिरिति ॥

[27] ननु मास्त्वन्या दृष्टसम्पत् ; सुखमेवोद्दिश्य तथा दानादि करोतीति चेत्—यदि ततः सुखं; नास्तिका अपि सम्भोग इव तत्र सहसा प्रवर्तन्ताम् । ननु मा भूत् फलम् ;

लोकव्यवहारसिद्धत्वादफलमपि क्रियते, वेदव्यवहारसिद्धत्वात्सन्ध्योपासनवदिति चेत्—गुरु मतमेतत्, न गुरोर्मतम्। ततो नेदमनवसर एव वक्तुमुचितम्।

[28] वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेन्न—वृद्धानामपि प्रवृत्तेः। न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते। तेऽपि वृद्धतरैरित्येवमनादिरिति चेत्—न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात्। इदंप्रथम एव कश्चिदनुष्ठायापि धूर्तः परान् अनुष्ठापयतीति चेत्—किमसौ सर्वलोकोत्तर एव; यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चन[1]कुतूहली यावज्जीवमात्मानमवसादयति? कथं चैनमेकं प्रेक्षा पूर्वकारिणोऽप्यनुविदध्युः?[2] केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः? न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः।[3] यतः पाखण्डाभिमतेष्वप्येवं दृश्यत इति चेन्न—हेतुदर्शनादर्शनाभ्यां

निष्फलेऽपि प्रवृत्तिसम्भवात्। इष्टसाधनताज्ञानं हि न साक्षात्प्रवृत्तिं प्रति कारणम्, किं तु कार्यताज्ञानद्वारा। तच्चेत्कार्यताज्ञानं प्रकारान्तरेण भवति। किमनेनेष्टेन। अत एव नित्यं सन्ध्योपासनं निष्फलमपि वेदतः कार्यत्वस्यावगतत्वात् क्रियते। तद्वदेव लोकाचारबलेन कार्यताज्ञानादत्रापि प्रवृत्तिरिति चेत्—एतत् किल नित्यस्य निष्फलत्वमतं प्रभाकरगुरुमतमिति प्रथमान्तं गुर्वेव मतम्, न वस्तुतो गुरुत्वार्हस्य मतम्। को ह्याचार्य एवमुपदेष्टुमर्हति, निष्फले प्रवृत्तिर्भवतीति। अतः कार्यत्वबाधितेऽपि श्रुतेरिष्टसाधनत्वेऽपि तात्पर्यमस्त्येव। नित्यनैमित्तिकयोश्च दुरितक्षयः फलं कण्ठोक्तमेव। अतः प्रभाकरपक्षं गृहीत्वैष पर्यनुयोगः प्रथमपक्षखण्डनावसरे कर्तव्यो न संप्रति कर्तुमुचितः॥

[28] नापि विप्रलम्भः फलम् तद्बुद्ध्योपदेशादर्शनात् स्वयं च कर्मकरणात्। ननु वृद्धैर्विप्रलब्धत्वात् फलभ्रान्त्या बालानां प्रवृत्तिरिति चेन्न—वृद्धानामपि प्रवृत्तिदर्शनात्। प्रतारणं ह्येकेनान्यस्य भवति; न स्वस्यैव। ननु तेऽपि वृद्धाः वृद्धतरैर्विप्रलब्धाः। वृद्धतराणामनुष्ठानमप्येवं तत्पूर्ववृद्धविप्रलम्भायत्तमित्येवमनादिः प्रवाह इति चेत्—एवं तर्हि स्वपूर्वपूर्वकृतोपदेशाधीनप्रवृत्तिकतयोत्तरोत्तरस्य, न कस्यापि विप्रलम्भबुद्ध्योपदेशकत्वमिति सर्वत्राविप्रलम्भकत्वमेव सिद्धम्। अथ नात्यन्तानादिः प्रवाहः; किं तु प्रथमतः कश्चिदन्योपदेशमन्तरेणैव स्वबुद्ध्या विप्रलम्भोपायमध्यवसाय पराननुष्ठापितवान्; स्वयमननुष्ठाने च परे न प्रवर्तेरन्निति जागरूकः स्वयमनुष्ठितवांश्च। तदारभ्यैष प्रवाह इति चेत्—स एष भवता सुहृदमभ्यूहितो हन्त सर्वलोकविलक्षणो

१ क धनभन. २ क. ख. प्रेक्षाकारिणः। ३ बो. अथ

विशेषात् । अनादौ चैवंभूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात् ; १ नत्वनुष्ठानागोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् ॥

लक्ष्यते । सर्वो हि लोकः स्वयमणुमात्रमपि दुःखमपारमभिमन्यमानः सर्वतोऽप्यर्थमार्जयन् समस्तबन्धुसम्भावितः सकलविधसुखोपायैदम्परः कामचारगात्रपोषणादिपरायणः सुखसमुद्रसम्मग्नतायै स्पृहयते । अयं पुनः सर्वस्वमर्थिभ्यः प्रदायाखिलं बन्धुसम्बन्धमवधूय ऐहिकसुखमल्पमप्यनिच्छन् विजितमन्मथो विशिष्टशरीरक्लेशो विश्वासभूम्ना यत् आमरणमात्मानं दुःखश्वभ्र एव धीरं पातयति, तन्नूनं केवलपरवञ्चनकुतूहलबलादितीदृशस्तावददृष्टश्रुतपूर्व एव । ईदृशस्यैकस्य विप्रलम्भकस्य वशे इमे सर्वे पूर्वे परे च प्रेक्षापूर्वकारिणः स्थिताः ; एष्वेकस्याप्ययं विवेको नोदभूदितीदमप्यद्भुतम् । एवं सर्वैरपि समकण्ठं सम्मानितोऽपि स पुरुषो भवता सर्वदेशकालवेदिना सकलजनातिशायिशेमुषीसमृद्धेन विप्रलम्भकत्वेन विशेषतः साक्षादेवाध्यक्षित इत्यद्भुततरस्ते प्रभावः । ननु प्रत्यक्षाभावेऽपि युक्त्या पर्यालोचयामीति चेत् —किमेतावतोऽर्थकामबन्धुपरित्यागदुःखनिवहादप्यतिशायितं प्रतारणसुखम् ; येन स वा तथा करिष्यति ; त्वं वा तादृशमनुमास्यसि ॥ ननु पाखण्डत्वाभिमतेषु बौद्धार्हतादिषु यत ईदृशविप्रलम्भनं दृश्यते , अतोऽनुमीयते ; अन्यथा तत्रापि प्रतारणसुखप्राबल्याभावयुक्त्या तदाचारसाधुतास्थापनप्रसङ्गादिति चेत्— न ; तत्राप्रामाणिकतायां कर्म लाघवादयो हेतवो लक्ष्यन्ते , अत्र नेति वैलक्षण्यात् । तदिदं द्वितीयस्तबके विवरिष्यते । किं च यदि परलोकफलकं बहुप्रकारं यज्ञदानादि पारम्पर्यागतं नाभविष्यत्— तदैवमनुष्ठानागोचरे सति कर्मणि बौद्धप्रभृतिकृतं प्रतारणमपि नावकाशमलप्स्यत । बहुवित्तव्ययादिसाध्यविविधवैदिककर्मानुष्ठाने सर्वतः प्रसृते तु स्वयमपि तादृंशि कर्माणि कल्पयित्वा स्वयमनुष्ठायैव कल्पितोपदेशमात्रेण तैः प्रतारणाशक्यकरणा । वैदिकश्च घण्टापथोऽयमनादिः, अन्यस्त्ववाचीनैस्तैस्तैस्तदा तदा समुत्थितैस्सहसा परिकल्पित इति निश्चप्रचमेतत् । अतो विश्वजनप्रवृत्त्यन्यथानुपपत्त्या बौद्धादिबाह्यकल्पितप्रकारान्यथानुपपत्त्या च सिद्धं वैदिककर्मणां सफलत्वम् ।

१ 'अनुष्ठानगोचरेण कर्मणा' पा० बो. 'इह दुःखात्मके कर्मणि स्वयमनुष्ठायैव परमनुष्ठापयति ; तस्मान्न प्रतारणेयमित्याह अनादाविति ....अनुष्ठानागोचरेण कर्मणेति केचित् पठन्ति । तत्रायमर्थः—यदि वैदिकानुष्ठानात् पूर्वसिद्धं किञ्चिदनुष्ठानं स्यात्—ततः पश्चात्तनं वैदिकमनुष्ठानं तत्र प्रतारणपरं स्यात् । न तु पूर्वसिद्धानुष्ठानागोचरेण कर्मणा प्रतारणं सम्भवति । सर्वत्र प्रसिद्धानुष्ठानविषयत्वात् प्रतारणस्येति' ॥

29 अस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न-क्षणिकत्वात् । अपेक्षितस्य कालान्तरभावित्वात् ।

> चिरध्वस्तं फलायाऽलं न कर्मातिशयं विना ।
> १ सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

तस्मादस्त्यतिशयः कश्चित् । ईदृशान्येवैतानि स्वहेतुबलाऽऽयातानि, येन नियतभोगसाधनानीति चेत्—तदिदममीषामतीन्द्रियं रूपं सहकारिभेदो वा ? न तावदैन्द्रियकस्यातीन्द्रियं रूपम्, व्याघातात् । द्वितीये त्वपूर्वसिद्धिः ॥

30 सिध्यतु भूतधर्म एव गुरुत्वादिवदतीन्द्रियः । अवश्यं त्वयाऽप्येतदङ्गीकरणीयम् । कथमन्यथा मन्त्रादिभिः प्रतिबन्धः । तथा हि—करतलानलसंयोगात् यादृशादेव दाहो दृष्टः, तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते; असति तु जायते । तत्र न दृष्टवैगुण्यमुपलभामहे । नापि दृष्टसाद्गुण्येऽदृष्टवैगुण्यं सम्भावनीयम् ; तस्यैताव-

---

अपि च बाह्यानां प्रमाणखण्डितत्वबोधकपाखण्डिशब्दव्यवहार्यताऽपि तेषामप्रामाणिकत्वं, एषां प्रामाणिकत्वं च व्यवस्थापयति । अतः प्रकारान्तरासंभवाद्विश्ववृत्तेर्विलक्षणफलवत्त्वं सिद्धम् ॥

29 नन्वस्तु विश्ववृत्तिसाफल्यम् । तथाऽपि तत एव दानाध्ययनादेस्तत्फलसम्भवे किमदृष्टेनेति चेन्न, दानादेः शीघ्रनाशित्वात् फलस्य च कालान्तरभावित्वात् मध्ये व्यापारस्यावश्यकल्प्यत्वात् । न हि बहोः कालात् प्रागेव ध्वस्तं कर्म स्वजन्यमतिशयमदृष्टं विना फलजनने समर्थम् । अस्तु तर्हि सः, परं तु संभूतेष्वेवेति चेन्न, आत्मनां निर्विशेषत्वे भूतानां संस्कृतत्वेऽपि सम्यग्व्यवस्थितभोगासम्भवात् । अतः प्रत्यात्मनियमाद्भुक्तेरस्त्येवात्मन्यतिशयः । ननु येनातिशयेन नियतभोगसाधनानि भवेयुः एवम्भूतातिशयरूपाण्येवेमानि भूतानि स्वहेतुबलेन क्रियन्त इति चेत् सोऽयमतिशयोऽतीन्द्रियत्वेनाभिमतः किं कारण-कारणतावच्छेदकजात्यन्यतरात्मकं रूपमुत भूतानां सहकारी ? नाद्यः, इन्द्रियग्राह्यरूपस्यातीन्द्रियत्वासम्भवात् । अन्त्ये तु अन्यनिष्ठस्यापि सहकारित्वासम्भवादात्मनिष्ठादृष्टसिद्धिः ।

30 ननु कर्मजन्योऽयं भूतनिष्ठ एवास्तु कश्चित् । तस्यातीन्द्रियत्वं तु गुरुत्वशक्त्यादिवत् । गुरुत्वस्यावयविगतस्यावयवगुणमात्रजन्यस्य यावदाश्रयभाविनोऽन्यादृशप्रकृतातिशयापेक्षया वैलक्षण्येऽपि शक्तिस्तुल्यरूपा सम्यग्दृष्टान्तः । अतो मन्त्रादिकृतदाहप्रतिबन्धान्यथानुपपत्त्याऽग्न्यादौ शक्तेस्त्वयाऽपि स्वीकार्यत्वेन, तद्वदेवास्यापि भूतनिष्ठत्वमुपपद्यते । न च तत्रापि शक्ति-

---

१ 'सम्भाग' इति पाठः क. ख. पु. दृश्यते । (भोग) संविभाग इत्यर्थोऽपि घटते । परं तु उपरितनपाठो व्याख्यातृसम्मतः ।

भावकार्यत्वात् । अन्यथा, कर्मण्यपि विभागः कदाचिन्न जायेत । न च प्रतिबन्धकाभावविशिष्टा सामग्री कारणम् ; अभावस्याकारणत्वात् । तुच्छो ह्यसौ । प्रतिबन्धकोत्तम्भकप्रयोगकाले च तेन विनाऽपि कार्योत्पत्तेः । प्राक्प्रध्वंसादिविकल्पेन चानियतहेतुकत्वापातात् । अकिञ्चित्करस्य प्रतिबन्धकत्वायोगात् ; किञ्चित्करत्वे चातीन्द्रियशक्तेः स्वीकारात् । मन्त्रादिप्रयोगे चेतरेतराभावस्य सत्त्वेऽपि कार्यानुदयात् । अतोऽतीन्द्रियं किञ्चिद्दाहानुगुणमनुग्राहकमपेक्ष्यते, यस्यापकुर्वतां प्रतिबन्धकत्वमुपपद्यते ; यस्मिन्नविकले कार्यं जायते १ यस्यैकजातीयत्वादनियतहेतुकत्वं निरस्यत इति ॥

[31] अत्रोच्यते—

भावो यथातथाऽभावः कारणं कार्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥

---

मस्वीकृत्य अदृष्टरूपकारणाभावादेव दाहासिद्धिः सम्भावनीया ; अदृष्टस्य सकलकारणमेलनमात्रफलकत्वेन सति दृष्टकारणकलापे कार्यविरहायोगात् । अन्यथा कर्मजन्यस्य विभागस्य कर्मणि सत्यपि कदाचिदजननप्रसङ्गात् । न च मण्यभावः कारणम् ; अभावस्य तुच्छत्वेन कारणत्वायोगात् ; प्रतिबन्धकोत्तेजकसमावेशे च कार्यसिद्ध्या मण्यभावस्य व्यभिचरितत्वाच्च ; प्रागभावस्य, प्रध्वंसस्यात्यन्ताभावस्य च पृथक्पृथक्कारणत्वे व्यभिचाराच्च । किञ्च मणेः प्रतिबन्धकरूपकिञ्चिज्जनकत्वं स्वीक्रियते , न वा ; न चेत्-प्रतिबन्धकत्वं न सिद्ध्येत् । आद्ये तु प्रतिबन्धस्य शक्तिनाशरूपतया तत्प्रतियोगिभूतशक्तिः स्वीकृतैव भवति । अतोऽभावकारणत्वासम्भवात् प्रतिबन्धकत्वस्यान्यथानुपपत्त्या च शक्तिसिद्धिः । प्रागभावादेरभावत्वेनानुगतरूपेण कारणत्वस्वीकारेण व्यभिचारपरिहारे तु मणिसत्त्वेऽप्यग्नौ मणिभेदरूपाभावसत्त्वाद्दाहापत्तिः । अतोऽग्नेः सहकारि किञ्चिदस्तीति कल्प्यम् । तद्विनाशका एव प्रतिबन्धकपदवाच्याः । तस्मिन् सत्येव दाहः । तस्य च शक्त्यपरपर्यायस्य नश्यतो जायमानस्य च भिन्नभिन्नत्वेऽप्यनुगतरूपेण कारणत्वाङ्गीकारान्न व्यभिचारः । अतस्तन्न्यायेन यागादिजन्योऽतिशयोऽपि भूतेष्वेवेति चेत्—

31 न दृष्टान्तासिद्धेः । न तावदभावकारणत्वायोगः, अन्वयव्यतिरेकरूपयत्प्रकारवत्तया भावस्य कारणत्वम् , तत्प्रकारवत्तयाऽभावस्य कारणत्वं मनने क्रियमाणे सिद्धम् । कार्यवदिति । यथा तुच्छत्वेऽप्यभावः कार्यं, तद्वत्कारणमपीत्यर्थः । नापि प्रतिबन्धकत्वान्यथानुपपत्तिः ,

---

१ प्र. 'शक्तेः प्रदेशान्तरेप्युपयोगमाह यस्येति । तृणादीनां व्यभिचारात्कारणत्वमनुपपद्यमानमनुगतसामर्थ्यं .... .... .... कल्पयतीति ।'

न ह्यभावस्याकारणत्वे प्रमाणमस्ति। न हि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा ; निषेधरूपाभावे विधेरपि(रेव) तुच्छत्वप्रसङ्गात्। कारणत्वस्य भावत्वेन व्याप्तत्वात्तन्निवृत्तौ तदपि निवर्तत इति चेन्न— परिवर्तप्रसङ्गात्। अन्वयव्यतिरेकानुविधानस्य च कारणत्वनिश्चयहेतोर्भाववदभावेऽपि तुल्यत्वात्। अभावस्यावर्जनीयतया सन्निधिः, न तु हेतुत्वेनेति चेत्—तुल्यम्। प्रतियोगिनमुत्सारयतस्तस्यान्यप्रयुक्तस्सन्निधिरिति चेत्—तुल्यम्। भावस्याभावोत्सारणं स्वरूपमेवेति चेत्—अभावस्यापि भावोत्सारणं स्वरूपान्नातिरिच्यते। तस्मात् यथा 'भावस्यैव भावो जनक' इति नियमोऽनुपपन्नः, तथा 'भाव एव जनक' इत्यपि। को ह्यनयोर्विशेषः॥

---

न हि वयं मणिं प्रतिबन्धकं ब्रूमः, किं तु प्रतिबन्ध एव सः। प्रतिबन्धो नाम सामग्रीविरहः। प्रतिबन्धकत्वं तद्विरहहेतुत्वं मणिसन्निधापकानां पुरुषाणामेव। अतो न शक्तिसिद्धिरिति।

तथा हि—अभावस्याकारणत्वे किं प्रमाणम् ; तुच्छत्वं प्रमाणमिति चेत्—किमिदं तुच्छत्वम् ? न तावत् सर्वात्मनाऽसत्त्वम् ; तस्य शशशृङ्गादावनुपाख्य एव सम्भवात्, (विधिना भावत्वेन रूपेण) विधेर्भावस्य रूपेण भावत्वेन तस्यासत्त्वेऽप्यभावत्वेन रूपेण सत्त्वात्सर्वात्मनाऽसत्त्वासम्भवात्। किञ्चिद्रूपेणासत्त्वेऽपि तुच्छत्वस्वीकारे निषेधस्याभावस्य रूपेणाभावत्वेनासत्त्वात् भावेऽपि तुच्छत्वप्रसङ्गादुक्तानुमाने व्यभिचारः। नन्वभावो न कारणं भावत्वाभावादित्यनुमानेनाकारणत्वसिद्धिः। अत्र च व्यतिरेकव्याप्तिः कारणत्वव्यापकत्वस्य भावत्वे दर्शनादिति चेन्न—भावो न कारणं अभावत्वाभावादिति अभावत्वस्य कारणत्वव्यापकत्वाङ्गीकारेणानुमानसम्भवात्। नन्वन्वयव्यतिरेकाभ्यां भावे कारणत्वनिश्चयादभावत्वे कारणत्वव्यापकत्वं नास्तीति चेत्—मण्यभावादावप्यन्वयव्यतिरेकाभ्यां कारणत्वनिश्चयाद्भावत्वेऽपि कारणत्वव्यापकत्वाभावेन पूर्वानुमानभङ्गात्। ननु मण्यभावस्यान्वयव्यतिरेकशालित्वेऽपि घटं प्रति दण्डत्वादेरिवानपेक्षायामप्यवर्जनीयः सन्निधिरित्यन्यथासिद्धत्वान्न कारणत्वमिति चेत्—तुल्यरीत्या भावेष्वप्यवर्जनीयसन्निधित्वेनान्यथासिद्धेस्सुवचतया कारणत्वानिश्चय एव। ननु मण्यभावस्य मणिरूपप्रतियोग्यपनयनार्थं सन्निधिः, न दाहोत्पादनार्थमित्यन्यथासिद्धिर्युक्तेति चेत्—भावस्यापि स्वाभावापनयनार्थमेव सन्निधिः। स्वाभावे सति कार्यादर्शनादित्यन्यथासिद्धिस्तुल्यैव। ननु किमिदं स्वाभावापनयनं नाम ? अन्ततः स्वाभावाभाव एव। स च भाव एवेति भावकारणत्वमत्याज्यमिति चेत्— मण्यपनयनमप्यन्ततो मण्यभाव एवेति सिद्धं तस्यापि कारणत्वम्। किं च कारणत्वव्यापकतायाः भावत्वेऽङ्गीकारे तुल्ययुक्त्या कार्यत्वव्यापकत्वस्यापि तत्र सम्भवादभावस्य ध्वंसस्य कार्यत्वमपि न सिद्ध्येत्, विशेषाभावात्। अतः कार्यत्ववत् कारणत्वस्याप्यभावे सिद्धिरिति।

[32] प्रतिबन्धकोत्तम्भकप्रयोगकाले तु व्यभिचारस्तदा स्यात् ; यदि यादृशे सति कार्यानुदयः, तादृश एव सति उत्पादः स्यात् । न त्वेवम् ; तदाऽपि प्रतिपक्षस्याभावात् । असत्प्रतिपक्षो हि १ प्रतिबन्धकाभिमतो मन्त्रः प्रतिपक्षः । स च तादृशो नास्त्येव । यस्त्वस्ति, नासौ प्रतिपक्षः । तथापि विशेष्ये सत्येव विशेषणमात्राभावस्तत्र ; स चोत्तम्भकमन्त्र एवेत्यन्यैव सामग्रीति चेत्—न, विशिष्टस्याप्यभावात् । न हि दण्डिनि सति अदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैव केवलस्येति युक्तम् । यथा हि केवलदण्डसद्भावे, उभयसद्भावे, द्वयाभावे वा केवलपुरुषाभावः सर्वत्राविशिष्टः, तथा

---

[32] ननु मण्यभावो न कारणं, मणिसत्त्वेऽप्युत्तेजके सति दाहदर्शनादिति चेत्—यादृशस्य मणेः प्रतिपक्षत्वमस्मदिष्टं, तादृशस्य सत्त्व एव दाहोत्पादे हि व्यभिचारः स्यात् । न ह्युत्तेजकदशायां दाहोत्पादस्तादृशमणिसत्त्वकालिकः, तादृशमणेरभावात् । यो हि युष्माभिः प्रतिबन्धकत्वेनाभिमतः (वस्तुत उत्तेजकाऽऽहितशक्तेस्तद्दशायामनाशकत्वेनासम्भावितप्रतिबन्धजनकताकः अत एव उत्तेजकाभावविशिष्टमणित्वेन युष्माभिः कल्पनीयप्रतिबन्धकताकः) अस्मन्मते च पुंसामेव प्रतिबन्धकतया कारणीभूताभावप्रतियोगित्वमात्रेण प्रतिपक्ष इत्येवोच्यमानः, स तावन्न केवलमण्यादिः, किंतु यस्य स्वप्रतिपक्षःस्वविरोधी उत्तेजकोऽसन्, तादृश एव । सोऽयमुत्तेजकाभावविशिष्टमणिस्तदानीं नास्ति । ननु तथाऽप्युत्तेजकमण्युभयसत्त्वे भवन्नुत्तेजकाभावविशिष्टमण्यभाव उत्तेजकाभावरूपविशेषणाभाव एव ; स चोत्तेजकमेवेति कदाचिदुत्तेजकं कदाचिन्मण्यभावः कारणमिति सामग्रीद्वयमुक्तं भवति, न त्वनुगतः कार्यकारणभाव इति चेन्न—सामग्र्या एकत्वात् । न हि विशिष्टाभावो विशेषणाभाव एव । तथा सति दण्डाभावविशिष्टपुरुषाभावोऽपि दण्डाभावाभाव एव स्यात् । तच्च न युक्तम् । दण्डविशिष्टपुरुषे वर्तमाने 'दण्डाभावविशिष्टपुरुषो नास्ती'ति प्रतीयमानेऽभावे प्रतियोगिकोटौ दण्डाभावस्येव दण्डाभावविशिष्टपुरुषाणामपि प्रतियोगितया भाने स्पष्टे सति, 'अयमभावो दण्डाभावमात्रस्य, न त्वदण्डानामपी'ति न हि युक्तं वक्तुम् । तस्मात् केवलपुरुषाभावो दण्डाभावविशिष्टपुरुषाभावः, दण्डमात्रसद्भावे विशेषणविशेष्योभयाभावाद्भवति, दण्डपुरुषोभयसद्भावे च विशेषणमात्राभावात्, तदुभयाभावे च विशेष्याभावमात्रादित्यनेकत्र प्रतीयमाने विशिष्टाभावे वर्तमानं विशिष्टाभावत्वं विशेषणमात्राभाववृत्तिधर्मातिरिक्तमिति निश्चेयम् । तद्वत् उत्तेजकाभावविशिष्टमण्यभावत्वमप्यतिरिक्तम् । तेन रूपेण च कारणत्वमिति । ननु किमर्थमयं क्लेशः,

---

१. प्र. 'प्रतिबन्ध एव प्रतिबन्धकः । स्वार्थे कः । तत्त्वेनाभिमत इत्यर्थः । अतो न विरोधः ।'

**केवलोत्तम्भकसद्भावे, प्रतिबन्धकोत्तम्भकसद्भावे, द्वयाभावे वा केवलप्रतिबन्धका-भावोऽविशिष्ट इत्यवधार्यताम् । अथैवंभूतसामग्रीत्रयमेव किं नेष्यते ? कार्यस्य तद्व्यभि-चारात् ; जातिभेदकल्पनायां च प्रमाणाभावात् ; यथोक्तेनैवोपपत्तेः । भावे वा काम-मसावस्तु ; का नो हानिः ।**

**[33] प्राक्प्रध्वंसविकल्पोऽपि नानियतहेतुकत्वापादकः, यस्मिन् सति कार्यं न जायते, तस्मिन्नसत्येव जायत इति, अत्र संसर्गाभावस्यैव प्रयोजकत्वात् । यस्तु संसर्गाभाव-तादात्म्यनिषेधयोर्विशेषमनाकलयन्नितरेतराभावेन प्रत्यवतिष्ठते, स प्रतिबोधनीयः । तथाऽप्यभावेषु जातेरभावात् कथं त्रयाणामुपग्रहः स्यात् ; अनुपगृहीतानां च कथं कारणत्वावधारणमिति चेत्—मा भूज्जातिः । न हि तदुपगृहीतानामेव व्यवहाराङ्ग-त्वम् । सर्वत्रोपाधिमद्व्यवहारविलोपप्रसङ्गात् ।**

---

विशेषणाभाव-विशेष्याभावोभयाभावानां त्रयाणां पृथगेव कारणत्वमस्त्विति चेन्न —दाहत्वरूप-कार्यतावच्छेदकैक्यव्यभिचारापत्तेः । न च तृणारणिमणिस्थल इव कार्यवैजात्यं कल्प्यतामिति शङ्क्यम्— तत्र तृणाद्यनुगतानतिप्रसक्तधर्माभावात्तथा कल्पनेऽपि प्रकृत उक्तरीत्या तल्लाभाद्वैजात्य-कल्पनायोगात् । अभ्युपेत्य च ब्रूमः-प्रमाणसद्भावे, स्यात् कामं जातिभेदः । अथापि शक्त्य-सिद्ध्या तवैव हानिरिति ॥

[33] न च प्राक् प्रध्वंसादिविकल्पाद्व्यभिचारस्य दुष्परिहरत्वम् ; 'अत्र नास्ती'ति प्रतीतिगम्येन संसर्गाभावत्वेनानुगतरूपेण कारणत्वस्वीकारात् । यस्त्वाक्षिपति, 'संसर्गाभावत्वं नाम न सम्बन्ध-प्रतियोगिकाभावत्वं सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं वा; ध्वंसे प्रागभावे च तदनङ्गीकारात् ; अन्योन्याभावस्यापि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतयाऽतिप्रसङ्गाच्च । अतः प्रागभावादि-साधारणं संसर्गाभावत्वमभावत्वमेवेति मणिसत्त्वेऽपि तद्भेदात्मकाभावसत्त्वाद्दाहापत्ति'रिति—स एव-मन्योन्याभावव्यावृत्तं संसर्गाभावत्वं बोधनीयः, 'वृत्तिनियामकसम्बन्ध एव लोके स्वरसतः संसर्ग इति व्यवह्रियते । तादात्म्यं च न तादृशम् । स च वृत्तिनियामकसम्बन्ध आधाराधेय-भावप्रतिपादकेन 'अस्ति'पदेन सप्तम्या चावगम्यते, यथा—अत्र घटोऽस्तीति । एवं सप्तम्यादि-निर्देशेन प्रदर्श्यमानोऽभावः संसर्गाभावः । स च त्रितयात्मकः ; अत्र घटो नास्तीत्येकरूपेण त्रयाणां यथायथं प्रतीतेः । अन्योन्याभावस्तु 'इदमिदं न भवती'त्येवं बोध्यमानः । अतः संसर्गबोधकपदनिर्देशप्रयोजकीभूताभावत्वं संसर्गाभावत्वम् । तादात्म्यसम्बन्धानवच्छिन्नप्रतियो-गिताकाभावत्वं संसर्गाभावत्वमिति तु प्रसिद्धमेव ; अतो न कश्चिद्दोष इति । न च तथाऽपि द्रव्यगुणकर्मणामिव जातिमत्त्वात् निरुक्तधर्मस्य जातित्वाभावात्कथं तेन त्रितयकोडीकरणमिति

[34] एते (अने)न प्रतिबन्धके सत्यपि तज्जातीयान्यस्याभावसम्भवात् कार्योत्पादप्रसङ्गः, अनुत्पादे वा ततोऽप्यधिकं किञ्चिदपेक्षणीयमस्तीति निरस्तम्। यथा हि 'तज्जातीये सति कार्यं जायते, अर्थात् असति न जायते' इति स्थिते तद्भावेऽपि तज्जातीयान्तराभावान्न भवितव्यं कार्येणेति १ न, तथैतदपि ; अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिञ्चित्करत्वादिति ॥

[35] यत्तु 'अकिञ्चित्करस्ये'ति-तदप्यसत्। सामग्रीवैकल्यं प्रतिबन्धपदार्थो मुख्यः। स चात्र मन्त्रादिरेव। न त्वसौ प्रतिबन्धकः। ततः किं तस्याकिञ्चित्करत्वेन ? तत्प्र-

---

वाच्यम्-भूतत्वमूर्तत्वाद्युपाधिविशिष्टतयाऽपि वस्तूनामनुगतव्यवहारविषयत्वदर्शनेन जातित्वाभावेऽप्यदोषात् ॥

[34] ननु मण्यभावस्य कारणत्वे एकस्मिन् मणौ सत्यप्यन्यस्य तज्जातीयस्य मणेरभावसत्त्वाद्दाहापत्तिः। तत्र दाहानुत्पादे तु मण्यभावतोऽतिरिक्तं कारणं स्वीकर्तव्यमापतितमिति चेत्-इदमुक्तेन व्यवहारविलोपप्रसङ्गेनैव निरस्तम्। न ह्येकस्मिन् मणौ सति मणिर्नास्तीति व्यवहारो लोके भवतीति। एकव्यक्तिमात्रसत्त्वेऽपि कारणत्ववत् प्रतिबन्धकत्वस्यापि सम्भवात्। कपाले सति घटो जायत इत्युक्तौ अर्थात् कपालाभावे घटो न भवतीति व्यतिरेकोऽपि सिद्ध्यति। एतस्मिन् स्थिते, 'तर्ह्येककपालसत्त्वेऽपि कपालान्तरासत्त्वात् कार्यं मा भू'दिति प्रश्नो यथा न भवति; तथैवैकप्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकान्तरासत्त्वात्कार्यं भवत्वित्यपि न भवति ; कारणवत् प्रतिबन्धकेऽप्येकस्मिन् सति अन्यासत्त्वस्याप्रयोजकत्वात्। अतो यत्र प्रतिबन्धकं नास्तीति सामान्याभावस्तत्रैव कार्यमिति ॥

[35] यत्तु शक्त्यस्वीकारे मन्त्रादेः प्रतिबन्धकत्वं न घटत इति—तदिष्टमेव। प्रतिबन्धपदमुख्यार्थो हि सामग्रीविरहः। प्रकृते च मण्याद्यभावविरहरूपः प्रतिबन्धो मण्यादिरेव। प्रतिबन्धकत्वं तु मण्यादिसन्निधापकानां पुंसामेव। ते च सन्निधापनकरत्वात् किञ्चित्करा एवेति। एकदेशिनस्तु 'प्रतिबन्धः कार्यानुत्पादः, तत्प्रयोजकत्वरूपं प्रतिबन्धकत्वमेव मण्यादेरित्याहुः। तन्न, मणौ मुख्यस्य प्रतिबन्धकत्वस्यासिद्धेरुपचारस्यैवाश्रयणीयत्वात्। तथा हि—कार्यस्यानुत्पादो नाम किं कार्यप्रागभावः उत कार्यप्रागभावस्य कालान्तरसम्बन्धः। आद्ये प्रागभावस्यानादित्वात् मणेस्तदजनकत्वादप्रतिबन्धकत्वं सिद्धम्। नान्त्यः, कालशब्दमुख्यार्थस्य महाका-

---

१ नञ् क पु. नास्ति। 'यथा तथे'ति साजात्यमयुक्तत्वेन रूपेण विवक्षितं चेत् तदभावेऽपि न दोषः। प्र. 'यथा .... ....बीजान्तराणामभावादङ्कुरेण न भाव्यमित्युक्तम्, तथैतदपीत्यर्थः' इति।

योकारस्तु प्रतिबन्धारः ; ते च किञ्चित्करा एवेति किमसमञ्जसम् ॥ ये तु व्युत्पादयन्ति; 'कार्यानुत्पाद एव प्रतिबन्ध' इति-- तैः १ 'प्रतिबन्धमकुर्वन्त एव प्रतिबन्धकाः' इत्युक्तं भवति । तथा हि-कार्यस्यानुत्पादः प्रागभावो वा स्यात् , तस्य कालान्तरप्राप्तिर्वा । न पूर्वः , तस्यानुत्पाद्यत्वात् । न द्वितीयः , कालस्य स्वरूपतोऽभेदात् । तदुपाधेस्तु मन्त्रमन्तरेणापि स्वकारणाधीनत्वात् । प्रागभावावच्छेदककालोपाधिस्तदपेक्ष इति चेन्न—मन्त्रात्पूर्वमपि तस्य भावात् । तस्मात् सामग्रीतत्कार्ययोः पौर्वापर्यनियमात्तदभावयोरपि पूर्वापरभाव उपचर्यते ; वस्तुतस्तु तुल्यकालत्वमेवेति नायं पन्थाः ।

[36] न चेदेवं, शक्तिस्वीकारेऽपि कः प्रतीकारः ? तथा हि प्रतिबन्धकेन शक्तिर्वा विनाश्यते, तद्धर्मो वा, धर्मान्तरं वा जन्यते, न जन्यते वा किमपीति पक्षाः । तत्रा-

---

लस्यैकत्वात् कालान्तरेत्यस्य दुर्वचत्वात् । वस्तुतः कालस्यैकत्वेऽपि तदुपाधीनां भिन्नत्वात् पूर्वोपाधिभिन्नोपाधिसम्बन्ध एव कालान्तरप्राप्तिरिति चेत् —उपाधिसम्बन्धस्यापि कालिकस्वरूपसम्बन्धतयोपाधिस्वरूपत्वात्तादृशोपाधिजनकत्वमेव प्रतिबन्धकत्वं वक्तव्यम् । तच्च न सम्भवति, उपाधीनां सूर्यपरिस्पन्दादिरूपाणां सूर्यादिकारणायत्तत्वेन प्रकृतमणिमन्त्रायत्तत्वाभावात् । ननु तेषां परिस्पन्दत्वादिना मण्याद्यजन्यत्वेऽपि, यादृश कालोपाध्यवच्छेदेन दाहप्रागभावः , तादृशप्रागभावावच्छेदकोपाधित्वेन रूपेण मण्यादिजन्यत्वमिष्यत इति चेन्न—मण्यादेः पूर्वमपि प्रागभावावच्छेदकोपाधिसत्त्वेन तत्त्वस्यापि कार्यतानवच्छेदकत्वात् । तस्मान्मण्याद्यभावस्य दाहं प्रति कारणत्वात् तयोर्दाहमण्याद्यभावयोर्यः कार्यकारणभावः , स एव तदभावयोरारोप्यते । आरोप्य च मण्याद्यभावाभावाद्दाहाभाव इति व्यवह्रियते । एवमेव कारणाभावात् कार्याभाव इति व्यवहारः सर्वत्र । न तु कार्याभावः कारणाभावकालावृत्तिः । अतः मण्यभावाभाव मणौ प्रागभावात्मकदाहानुत्पादजनकत्वमौपचारिकमिति , नायं पन्था वस्तुतत्त्वशोधनावसरेऽनुसर्तव्यः । अतो मणिः प्रतिबन्धः ; प्रतिबन्धकस्तु पुरुष इत्येव मुख्या रीतिः ॥

[36] मीमांसकैरपि यदि मन्त्रादेरमुख्यं प्रतिबन्धकत्वं अभावस्य कारणत्वं वा नेष्यते, किन्तु शक्तिरेव स्वीक्रियते, तदाऽप्यनियतहेतुकत्वप्रयुक्तस्य व्यभिचारस्य परिहारः कथम् ? तथा हि-—प्रतिबन्धकत्वं किं वह्निगतदाहानुकूलशक्तिनाशजनकत्वं, यद्वा तादृशशक्तिनिष्ठदाहानुकूल्यरूपधर्मनाशजनकत्वं, आहो दाहप्रतिकूलधर्मजनकत्वं, किं वा किञ्चिज्जनकत्वस्यैवास्वीकारेणौपचारिकं दाहानुत्पादहेतुत्वमिष्यते । तत्र चतुर्थपक्षे प्रतिबन्धकत्वममुख्यम् । अतोऽकिञ्चित्करतया मुख्यप्रतिबन्धकत्वायोगाच्चतुर्थपक्षास्वीकारे विपरीतधर्मजनकत्वरूपतृतीयपक्षावलम्बने, तादृशप्रतिकूलधर्मे

---

१. प्रतिबन्धनिरूपितमुख्यजनकताशून्या एव प्रतिबन्धकशब्दार्था इति तैरुक्तप्रायमित्यर्थः ।

किञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तेः विपरीतधर्मान्तरजनने, तदभावे सत्येव कार्यमित्यभावस्य कारणत्वस्वीकारः, प्रागभावादिविकल्पावकाशश्च । तद्विनाशे तद्धर्मविनाशे वा पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वम् ; पूर्वं स्वरूपोत्पादकात्, इदानीमुत्तम्भकादुत्पत्तेः । न च समानशक्तिकतया तुल्यजातीयत्वान्नैवमिति साम्प्रतम् ; विजातीयेषु समानशक्तिनिषेधात् । न च प्रतिबन्धकशक्तिमेवोत्तम्भको विरुणद्धि , न तु भावशक्तिमुत्पादयतीति साम्प्रतम् ; तदनुत्पादप्रसङ्गात् । कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वमिति ॥

[37] स्यादेतत्—मा भूत्सहजशक्तिः ; आधेयशक्तिस्तु स्यात् । दृश्यते हि प्रोक्षणादिना व्रीह्यादेरभिसंस्कारः । कथमन्यथा कालान्तरे तादृशानामेव कार्यविशेषोपयोगः । न च मन्त्रादीनेव सहकारिणः प्राप्य ते कार्यकारिण इति साम्प्रतम्–तेषु चिरध्वस्तेष्वपि

---

सति न दाहः, असति दाह इति तादृशधर्माभावस्य दाहं प्रत्यपेक्षितत्वात् अभावकारणत्वापातः ; एवं प्रागभावादिविकल्पेन व्यभिचारोऽप्यनुगतसंसर्गाभावत्वास्वीकारे आपतति । अतस्तृतीयपक्षमप्युपेक्ष्य शक्तिविनाश-शक्तिधर्मविनाशरूपपक्षद्वयावलम्बने मणिमात्रसमवधाने तन्नाशात्पुनरुत्तेजकेनापि कार्यं न स्यादिति नष्टस्योत्तेजकेन पुनरुत्पादस्वीकारे, पूर्वमुत्तेजकानपेक्षं वह्निस्वरूपोत्पादकसामग्रीबलात्तदुत्पादात् , इदानीं मन्त्रादिना तन्नाशानन्तरमुत्तेजकबलात्तदुत्पादाच्च तत्रानियतहेतुकत्वमवर्जनीयम् । न च सामग्र्यामुत्तेजके चानुगतैकशक्तिस्वीकारान्न व्यभिचार इति युक्तम् । तृणारणिमणिविचारावसर एव विजात्येकशक्तेर्निरासात् । न च प्रतिबन्धकगतशक्तिनाशकत्वमेवोत्तेजकस्य , न तु वह्निशक्त्युत्पादकत्वमिति वाच्यम् —तर्हि शक्तिरूपकारणाभावादुत्तेजककाले दाहानुत्पादप्रसङ्गात । ननु तन्नोत्तेजकसमवधानकाल एव हेतुरिति चेत् —तर्हि कदाचिच्छक्तिः कारणम् दाहं प्रति, कदाचित् स काल इत्यनियतहेतुकत्वमेव । अतः शक्तिस्वीकारेऽनियतहेतुकत्वापातात् तृतीयचतुर्थपक्षावलम्बनमेव युक्तमिति सिद्धमभावकारणत्वं अमुख्यप्रतिबन्धकत्वं वा । न च मुख्यप्रतिबन्धकत्वनिर्वाहाय तृतीयपक्ष एवेष्यत इति वाच्यम् । प्रतिबन्धकजनित विपरीतधर्मेऽपि कदाचित् प्रतिबन्धकत्वव्यवहारसम्भवेन तत्रैव सर्वत्र मन्त्रादावमुख्यत्वसम्भवादतीन्द्रियधर्मोत्पत्तिकल्पने गौरवात् । अतस्तुर्य एव ज्येष्ठ इति ॥

[37] ननु सामग्रीबलाद्वह्निना सह जायमानतया शक्तिशब्दव्यपदेश्या शक्तिर्मा भूत् दृष्टान्तः, पूर्वसिद्धेषु व्रीहिषु पश्चात् प्रोक्षणादिभिराधातव्या शक्तिर्दृष्टान्तः स्यात् । अवश्यमियमङ्गीकार्या ; व्रीहीन् प्रोक्षतीत्यादिश्रुतौ द्वितीयया व्रीह्यादेः प्रोक्षणादिसंस्कार्यत्वदर्शनात् । तत्र शक्त्यभावे प्रोक्षिताप्रोक्षितवैलक्षण्याभावेन प्रोक्षितानामेव पश्चादभ्युपगतः पुरोडाशतत्साध्ययागादावुपयोगो न स्यात् , व्रीह्यन्तरेणापि तत्सम्पादनसम्भवात् । न च मन्त्रोच्चारणप्रोक्षणादीनि

**कार्योत्पादात् । नापि प्रध्वंससहायास्ते तथा ; एवं हि यागादिप्रध्वंसा एव स्वर्गादी-नुत्पादयन्तु ; कृतमपूर्वकल्पनया । तेषामनन्तत्वादनन्तफलप्रवाहः प्रसज्यत इति चेत्— अपूर्वेऽपि कल्पिते तावानेव फलप्रवाह इति कुतः ? अपूर्वस्वाभाव्यादिति चेत्—तुल्यमिद-मिहापि । तावताऽपि तत्प्रध्वंसो न विनश्यतीति विशेषः ॥**

[38] **स्यादेतत्—'उपलक्षणं प्रोक्षणादयः ; न तु विशेषणम् । तथा चाविद्यमानैरपि तैरुपलक्षिता व्रीह्यादयस्तत्र तत्रोपयोक्ष्यन्ते , यथा गुरुणा टीका ; कुरुणा क्षेत्रम्— इति चेत्— तदसत् । न हि स्वरूपव्यापारयोरभावेऽप्युपलक्षणस्य कारणत्वं कश्चिदिच्छ-ति ; अतिप्रसङ्गात् । व्यवहारमात्रं तु तज्ज्ञानसाध्यम् , न तु तत्साध्यम् । तज्ज्ञान-**

---

शक्तिमनुत्पाद्यैव सहकारिकारणानि भवन्तु ; अलं शक्त्येति वाच्यम्—तेषां क्रियारूपतया प्रागेव ध्वस्ततया स्वरूपेण कारणत्वायोगात् । न च प्रोक्षणादिध्वंससहकृता एव व्रीह्यादयः कार्यकारिण इति वाच्यम्——तथा सति प्रोक्षणादिसन्निपत्योपकारकस्थल इव यागादिकर्मणामपि स्वध्वंसद्वारैव स्वर्गादिसाधनत्वसम्भवात् परलोकसाधनादृष्टस्य संप्रति सिषाधयिषितस्यासिद्ध्यापत्तेः । ननु ध्वंसानामविनाशित्वात् तेषां व्यापारत्वे कारणसत्त्वात्पुनः पुनः फलप्रसङ्ग इति चेन्न——अपूर्वकल्पनेऽपि तस्य द्विक्षणस्थायिबहुसुखसन्तानजनकतया तावानेव फलप्रवाहः, न तदुपरीति व्यवस्थापकं किमिति प्रश्नसम्भवात् । नन्वपूर्वस्य तदनन्तरमभावादेव न फलापत्तिः । न च क्षणिक-प्रथमसुखमात्रेणाविनश्य तावत्कालानुवृत्तिवत् तदनन्तरमनुवृत्तिः कुतो नेति शङ्क्यम्—अस्मात् कर्मण एतावत्कालानुभाव्यं फलमित्थं भवतीत्यस्य प्रमाणप्रतिपन्नतया तत्तन्नियतकालफलजनकत्वे-नैव तत्तदपूर्वस्य कल्पितत्वात् । अतस्तावत् फलजनकत्वमेव तस्य स्वभाव इति तत एव फल-प्रवाहव्यवस्थेति चेत्—तुल्यमिदं ध्वंसेऽपि ; यागादिजन्यतया प्रमिततावत्फलप्रवाहजनकत्वेनैव तस्य व्यापारतायाः स्वीकृतत्वात् । परं त्वपूर्वस्य भावकार्यतया तज्जन्यफलप्रवाहान्तर्गतान्तिम-फलेन तन्नाशः , प्रध्वंसस्तु तावत्फलप्रवाहैकजनकोऽपि ततो न विनश्यतीत्यपूर्वादस्य विशेषः । अतो ध्वंसस्य व्यापारत्व एवमनुपपत्त्यभावात् प्रकारान्तरेणैव तत्तात्व्यापारकत्वोपपादनेन यागादि-जन्यापूर्वसम्मतिरिति तद्वदेव प्रोक्षणादेरपि न ध्वंसव्यापारकत्वमिति ॥

[38] ननु सत्यं न ध्वंसव्यापारकत्वम् ; अथाप्यतिशयमन्तरेणैव प्रोक्षणादिस्थले निर्वाहः । तथा हि-प्रोक्षिताप्रोक्षितसाधारण्येन व्रीहीणां यागान्वयव्यावृत्तौ हि प्रोक्षणादेरुपयोगः । तत्र नष्टस्यापि विशेषणविधया तस्य व्रीह्यन्तरव्यावर्तकत्वासम्भवेऽप्युपलक्षणतया व्यावर्तकत्वं घटते । एवं च कृतप्रोक्षणैरेव व्रीहिभिर्यागः साध्य इति शास्त्रतोऽवगमान्न व्रीह्यन्तरग्रहणप्रसक्तिः । यथा गुरुणा प्रभाकरेण संप्रत्यवर्तमानेनाप्युपलक्षिता तत्कर्तृका शाबरभाष्यटीका गुरुटीकेति व्यवहारे

मपि स्वकारणाधीनम् । न तु तेन निरन्वयध्वस्तेन जन्यते । (अस्तु तावत्) अस्तु वा तत्राप्यतिशयकल्पना ; किमवच्छिन्नम् ? यद्वा यागादेरप्युपलक्षणत्वमस्तु । तदुपलक्षितः कालो यज्वा वा स्वर्गादि साधयिष्यति कृतमपूर्वेण ॥

[39] न च देवदत्तस्य स्वगुणाकृष्टाः शरीरादयो भोगाय , तद्भोगसाधनत्वात् स्नगादिवदित्य(नुमाना)न्वयिबलादपूर्वसिद्धेर्नावशेष इति साम्प्रतम् ; इच्छाप्रयत्नज्ञानैर्यथायोगं सिद्धसाधनात् । न च तद्रहितानामपि भोग इति युक्तिमत् , येन ततोऽप्यधिकं सिद्ध्येत् । नापि स्वगुणोत्पादिता इति साध्यार्थः, मनसाऽनैकान्तिकत्वात् । नापि कार्यत्वे सतीति विशेषणीयो हेतुः ; तथाप्युपलक्षणैरेव सिद्धसाधनात् । असतां तेषां कथमुत्पादकत्वमिति चेत्—तदेतदभिमन्त्रणादिष्वपि तुल्यम् ॥

---

उपयुज्यते , यथा च कुरुणा राज्ञा भूतपूर्वेणाप्युपलक्षितं क्षेत्रं कुरुक्षेत्रमिति व्यवहारे ; तद्वत् इति चेन्न–साक्षात् स्वरूपस्य वा स्वव्यापारस्य वा कार्यकालेऽभावे कारणत्वायोगात् । अन्यथा नष्टादपि दण्डाद्घटोत्पत्त्यापत्तेः । दृष्टान्तश्च विषमः ; व्यवहारे व्यवहर्तव्यज्ञानस्यैव कारणत्वेन गुरुटीकेति व्यवहारे गुरोस्तट्टीकायाश्च ज्ञानमेव कारणमिति, व्यवहारस्य गुरुसाध्यत्वाभावात् । न च तथाऽपि व्यवहर्तव्यस्य स्वज्ञानं प्रत्युपलक्षणविधया कारणत्वमस्त्येवेति वाच्यम्–ज्ञानसामान्ये विषयस्याकारणत्वात् ; प्रत्यक्षं प्रत्येव तस्य तत्त्वात् । अतः संप्रति गुर्वादिव्यवहर्तव्यज्ञानं स्मृत्यनुमित्यादिरूपं स्वस्वकारणाधीनम् , न तु स्वरूपतो व्यापारतश्चावर्तमानतया निरन्वयध्वस्तगुर्वाद्यधीनमिति । यदि च दृष्टान्तेऽपि कारणत्व आग्रहः तर्ह्युपलक्षणस्य कारणत्वेऽतिप्रसङ्गात् तत्रापि टीकादौ गुर्वाधाहितः कश्चिदतिशयः स्वीकार्य इति तत्रैव दृष्टान्तासिद्धिः । किञ्चोपलक्षणस्यापि कारणत्वे यागादेरप्युपलक्षणत्वं स्वीकृत्य तदुपलक्षितस्य महाकालस्य तादृशस्य यजमानस्यैव वा स्वर्गादिसाधनत्वसम्भवाददृष्टसिद्धिप्रसक्त्यभावात्कुत एष तदाधारविचारः ?

[39] न च न वयं प्रकारान्तरेणानिर्वाहात् यागादेरदृष्टं स्वीकुर्मः; किन्त्वनुमानप्रमाणसद्भावात् तच्चेदम्— देवदत्तस्य गात्रक्षेत्रकलत्रादयो भोगार्थं तद्गुणाऽऽकृष्टाः तद्भोगसाधनत्वात् तन्निर्मितस्रगादिवादिति । अनेन चान्वय्यनुमानेन तद्गुणस्यादृष्टस्य सिद्ध्या यागादेः प्रोक्षणादिवैषम्यमिति वाच्यम्—अनेनादृष्टासिद्धेः । तथा हि—किमिदं तद्गुणाकृष्टत्वम् ? किं भोगजननाय तद्गुणरूपसहकारिकारणापेक्षत्वं किं वा तदुत्पादितत्वम् ? नाद्यः, पुरुषेणेच्छाप्रयत्नपूर्वकमेव तत्तद्वस्तूपयोजनेन सुखसम्पादनात्तादृशेच्छादिगुणमादायानुमानपर्यवसानेनार्थान्तरात् । यत्र परकृतचन्दनलेपादिना स्वेच्छाप्रयत्नावन्तरेण सुखानुभवः तत्राप्यन्तस्सुखात्पूर्वं तत्संवेदनस्यावश्यकतया ज्ञानमादायैवानुमानपर्यवसानम् । ईदृशगुणाभावेऽपि भोग इत्यस्य प्रामाणिकत्वे ह्यतदतिरिक्तगुणसिद्धिः । नान्त्यः , मनसि नित्ये उत्पादितत्वरूपसाध्याभावेन व्यभिचारात् । न च

[40] तस्माद्भावभूतमतिशयं जनयन्त एव प्रोक्षणादयः कालान्तरभाविने फलाय कल्पन्ते। प्रमाणवत्तदर्थमुपादीयमानत्वात् यागकृषिचिकित्सावदिति। अन्यथा कृष्यादयो दुर्घटाः प्रसज्येरन्; बीजादीनामापरमाण्वन्तभङ्गात् तेषु चावान्तरजातेरभावान्नियतजातीयकार्यारम्भानुत्पपत्तेः। अत्रोच्यते—

[41] संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः॥ ११॥

---

कार्यत्वे सति तद्भोगसाधनत्वादिति हेतुरुच्यत इति वाच्यम् एवमपि शरीरादिकारणतया त्वदभिमतादृष्टहेतुयागहोमादिविषयकज्ञानेच्छाप्रयत्नानां गुणपदेन ग्रहणेन सिद्धसाधनाददृष्टासिद्धेः। न च तेषां नष्टानां कथमुत्पादकत्वमिति वाच्यम्—उपलक्षणतयाऽपि हेतुत्वसम्भवस्य प्रोक्षणाभिमन्त्रणादिविषये त्वदुक्तत्वात्। अत्र तदसम्भवे तत्रापि तदसम्भवात् सिद्ध्यत्येव प्रोक्षणजन्योऽतिशयः॥

[अथैतदनुमानेनैव यागादिजन्यादृष्टस्यात्मधर्मत्वसिद्धौ कथमितःपरं भूतधर्मत्वाशङ्कति चेत् न वयमेतदनुमानं स्वीकुर्मः, अप्रयोजकत्वात्। किन्तु त्वदुक्तप्रमाणसत्त्वे त्वद्रीत्यैव प्रोक्षणादिजन्यातिशयसिद्धिरित्युपापीपदाम। अस्मन्मतं तु—स्वयं स्वव्यापारद्वारा वाऽव्यवहितपूर्ववृत्तित्वविरहिणः कारणत्वेऽतिप्रसङ्गात् 'चिरध्वस्तं फलायालं न कर्मातिशयं विने'त्येवापूर्वसिद्धिरिति। न च ध्वंसेन निर्वाहः, तथात्वे दण्डस्यापि स्वध्वंसद्वारा घटकारणत्वापत्तेः; पुण्यपापयोः कीर्तनप्रायश्चित्तनाश्यत्वस्य प्रमाणसिद्धत्वाच्च ध्वंसस्य चानाश्यत्वात्।]

[40] तस्माद्यागकृषिचिकित्सावत् प्रोक्षणादिकमपि व्रीह्यादिषु ध्वंसविलक्षणं भावात्मकमतिशयमुत्पाद्यैव स्वर्गादिहेतुयागापूर्वजनकम्—पुत्रेष्टिपितृयज्ञादेः पुत्रपित्राद्यर्थत्वेनेव, यजेत स्वर्गकाम इति स्वर्गकामाधिकार्यर्थत्वेन च यागादेरिवास्यापि प्रमाणमुखेन व्रीह्युद्देशेनोपादेयत्वात्। न चात्र कृषिचिकित्साभ्यामतिशयोऽप्रामाणिक इति मन्तव्यम्—तत्राप्युपात्तानां बीजभेषजादीनामभिमतकार्यात्मना भवनाय परमाणुपर्यन्तं विनाशस्यावश्यकतया अन्ततः शिष्टेषु पृथिवीपरमाणुष्ववान्तरवैजात्यस्यानङ्गीकारात् पृथिवीत्वजातिरहितेभ्यस्तेभ्यस्तृणरोगादेरप्युत्पत्तिप्रसङ्गेन तत्परिहारेण विलक्षणाङ्कुरारोग्यनियतोत्पादकत्वसम्पत्तये परमाणुष्वतिशयोत्पत्तेरावश्यकत्वात्। तस्मात्तन्न्यायेन सिद्धः प्रोक्षणादिना व्रीह्यादेरतिशयः। व्रीहीनवहन्तीत्यादौ व्रीह्यादेः कर्मत्वश्रवणात्, क्रियाजन्यफलभागित्वरूपकर्मत्वोपपत्तयेऽपि तत्रैवातिशयः स्वीकार्यः। एवं चाधेयशक्तिदृष्टान्तेन यागादिजन्यातिशयस्यापि भूतधर्मत्वमेव युक्तमिति॥

[41] अत्रोच्यते—इष्ट एवास्माकं प्रोक्षणादिजन्योऽतिशयः, अथापि स पुरुषनिष्ठ एवेष्टः, न भूतनिष्ठः। कृषिचिकित्सास्थलेऽपि पाकसम्भवस्थले पाकजानामन्यत्र चान्यादृशानां परमाणु-

**यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतयः समन्त्राः प्रयुक्ताः पुरुषमभिसंस्कुर्वते, न वह्निं, नापि देवताः; तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः पुरुषमेव संस्कुरुते, न तम् । यथा च कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचां सञ्चरणजलक्षरणरूपा क्रिया, तथा व्रीह्यादीनां तत्तदुत्तरक्रियाविशेषाः । यथा चैकत्र कर्तृकर्मसाधनवैगुण्यात्फलाभावस्तथा परत्रापि; आगमिकत्वस्योभयत्रापि तुल्यत्वात् ॥**

**[42] न तर्हि वर्हिष इव व्रीह्यादेः पुनरुपयोगान्तरं स्यात् । उपयोगे वा तज्जातीयान्तरमप्युपादीयेत; अविशेषात् । न। विचित्रा ह्यभिसंस्काराः । केचिद्धार्यमाणोद्देश्यसहकारिण एव कार्ये उपयुज्यन्ते । किमत्र क्रियताम्? विधेर्दुर्लङ्घत्वात् । यथा-चाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तस्तदपेक्ष एव तत्सम्बद्धस्यैव दुःखमुपजनयति नान्यस्य; न वा तदनपेक्षः । एवमभिमन्त्रणादिसंस्कारा अपि भवन्तो न मनागपि नोपयुज्यन्ते । कथं तर्हि व्रीह्यादीनां संस्कार्यकर्मतेति चेत् प्रोक्षणादिफलसम्बन्धादेव ॥**

---

गतगुणानामेवेतरवैलक्षण्यवहतया विशेषरूपत्वान्न तत्राप्याधेयशक्तिसिद्धिः । तथा हि मीमांसकैः प्रोक्षणाद्यतिशयस्य व्रीह्यादौ (पू- मी २. १. ४) स्वीकृतत्वेऽप्यस्माभिरात्मनिष्ठत्वमेवेष्यते- प्रोक्षणादिकमात्मसमवेतादृष्टजनकं अदृष्टहेतुकर्मत्वात् अर्थकर्मवदित्यनुमानात् । याः खलु मन्त्रपूर्व क्रियमाणा हविराहुतयः, तास्वेकैकापि त्यागप्रक्षेपोभयात्मिका। तत्र त्यागांशो देवतोद्देशेन क्रियमाणः, प्रक्षेपांशश्चाहवनीयाद्युद्देशेन । न च तत्र यागस्य देवतायां प्रक्षेपस्य चाग्न्यादावतिशयाधायकत्वमिष्टम्; किं त्वात्मनि । तथैव प्रोक्षणादेरपि । ननु तत्रातिशयाभावेऽसंस्कृतैरेव व्रीह्यादिभिर्यागनिष्पत्तिरुक्ता स्यादिति चेत्--तर्हि कारीरीरूपप्रधानकर्मजन्यादृष्टस्यात्मनिष्ठतया निरदृष्टैरेव मेघैः सञ्चरणवर्षणादिनिष्पत्तिरुक्ता स्यात् । यदि तत्रादृष्टस्य स्वाश्रयात्मसंयोगद्वारा मेघसम्बन्धः, तर्ह्यत्रापि तद्द्वारैव प्रोक्षणाद्यतिशयस्य व्रीह्यादिसम्बन्धः । ननु पुंस्यदृष्टपक्षे पातकादिदुष्टे तत्र तत् कथं भवेदिति चेत्--व्रीहीणामन्यायार्जितत्वादिना दुष्टत्वे तत्र कथं भवेदिति तुल्यम् । 'कर्मकर्तृसाधनवैगुण्या'दिति सूत्रोक्तदिशाऽपेक्षितांशलोपे वैगुण्यमेव, अन्यदा न किञ्चिदिति चोभयत्र तुल्यम्; कारीरीप्रोक्षणयोः कर्तृविशेषव्रीहिविशेषयोश्चागमसिद्धसाधनताया अविशिष्टत्वात् ॥

[42] ननु तर्हि व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणस्यात्मगतादृष्टजनकत्वे सक्तून् जुहोतीत्यत्रेव धात्वर्थप्राधान्येनार्थकर्मत्वापत्त्या व्रीहीणां तदङ्गत्वमेव वाच्यम् । एवञ्च प्रोक्षितव्रीहीणामवहननसम्बन्धो यागसम्बन्धश्च न स्यात् । व्रीहिसंस्कारकत्वे हि प्रोक्षणस्य, संस्कृतानामुत्तरत्र विनियोगस्यावश्यकतया यागे तेषामेवोपयोगः स्यात्-यथा बर्हिः स्तृणातीति स्तरणसंस्कृतस्य बर्हिषः, बर्हिषि हवींष्यासादयतीति विहितहविरासादने विनियोगस्तद्वत्-न तु तदसंस्कारकत्वेऽपि । न

[43] **ननु यदुद्देशेन यत्क्रियते तत्तत्र किञ्चित्करम्, यथा पुत्रेष्टिपितृयज्ञौ । तथा चाभिमन्त्रणादयो व्रीह्याद्युद्देशेन प्रवृत्ताः इत्यनुमानमिति चेत्—न—हविस्त्यागादिभिरनैकान्तिकत्वात्। न हि ते कालान्तरभाविफलानुगुणं किञ्चित् हुताशनादौ जनयन्ति । किं वा न दृष्टमिन्द्रियलिङ्गशब्दव्यापाराः प्रमेयोद्देशेन प्रवृत्ताः प्रमातर्येव किञ्चिज्जनयन्ति, न प्रमेये इति ॥**

---

चोपस्थितव्रीहित्यागे मानाभावात एव कार्यान्तरेऽपि गृह्यन्ते । एवमात्मनिष्ठादृष्टजनकत्वमात्रेणार्थकर्मत्वप्रसञ्जनमपि न युक्तम्—व्रीह्युद्देशेन प्रोक्षणविधानात् द्वितीयया व्रीहीणां प्राधान्यावगमात् प्रोक्षणस्य गुणकर्मत्वादिति वाच्यम्—गुणकर्मत्वसिद्धावप्यदृष्टस्यात्मनिष्ठत्वेऽदृष्टवदात्मसंयोगरूपसम्बन्धस्य व्रीह्यन्तरेऽपि तुल्यत्वेन तद्ग्रहणेऽपि दोषानापत्तेरिति चेत्—उच्यते । व्रीहीन् प्रोक्षतीत्यादौ व्रीह्यनुवादेन प्रोक्षणविधानात् अनुवादस्य च सति सम्भवे सन्निहितगामित्वात् व्रीहिभिर्यजेतेति वाक्यविहितानामेवात्र ग्रहणम् । एवं व्रीहिभिरिति तृतीयया तेषां यागं प्रति करणत्वावगमात् साङ्गस्यैव करणत्वात्, प्रोक्षणाद्यङ्गजन्योपकारसङ्गतैर्व्रीहिभिर्यागं भावयेदिति मीमांसकसम्मतवाक्यार्थस्थाने प्रोक्षणाद्युद्देश्यभूतैर्व्रीहिभिर्यागं कुर्यादिति वाक्यार्थस्वीकारात् एवंविधविधेर्दुर्लङ्घ्यतया न व्रीह्यन्तरग्रहणप्रसक्तिः । अतःप्रोक्षणादिकमीदृशोद्देश्यसहकृतमेव कार्योपयोगि । अन्यथा श्येनेनाभिचरन् यजेतेति विहितश्येनयागजन्यादृष्टस्यात्मनिष्ठत्वेऽविवादाद्वधकर्मतया यः शत्रुरिह उद्दिष्टस्तदतिरिक्तशत्रुदेहेऽपि स्वाश्रयसंयुक्तत्वसम्बन्धेनादृष्टसत्त्वात्तदवच्छेदेनापि दुःखजननप्रसङ्गः । अतो यथा श्येनकर्म नान्यशत्रुदुःखजनकम्; न वा तच्छत्रुविषयेऽपि तद्देहानपेक्षम्, जन्मान्तरे तद्बाधनात्—तथा प्रोक्षणादिकमप्युद्देश्ये भवत् न मात्रयाऽप्यनुपयुक्तं भवति । किं त्वदृष्टद्वारेवोद्देश्यभूतस्यैव यागान्वयविधानादुपयुक्तं भवतीति । अथोत्पत्त्याप्तिविकृतिसंस्कृतिभेदाच्चतुर्विधे कर्मत्वे संस्कार्यत्वरूपकर्मत्वस्यैव प्रकृते वाच्यतया तत्रादृष्टानङ्गीकारे क्रियाजन्यफलशालित्वरूपं कर्मत्वमेव दुर्घटमिति चेन्न—प्रोक्षणजन्यतया तत्फलभूतजलसंयोगशालित्वेनैव तदुपपत्तेः । एवं च तन्मीमांसागतं 'तानि द्वैधं' इत्यधिकरणमपि प्रोक्षणादेर्गुणकर्मत्वबोधनैकपरम्, न त्वदृष्टस्य व्रीह्यादिनिष्ठत्वसाधकमिति ॥

[43] यत्तु मीमांसकानुमानं—प्रोक्षणादिकं व्रीहिनिष्ठादृष्टजनकं व्रीह्युद्देशेन क्रियमाणत्वात्; यत् यदुद्देशेन क्रियते तत्तत्र किञ्चिज्जनकम्; यथा पुत्रेष्टिः 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहिता, 'तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्युक्तफलहेतुमदृष्टं पुत्रोद्देशेन क्रियमाणतया तत्र जनयति; यथा चामावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति विहितः पितृयज्ञः पितृष्विति—तन्न—त्यागप्रक्षेपादेर्देवताहुताशनाद्युद्देशेन क्रियमाणत्वेऽपि तत्र किञ्चिज्जनक-

**[44] कृषिचिकित्से अप्येवमेव स्यातामिति चेन्न—दृष्टेनैव पाकजरूपादि १ परिणतिभेदेनोपपत्तावदृष्टकल्पनायां प्रमाणाभावात् । २ तथा च लाक्षारसावसेकादयो ३व्याख्याताः । अत एव बीजविशेषस्य आपरमाण्वन्तभङ्गेऽपि, परमाणूनामवान्तरजात्यभावेऽपि, प्राचीनपाकजविशेषैरेव ४ विशिष्टाः परमाणवस्तं तं कार्यविशेषमारभन्ते । यथा हि कलमबीजं यवादेः, नरबीजं वानरादेः, गोक्षीरं महिषादेः जात्या व्यावर्तते ; तथा**

---

त्वाभावात् । न च जनयन्त्येव देवतायां प्रीतिं वह्नौ ज्वालावृद्धिं स्वसंयोगमेव वेति वाच्यम्—त्वन्मते देवताया अविग्रहत्वेन प्रीत्यप्रसक्तेः । प्रोक्षणादेरपि व्रीह्यादौ जलसंयोगजनकत्वेन सिद्धसाधनाददृष्टासिद्धिप्रसङ्गाच्च । न चादृष्टजनकत्वमेव सामान्यमुखव्याप्तौ साध्यमिति वाच्यम् । देवताहुताशनादौ तदभावेन व्यभिचारात् । एवं स्वर्गदर्शाद्युद्देशेन क्रियमाणदर्शप्रयाजादेःस्वर्गादौ किञ्चिदजनकत्वेनापि व्याप्तिभङ्गः । एवं लोकेपोन्द्रियसन्निकर्ष-लिङ्गज्ञान-शब्दज्ञानरूपाणां प्रमाणानां प्रमेयोद्देशेनोत्पाद्यमानानां तत्राकिञ्चित्करत्वदर्शनाद्व्यभिचारः । न च दुष्टेन हेतुना तदनुमातुं शक्यते ; तथा सति प्रोक्षणादिकमात्मनिष्ठादृष्टजनकं क्रियात्वात् हविस्त्यागेन्द्रियसन्निकर्षादिवदित्यप्यनुमानसम्भवात् । न चोद्देश्यतयोपस्थितव्रीहिनिष्ठत्वं परित्यज्य कर्तृनिष्ठत्वकल्पनं न युक्तमिति वाच्यम्—कर्तुरपि प्रोक्षतेत्याख्यातोपस्थितत्वात् । कर्मतासम्बन्धेन प्रोक्षणस्य स्वरूपसम्बन्धेनादृष्टं प्रति कारणत्ववत् कर्तृतासम्बन्धेन तस्य समवायेनादृष्टं प्रति कारणत्वस्यापि युक्तत्वात् । कर्तृत्वं स्वानुकूलकृतिमत्त्वरूपं गुरुभूतमिति चेत्—कर्मत्वं क्रियाजन्यफलशालित्वमिति तत् किं लघुभूतमिति । अन्यच्च वक्ष्यते ॥

[44] ननु प्रोक्षणादेरात्मगतातिशयकरत्वे एकरूप्यस्योचितत्वात् कृषिचिकित्से अपि तथैव स्यातामिति चेन्न तत्र दृष्टस्यैवाभावात् । दृष्टेन पाकजरूपादिभेदेनैव तत्तत्कारणवैलक्षण्यस्य सिद्धतया तत एव विलक्षणकार्योपपत्तावदृष्टकल्पनस्यानपेक्षितत्वात् । यत्र कारणे साक्षात् पाकजरूपादि न दृश्यते तत्राप्यवयविगतरूपादिवैलक्षण्यानुसारेणावयवेऽपि तदनुमानात् दृष्टप्रायत्वमस्त्येव । ईदृशपाकजवत्त्वैव लाक्षारसावसेकादिस्थलेऽपि निर्वाहो मन्तव्यः । तत्रापि तदवसेक-

---

१ परिणतिपदं क पु. । बो. 'परिणतिर्निष्पत्तिः सहकारीति वा' । २ क[2] पा०एतेन । ३ अयं पाठः क[2] पु ; अन्यत्र तु 'लाक्षारसावसेको व्याख्यात' इति । बो. 'इममेव प्रकारमुदाहरणान्तरेष्वतिदिशति तथा चेति ।' ४ सर्वत्र 'विशेषादेवे'ति पाठः । 'यैः पाकजविशेषैर्यद्बीजमारब्धवन्तः प्राचीनैस्तैरेव तज्जातीयैरेव वा विशिष्टाः परमाणव' इति बोधन्यनुसारेणोपरितनपाठः ।

तत्परमाणवोऽपि मूलभूताः पाकजैरेव व्यावर्तन्ते । न ह्यस्ति सम्भवो गोक्षीरं सुरभि मधुरं शीतम् ; तत्परमाणवश्च विपरीताः। १ तस्मात्तथाभूतपाकजा एव परमाणवः ; यथाभूतैरेवाद्यातिशयोऽन्त्यातिशयो (वा) २ ऽङ्कुरादिर्वेति किमत्र शक्तिकल्पनया ॥

[45] कल्पादावप्येवमेव । इदानीं बीजादिसन्निविष्टानामसदादिभिरुपसम्पादनम् । तदानीं तु विभक्तानामदृष्टादेव ३ केवलान्मिथः संसर्ग इति विशेषः। न च वाच्यमिदानीमपि तथैव किं न स्यात् ; यतः कृष्यादिकर्मोच्छेदे तत्साध्यानां भोगानामुच्छेदप्रसङ्गादव्यवस्थाभयाच्चादृष्टानि ४ (कर्माणि) दृष्टकर्मव्यवस्थयैव भोगसाधनानीत्युन्नीयते ॥

सहकृतपाकविशेषेण बीजावयवेष्वरुणरूपादौ जाते तेषां, तत्संश्लेषादिबलसिद्धारुण्यादिगुणानां वृक्षोत्पादकावयवान्तराणां च कालान्तरे यथायथं समाहारणारुणपुष्पाद्युत्पत्त्युपपत्त्या तादृशावसेकेन भूतावयवेषु शक्तिविशेषाधानकल्पनस्य व्यर्थत्वात् । यथोक्तमात्मतत्त्वविवेके , 'क्षीरावसेकादम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्तमानामलकी कालान्तरेऽपि माधुर्यमुन्मीलयति ; लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्तमानं कर्पासबीजं कुसुमेषु रक्तता' मिति । एवं च यदुक्तम् यवबीजस्याङ्कुरोत्पत्तिसमये परमाणुरूपावधिपर्यन्तं नष्टतया परमाणुषु यवसम्बन्धिषु धान्यान्तरसम्बन्धिषु च वैलक्षण्याभावात् यवबीजात्कलमाङ्कुरोत्पत्तिः स्यादिति—तदपरिहृतम्—कार्यविशेषप्राग्भावि-पाकाधीनरूपरसादिभिरेव मिथो व्यावृत्तानां तत्तत्कार्यपरमाणूनां विभिन्नकार्यारम्भकत्वसम्भवात् व्यावृत्तिश्चावयविषु जात्यैव, परमाणुषु जात्यभावेऽपि गुणविशेषैर्घटते । अवयविषु दृष्टैर्गुणविशेषैरेव तदवयवेषु परमाणुषु गुणविशेषानयनम् ; कारणगुणपूर्वकत्वादवयविगुणस्य । अतः परमाणुगततथाभूतविशेषबलादेव तरतमभावापन्न-तत्तदवस्थवस्तूत्पत्तिक्रमेणाङ्कुरोत्पत्तिरिति ।

[45] ननु सृष्ट्यारम्भे बीजाभावात् जलावसेकक्षेत्रवापादिना च पुरुषेण परिणामपरम्परासम्पादनप्रसक्त्यभावात् कथमङ्कुरोत्पत्तिरिति चेत्—इदानीं यादृशविशेषशालिभिः परमाणुभिः क्रमात् कार्यनिष्पत्तिस्तादृशविशेषवद्भिस्तैरेव तदानीमपि कार्योत्पत्तिः । परं तु बीजादिरूपेण सन्निवेश-

१ 'तथा भूताः पाकजा एवे'ति सर्वत्र पाठः । परमाणूनां पाकजत्वं बाधितमित्यौचित्यादेवं शोधितम् । २ प्र. 'आद्यातिशयो द्व्यणुकम् । अन्त्यातिशयोऽङ्कुरादिरित्यभेदेनान्वयः । अन्त्यातिशयो वाङ्कुरादिरिति पाठेऽन्त्यातिशयोऽङ्कुरादिः (अङ्कुरस्यादिः ?) समवायिकारणमित्यर्थः । यद्वाऽऽद्यातिशयो बीजस्योच्छूनत्वमन्त्यातिशय उच्छूनतरत्व'मिति ।

३ मिथे मिथः क[2] पु. । ४ कर्माणीति पदं सर्वत्र दृश्यते । अत्र दृष्टपदेनात्मगुणग्रहणादिदमनन्वितम् । अस्यादृष्टवाचित्वेऽदृष्टपदसत्त्वात् पौनरुक्त्यम् । अदृष्टसाधनप्राक्तनकर्माणीति वा 'अदृष्टानि कर्माणी'त्यस्यार्थः स्यात् । व्याख्याग्रन्थे तु इदं न लक्ष्यते ।

[46] **तस्मात्पाकजविशेषैः संस्थानविशेषैश्च विशिष्टाः परमाणवः कार्यविशेषमारभन्ते । ते च तेजोऽनिलतोयसंसर्गविशेषैः ; ते च क्रियया ; सा च नोदनाभिघातगुरुत्ववेगद्रवत्वादृष्टवदात्मसंयोगेभ्यो यथायथमिति न किञ्चिदनुपपन्नम् ॥ निमित्तभेदाश्च पाके भवन्ति । तद्यथा—हारीतमांसं हरिद्राजलावसिक्तं १ हरिद्राग्निप्लुष्टं उपयोगात् सद्यो व्यापादयति । 'दशरात्रोषितं कांस्ये घृतं चापि विषायते' । ताम्रपात्रे पर्युषितं क्षीरमपि तिक्तायत इत्यादि ॥**

[47] **यत्र तर्हि तोये तेजसि वायौ वा न पाकजो विशेषः , तत्र कथमुत्कर्षानुत्कर्ष-**

---

भाक्षु परमाणुषु पुरुषप्रयत्नेन तादृशत्वं सम्पाद्यते । तदानीं तु तादृशविशेषवन्त एव परमाणव आत्मसमवेतादृष्टवशान्मिलन्तीत्येतावानेव भेदः । न चेदानीमपि तद्वत्पुरुषव्यापारानपेक्षं किं न स्यादिति वाच्यम्--कृष्यादिकर्मसत्त्व एव कृषीवलस्य तात्कालिकसुखादिप्राप्तिः सस्यादिप्राप्तिश्चेत्यन्वयव्यतिरेकसिद्धतया तदभावे तदुच्छेदप्रसङ्गात् । व्यापारमन्तरेणादृष्टादेव सर्वसम्पत्तौ स्वीकृतायां 'अस्येदं वस्तु, इदानीमीदृशपरिमाणार्थमेवं परमाणुमेलनमित्यादिव्यवस्थाऽभावप्रसङ्गाच्च, 'दृष्टानां पुरुषकर्मणामिव फलोत्पादकत्वम्, अदृष्टानां तु सति सम्भवे दृष्टसामग्रीमेलकत्वमात्र'-मित्युन्नयनात् ।

[46] ननु रूपादिवैलक्षण्यस्य कार्यगतरूपादिवैलक्षण्यानियामकत्वेऽपि यवबीजात्कलमाङ्कुराकारेण कथं न कार्यनिष्पत्तिरिति चेत्--तत्र नियमतो यवाद्यङ्कुरोत्पत्त्युपयोगितया विलक्षणप्रदेशेषु तदारम्भकत्र्यणुकादेः संयोगविशेषरूपः संस्थानविशेष एव नियामकः , विलक्षणपाकजविशेषशालियवबीजपरमाणुजन्यद्व्यणुकत्र्यणुकादेर्यवाङ्कुरानुपमर्दकसंयोगविशेषं प्रत्येव कारणत्वावधारणात् । तस्मान्न परमाणुषु शक्तिः । पाकजविशेषोत्पत्त्यर्थमपि न शक्तिरपेक्षिता , तेषां भूतान्तरसंसर्गायत्तत्वात् , भूतान्तरसंसर्गस्य क्रियाजन्यत्वात् , क्रियायाश्च नोदनाख्येनाभिघाताख्येन वा संयोगेन गुरुत्वेन वा वेगेन वा द्रवत्वेन वाऽदृष्टवदात्मसंयोगमात्रेण वा सम्भवात् । पाकश्च न यथा कथञ्चिद्भूतसंयोगमात्रम् ; किं तु विजातीयः संयोगः । यथा उपयोजनमात्रेण सद्यो मारणानुगुणहारीतमांसपरिणामौपयिके परमाणुगतविशेषे हरिद्राजलावसेचनं हरिद्राग्निप्लोषश्च हेतुः । घृतस्य विषात्मना परिणामाय कांस्ये दशरात्रनिक्षेपः । क्षीरस्य तिक्तद्रव्यरूपपरिणामाय ताम्रपात्रे कियन्तमपि कालं निक्षेप इत्येवम् ॥

[47] नन्वेवमपि जलादौ पाकासम्भवात्का गतिः ? तत्रापि हि शीकरचक्षुरुष्मादौ रूपादे-

---

१ हरिद्रानलसाधितम् का० पा० ।

द्रवत्वकठिनत्वादयो विशेषाः ? कथं वा (च) पार्थिवे प्रतिमादौ प्रतिष्ठादिना संस्कृते ऽपि विशेषाभावात् पूजनादिना धर्मो व्यतिक्रमे त्वधर्मः अप्रतिष्ठिते तु न किञ्चित्। न च तत्र यजमानधर्मेणान्यस्य साहायकमाचरणीयम्; अन्यधर्मस्यान्यं प्रत्यनुपयोगात् उपयोगे वा साधारण्यप्रसङ्गात् ॥ अत्रोच्यते—

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवता१सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥

---

यथायथमनुद्भूतत्वमन्यत्रोद्भूतत्वं; हिमकरकादौ काठिन्यमन्यत्र द्रवत्वं, क्वचिद्वायौ स्तैमित्यमन्यत्र सदागतित्वम्; जलीयत्वाद्यविशेषेऽपि रसनादीनामेव विषयग्राहित्वं, नान्यजलादेरित्यादयो विशेषाः प्रामाणिकाः । किं च पृथिव्यामेव क्वचित्प्रतिमादौ असत्येव पाके प्रतिष्ठातः परं पूजनतद्व्यतिक्रमाभ्यां धर्माधर्मोत्पत्तिः, अप्रतिष्ठितत्वे तु न ततो धर्माधर्मावितीदं शक्त्यभावे कथमुपपद्यते । न च तत्र प्रतिष्ठासंस्कृतत्वमेव विशेष इति वाच्यम्—प्रतिष्ठाक्रियायास्तदैव नष्टत्वात् ततः परं तस्या अप्रतिष्ठिताविशेषात् । न च प्रतिष्ठाक्रियाजनितं प्रतिष्ठापकपुरुषसमवेतं यददृष्टं स्वाश्रयसंयुक्तत्वसम्बन्धेन तद्विशिष्टा सती प्रतिमाधर्माधर्महेतुरिति वाच्यम्—प्रतिष्ठापकादृष्टस्य पूजनप्रणमनादिकर्त्रन्यादिष्टादिहेतुत्वासम्भवात् । अन्यादृष्टस्यान्यफलाहेतुत्वात् । अन्यथा सर्वधर्माधर्माणामपि साधारण्यापातात् । अतोऽपाकजस्थले कथं निर्वाह इति चेत्—अदृष्टादिरूपनिमित्तविशेषसंसर्गादपार्थिवेऽप्युद्भवादयः । प्रतिमादयश्च देवतासन्निधानेन प्रत्यभिज्ञानविशेषेण वाऽऽराधनीयत्वं भजन्ति । यद्वा उद्भवानुद्भव-द्रवत्वकठिनत्व-प्रतिष्ठितप्रतिमापूजनापूजनमूलकधर्माधर्म-पयःपल्लवतुलाद्यधीनेष्टानिष्टादयो यथायथं निमित्तविशेषसंसर्गात् देवतासन्निधानप्रत्यभिज्ञानान्यतरस्माद्वा भवन्तीति कारिकायामस्यां विशिष्टमेकं वाक्यमिति । अपिना प्रत्यभिज्ञाने स्वासम्मतिर्द्योत्यते ।

---

१ देवताः सन्निधानेनेति सर्वत्र पाठः । प्रकाशेऽपि 'देवता इत्यत्राराधनीयतामासादयन्तीत्यध्याहार्यम्' इति लक्ष्यते । एवमपि 'प्रत्यभिज्ञानत' इत्येतदन्वयाय प्रतिमादय इति पदान्तरमध्याहार्यम् । अत उभयत्र तदन्वयेन देवतासन्निधानेनेत्येकपदस्थितिर्युज्यते । बोधन्यां 'देवतानां सन्निधानादाराधनीयाः प्रतिमादय' इति वाक्यमेकपद्यपक्षमुपष्टम्भयति । वस्तुतोऽध्याहर्तव्यबहुपदसापेक्षपदमात्रनिर्देशेन कारिकानिर्माणमित्यस्यायुक्तत्वात्, विनाऽध्याहारं, विना च वाक्यभेदं पूर्वमाक्षिप्तसर्वांशग्राहि कारिकायामादिपदमिति विमृश्य विस्तरोक्तार्थवर्णनप्रकार उचिततम इति इदमेकपदमेव ।

[48] उपनायकादृष्टविशेषसहाया हि परमाणवो द्रव्यविशेषमारभन्ते । तेषां विशेषा-नुद्भूता[1]नुद्भूतभेदाः प्रादुर्भवन्ति । तथा स्वभावद्रवा अप्यापो निमित्तभेदप्रतिबद्धद्रव-त्वाः कठिनं करकाद्यारभन्ते इत्यादि स्वयमूहनीयम् । प्रतिमादयस्तु तेन तेन विधिना सन्निधापितरुद्रोपेन्द्रमहेन्द्राद्यभिमानिदेवताभेदास्तत्र तत्राराधनीयतामासादयन्ति; दष्ट-मूर्च्छितं राजशरीरमिव विषापनयनविधिनाऽऽपादितचैतन्यम् । सन्निधानं च तत्र तेषामहङ्कारममकारौ, चित्रादाविव स्वसादृश्यदर्शिनो राज्ञ इति नो दर्शनम् ॥ अन्येषां तु पूर्वपूर्वपूजितप्रत्यभिज्ञानविषयस्य प्रतिष्ठितप्रत्यभिज्ञानविषयस्य च तथात्वमवसेयम् ॥ एतेनाभिमन्त्रितपयःपल्लवादयो व्याख्याताः ॥

---

[48] न हि सर्वत्र पाकज एव विशेषः ; अन्यतोऽपि विशेषसम्भवात् । उद्भूतस्यानु-द्भूतस्य वा द्रव्यविशेषस्यारम्भकाः ये परमाणवस्तेषां पृथक्स्थितानां परस्परसमीपप्रापणरूपमुपन-यनं यस्मादात्मसमवेतादद्दृष्टाद्भवति , तददृष्टसंयोग एव तत्रोद्भवादौ नियामकः । एवं सांसि-द्धिकद्रवत्वशालिनोऽपि जलस्यानुष्णालोकसंसर्गादिना द्रवत्वप्रतिबन्धे काठिन्योपलम्भः । सुव-र्णादौ तेजस्यग्निसंयोगात् द्रवत्वमिति सर्वत्र द्रष्टव्यम् । यत्तु प्रतिमादिविषये पृष्टम्, तत्रापि— प्रतिष्ठापनक्रियया विधिवत्कृतया तत्तद्देवतासन्निधाने सति सैव देवताराधनीया भवति , यथा विषदंशदष्टं अत एव मूर्छितं राजशरीरं तदात्वे कार्यक्षममपि विषापनयनेन पुनश्चैतन्यापादने सति आराध्यतामासादयति, तद्वत् । ननु देवतात्मनामपि विभुत्वात्प्रागेव सन्निहितत्वात्किमिदं प्रतिष्ठाधीनसान्निध्यमिति चेत्—एतत्प्रतिमावच्छेदेनाहम्बुद्धिः , ममेदमिति बुद्धिश्चैव सान्निध्यम्, यथा राज्ञः स्वचित्रादौ । एवं तावदनपह्नुतदेवतास्वरूपाणामस्माकं सिद्धान्तः । पूर्वपक्षिणां तु मिमांसकानां तथोक्तयसम्भवेऽपि , प्रतिष्ठाक्रियाया नष्टत्वेन प्रतिष्ठावत्प्रतिमात्वेन कारणत्ववर्ण-नासम्भवेऽपि च शक्त्यस्वीकारेणैव प्रतिष्ठितत्वप्रकारकप्रत्यभिज्ञाविषयत्वेन धर्माधर्महेतुत्वं सुवचम् ; प्रत्यभिज्ञायास्तदा तदा सद्भावात् । ये तु प्रतिष्ठितत्वं न जानन्ति , तेऽपि पूर्वपूर्व-पुरुषपूजितत्वप्रकारकप्रत्यभिज्ञाविषयीकृत्यैव ता आराधयन्तीति तादृशप्रत्यभिज्ञाविषयत्वेनैव फल-हेतुता । एवं च राष्ट्रक्षेमाद्युद्देशेनैव प्रतिष्ठापनात् प्रतिष्ठाक्रियातः सर्वात्मस्वदृष्टोत्पत्तिरपि परास्ता ; प्रत्यभिज्ञानत एव निर्वाहे तत्कल्पनायोगात् ॥ एवं पयसि पल्लवेऽन्यत्र चाभिमन्त्रणादिना यत्कार्य-हेतुत्वं , तत्राप्यभिमन्त्रणप्रीतमन्त्रार्थभूतदेवतासान्निधिबलाद्वा परमतेऽभिमन्त्रितप्रत्यभिज्ञाविषयत्वेन वा तत्सम्भव इति न कुत्राप्याधेयशक्तेरावश्यकता ॥

---

१ अयं पाठः क[2] पु । 'उद्भूतविशेषाः' इति क. ख.

[49] घटादिषु का वार्ता ? कुशलैवेति चेन्न—न हि सामग्रीदृष्टं विघटयति ; नाप्यदृष्टम् ; ज्ञापकत्वात् । नाप्यदृष्टमुत्पादयति ; धर्मजनने सर्वदा विजयप्रसङ्गात् ; विपर्यये सर्वदा भङ्गप्रसङ्गात्—अत्रोच्यते—

[50] जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्य समवेतस्य परीक्षाविधयो मताः ॥ १३ ॥

यद्यपि 'धर्माद्यभिमानिदेवतासन्निधिरत्रापि क्रियते; ताश्च कर्मविभवानुरूपं लिङ्गमभिव्यञ्जयन्ती'त्यस्माकं सिद्धान्तः— तथाऽपि परविप्रतिपत्तेरन्यथोच्यते। तेनापि हि विधिना तदेव जयस्य पराजयस्य वा निमित्तमभिव्यक्तं १ तद्विभावकं कार्यमुन्मी-

49 ननु स्तेयादिशङ्कायां पुरुषस्य सपापत्वनिष्पापत्वान्यतरावधारणार्थं घटे तुलायामारोहणं कार्यते । तत्र सपापस्यावनतिः, निष्पापस्य तदभाव इति कथम्; प्रतिष्ठाद्यभावेन तुलायां देवतासान्निध्यादेरयोगात् । अथ तत्रावनतिहेतुसमवधानासमवधानाभ्यामेवोभयोपपत्तिरिति चेन्न – विकल्पासहत्वात् । किमत्रावनतिसामग्रीप्रविष्टस्य दृष्टस्य विघटनं तुलारोहणसामग्रीकरोति; तादृशादृष्टविघटनं वा; अथ वा कारणान्तरमदृष्टमुत्पादयति ? न प्रथमद्वितीयौ ; तस्या ज्ञापकत्वात् । तुलादिसामग्र्या ह्यात्मगतसपापत्वादिज्ञापकत्वमात्रम् , न तु किञ्चिद्विघटकत्वमिति । एवमवनतिहेतुभूतस्य गुरुत्वादेर्दृष्टस्यादृष्टस्य वा यस्य विघटिका तुलादिसामग्री मन्यते, तस्यैव सा कदाचित् ज्ञापिका लक्ष्यते । परीक्षाव्यतिरिक्तकाले, परीक्षासमयेऽपि कदाचित् तुलारोहणे सत्यवनतिदर्शनेन तदा गुरुत्वादिस्थितेस्तुलादिसामग्र्या ज्ञापितत्वात् । तथा च या जातु यद्विषये ज्ञापिका, सा कालान्तरे तद्विघटिकेति न युक्तम् । अतो न प्रथमद्वितीयौ । नापि तृतीयः ; तत् किं विजयहेतुं धर्मं जनयति, पराजयहेतुमधर्मं वा । आद्ये कदाऽप्यवनतिर्न स्यात् । अन्त्ये कदाऽपि विजयो न स्यादिति—उच्यते ॥

[50] निष्पापे तुलामधिरूढे धर्माद्यभिमानिनी देवता तदनुग्रहाय तुलायां सन्निधाय स्वप्रयत्नेन पुरुषविशिष्टां तुलां धारयति । अतः करधृतग्रावादीनामिव तद्गुरुत्वप्रतिबन्धादवनत्यभावः । सपापत्वे त्वीदृशविधरणाभावात् पतनम् । तथा च परीक्ष्यसमवेतस्य जयतदितरनिमित्तस्य देवताधार्यत्वतदभावरूपस्य सम्पत्त्यै परीक्षाविधय इति । यद्वा जयेतरनिमित्तस्य पापाकरणतत्करणरूपस्य देवतासान्निध्यबलेन वृत्तिलाभायाभिव्यक्तत्वसिद्धये परीक्षाविधय इति ।

१ तद्विभावकमिति पदं क [2] पु ; नान्यत्र । बो, "तद्विभावकमभिशस्तकृतस्तेयाद्यनुमापकं कार्यं नमनोन्नमनादि.जनयति'। '

लयति । कर्मणश्चाभिव्यक्तिः सहकारिलाभ एव । तच्च सहकारि 'सोऽहमनेन विधिना तुलामधिरूढः, योऽहं पापकारी निष्पापो वे'ति प्रत्यभिज्ञानम् । यदाहुः—'तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ।' अथ वा प्रतिज्ञानुरूपां विशुद्धिमपेक्ष्य तेन धर्मो जन्यते, निमित्ततो विधानाद्विजयफलश्रुतेश्च । अविशुद्धिं चापेक्ष्याधर्मः । पराजयलक्षणानपेक्षितफलोपदर्शनेन फलतो १ निषेधात् ॥

[51] अथ शक्तिनिषेधे किं प्रमाणम् ? न किञ्चित् । तत्किमस्त्येव ? बाढम् । न हि नो दर्शने शक्तिपदार्थ एव नास्ति । कोऽसौ तर्हि ? कारणत्वम् । किं तत् ? पूर्व-

तथा च देवताः सन्निधाय पुरुषकर्मानुगुण्येन तदीयसपापत्वादिज्ञापकं नमनादिकं निर्वर्तयन्तीत्यस्माकं वास्तवं समाधानम् । एवमपि मीमांसकानां देवताचैतन्ये विप्रतिपन्नत्वात्तदनुगुणमित्थं ब्रूमः । परीक्ष्य समवेतं यत् जयपराजयनिमित्तं तुलारोहणं तस्याभिव्यक्तये सहकारिलाभाय परीक्षाविधयो भवन्तीति । तुलारोहणमुभयसाधारणमपि सहकारिविशेषसम्पन्नं सत् जयपराजयज्ञापकमुन्नमनावनमनरूपं कार्यं जनयति । तच्च तुलारोहणकर्मणः सहकारि, पापकारिणः, अहं पापकारी विधिनानेन तुलामधिरूढ इति प्रत्यभिज्ञानम् ; निष्पापस्य च 'अहं निष्पापोऽनेन विधिना तुलामारूढ' इति ज्ञानम् । न च सपापश्चान्निष्पापत्वेनात्मानं मन्यते तर्हि कथमिति वाच्यम्-मिथ्याकथनेऽपि तेन स्वस्वरूपस्य ज्ञातत्वात्तथा मननासम्भवात् । 'तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः' इत्यन्नोत्तरः पादश्चेममेवार्थमाह । ननु सपापस्यापि पापविस्मरणे विपरीतभ्रमे च सति तथा मतिसम्भवात् कथमुपपत्तिरिति चेत्—तर्हीत्थं ब्रूमः । परीक्षायां निमित्ते जयकामः सत्यप्रतिज्ञस्तुलामारोहेदिति विधिश्रवणात् यथार्थप्रतिज्ञाकपुरुषाधिकारिकं तुलाधिरोहणं विजयहेतुधर्मजनकम् । एवमयथार्थप्रतिज्ञत्वे पराजयरूपानिष्टफलश्रवणात् साक्षान्निषेधवाक्यश्रवणाभावेऽप्यनिष्टफलश्रवणस्थले निषेधकल्पनस्य सर्वसम्मततया 'असत्यप्रतिज्ञस्तुलां नारोहे'दिति निषेधस्यार्थात्सिद्धेस्तादृशपुरुषकृतमारोहणं निषिद्धत्वादधर्मजनकमिति । तथा च परीक्ष्यसमवेतस्य धर्मस्याधर्मस्य च तत्तन्निमित्तस्य सम्पत्तये प्रवर्तकनिवर्तकवाक्यभूताः परीक्षाविधयोऽभ्युपगम्यन्त इति ॥ अतो न कुत्राप्याधेयशक्तिकल्पनमिति ॥

[51] नन्वेवं पृच्छामः, शक्तिनिषेधे किं प्रमाणं, सिद्ध्यसिद्धिभ्यां व्याघातादिति चेत्-श्रूयताम् । उक्तमेव तावत्, यद्वक्तव्यम् । एवमपि जल्पकथा त्वया संप्रति जयार्थिनाऽवलम्ब्यते । तत्रेदमुच्यते—किं प्रमाणमिति प्रश्ने, न किञ्चित्प्रमाणमित्युत्तरमिति । तर्हि कि-

१ साक्षान्निषेधशब्दाभावेऽपि निषेधस्य फलितत्वात् । निषेधस्य शब्दबोध्यत्वाभावेऽपि शब्दफलभूतपराजयविषयकबोधगम्यत्वादित्यर्थः ।

कालनियतजातीयत्वं, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वेति । ततोऽधिकनिषेधे का वार्ता ? न काचित् । तत् किं विधिरेव ? सोऽपि १ नास्ति ; प्रमाणाभावात् । सन्देहस्तर्हि कथमेवं भविष्यति ; अनुपलब्धचरत्वात् । २ विवादस्तर्हि, कुत्र ? अनुग्राहकत्वसाम्यात्सहकारिष्वपि शक्तिपदप्रयोगात् सहकारिभेदे । तत्रापि—दहनादेरनुग्राहकोऽधिकोऽस्त्येव , यः प्रतिबन्धकैरपनीयत इति यदि, तदा न विवदामहे । अस्मदभिप्रेतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य निःसाधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति । ततः—अभावादिरनुग्राहक इत्येके, नेत्यपरे, इति विवादकाष्ठायां व्युत्पादितं चैतस्यानुग्राहकत्वम् । किमपरमवशिष्यते, यत्र प्रमाणमभिधानीयमित्यलमतिविस्तरेण ॥

---

मङ्गीक्रियत इति चेत् सत्यम् । न चैतावताऽपसिद्धान्तः । अस्माभिरपि शक्तिरिति लोकव्यवहारगतस्य पदस्य किञ्चिदर्थसम्मतः । कस्तदर्थ इति चेत्--कारणत्वम् । ननु पूर्वकालनियतत्वरूपं कारणत्वं शक्तिरिति न प्रसिद्धमिति चेन्न—अङ्कुरादिजननशक्तिर्हि नाम तद्योग्यतैव । योग्यता चासाधारणधर्मः । तथा च स्वरूपयोग्यत्वरूपं कारणत्वं कार्यपूर्वकालव्यापक-

---

१ एतदपि क. ख. । बो, 'न हि निषेधवद्विधिरपि निष्प्रमाणः सिद्ध्यतीत्युत्तरमाह—सोऽपीति' ।

२ स्वयमनुपलब्ध्या सन्देहायोगेऽपि वादिनोर्विवादः स्यादिति पृच्छति विवाद इति । विवादोऽप्यत्यन्तानुपलब्धे कथमित्याशयेन सिद्धान्ती पृच्छति कुत्रेति । पर आह अनुग्राहकेति । अस्मत्सम्मतशक्तिविवान्येषां सहकारिणामप्यनुग्राहकत्वसाम्याल्लोके शक्तिव्यपदेशात् अनुग्राहकविषये विवाद इत्यर्थः । सिद्धान्त्याह तत्रापीति । तत्रापि सहकारिभेदेऽपि न विवदामह इत्यन्वयः । अथ वा तत्रापीत्यस्य विवादकाष्ठायामित्यत्रान्वयः । ततः इत्यस्य प्रतिबन्धकापनेयानुग्राहकं किञ्चिदस्तीत्यत्रोभयोर्विवादाभावादित्यर्थः । एतत्तच्छब्दार्थकथनार्थमेव 'दहनादेरित्यारभ्य अर्हन्तीत्यन्तपदजातम् । तथा च सहकारिभेदेऽपि विवादस्य 'अनुग्राहकमस्ति न वे'त्येवंरूपत्वाभावात् अभावोऽनुग्राहको न वेत्येवंरूपत्वमेवेति भावः । अथ वा सन्देहवत् विवादोऽप्यनुपलब्धे न भवतीति कुत्र विवाद इति परः पृच्छति विवादस्तर्हि कुत्रेति । सिद्धान्त्याहानुग्राहकेति । न विलक्षणशक्तौ विवादसम्भवः ; किन्तु कारणत्वात्मिकायाः नियतपूर्ववृत्तिगतजातेरग्नित्वादेरिव सहकारिणामपि प्रधानकारणे विशेषणत्वरूपानुग्राहकत्वसाम्यात् शक्तिपदव्यवहारेतेति सहकारिविषये विवादः । सोऽपि न, सोऽस्ति न वेत्येवंरूपः किन्तु अभावः सहकारी न वेत्येवंरूपः । स च प्रागेव शमित इति विशिष्टार्थः ॥

[52] तथाऽपि चेतन एवायं संस्क्रियते, न भूतानीति कुतो निर्णय इति चेत्—उच्यते । भोक्तॄणां नित्यविभूनां सर्वदेहप्राप्तावविशिष्टायां विशिष्टैरपि भूतैर्नियामकाभावात्प्रतिनियतभोगासिद्धेः । न हि तच्छरीरं तन्मनस्तानीन्द्रियाणि विशिष्टान्यपि तस्यैवेति नियमः ; नियामकाभावात् । (विशेषाभावात् ।) तथा च साधारणविग्रहवत्त्वप्रसङ्गः न च भूतधर्म एव १ कश्चिच्चेतनं प्रत्यसाधारणः ; विपर्ययदर्शनात् ॥ छित्वादिवदिति चेन्न—तस्यापि शरीरादितुल्यतया पक्षत्वात् । नियतचेतनगुणोपग्रहेणैव तस्यापि नियमः, न तु तज्जन्यतामात्रेण ; स्वयमविशेषात् ॥

जातीयत्वरूपं प्रसिद्धमेवेति । यद्वा शक्तिर्योग्यता । सहकार्यभावात् कार्यं न जनयति । सत्त्वे तु जनयेदेवेति हि योग्यतोपपादनीया । तथा च सहकार्यभावप्रयुक्तकार्याभाववत्त्वं कारणत्वम् ।

ननु कार्याभावस्य प्रागभावरूपतया साक्षात्प्रयोज्यत्वाभावात् कार्यस्य सहकारिणश्च स्थितः प्रयोज्यप्रयोजकभाव एवाभावयोरारोप्यत इति वक्तव्यम् । एवं कारणत्वशरीरे सहकारित्वादिविवेचने कारणत्वघटनादात्माश्रय इति चेन्न—प्रयुक्तत्वं व्यापकत्वं ; सहकारिणश्च किञ्चिदित्येव लक्षणे प्रवेशः, न तु सहकारित्वेनेत्यदोषात् । तथा च किञ्चिदभावविशिष्टयद्वस्तुसत्ता कार्याभावव्याप्या तत्त्वं कारणत्वम् । भवति च दण्डाभावविशिष्टचक्रसत्ता घटाभावव्याप्येति चक्रं कारणमिति ।

नन्वीदृशकारणत्वातिरिक्तशक्तिस्वरूपनिषेधविषये भवता किमुच्यत इति चेत्—न किञ्चिदुच्यते । तत् किं तत्सद्भाव एवेति चेन्न—साधकप्रमाणस्याप्यभावात् । ननु साधकबाधकप्रमाणयोरभावात्सन्देहः स्यादिति चेत्—इदमपि कथं भविष्यति ; धर्म्युपलब्धेः यत्र क्वचित्कोट्युपलब्धेश्च संशयं प्रति कारणत्वात् ; शक्तेश्च कथमप्यनुपलब्धत्वात् । एवं चात्यन्तानुपलब्धतया तद्विषयविवादस्याप्ययोगात् , सहकारिष्वपि लोके शक्तिशब्दप्रयोगात् , सहकारिविषय एव विवादो वाच्यः । तत्रापि-प्रतिबन्धकापनेयस्य कस्यचित्सहकारिण उभयसम्मतत्वेनोभाभ्यामपि सहकार्यस्ति न वेति विवादकरणायोगात्—अभावः सहकारी नवेत्येव विवादपर्यवसानम् । तत्र चाभावस्यानुग्राहकत्वं प्रागेव समर्थितमिति कथमितः कथाया अवकाश इति ॥ तथा च सहजशक्तेराधेयशक्तेश्च भूतेष्वभावान्न तद्दृष्टान्तेन यागाद्यतिशयस्य भूतधर्मत्वं प्रष्टुं युक्तमिति ॥

[52] नन्वेवमसिद्धत्वाच्छक्तेर्दृष्टान्तीकरणं मा भूत् । अथापि सर्वमदृष्टं प्रोक्षणादिजन्यं यागादिजन्यं च भूतनिष्ठमेवास्तु ; आत्मनिष्ठमेवेत्यत्र विशेषप्रमाणाभावादिति अनुपदर्शितदृष्टा-

१ अयं व्याख्यासंमतः पाठः । कश्चित् इति क. ख ।

**[53] तथाऽपि तज्जन्यतयैव नियमोपपत्तौ विपक्षे बाधकं किमिति चेत्—कार्यकारणभावभङ्गप्रसङ्गः; शरीरादीनां चेतनधर्मोपग्रहेणैव तद्धर्मजननोपलब्धेः। तद्यथा-इच्छोपग्रहेण प्रयत्नः, ज्ञानोपग्रहेणेच्छादयः, तदुपग्रहेण सुखादय इत्यादि। प्रकृतेऽपि चेतनगता एव बुद्धयादयो नियामकाः स्युरिति चेन्न; शरीरादेः प्राक् तेषामसत्त्वात्।**

---

न्ता एव पृच्छाम इति चेत्–उच्यते। अदृष्टविशिष्टैरपि भूतैर्भोगव्यवस्थापनं न सम्भवति। आत्मनिष्ठत्वे ह्यदृष्टस्य, समवायेन भोगं प्रति समवायेनादृष्टस्य कारणत्वाङ्गीकारात् यत्रादृष्टं तत्रैव फलमिति सिद्ध्यति। भूतनिष्ठत्वे तु समवायेनादृष्टं प्रति स्वाश्रयभूतसंयुक्तत्वसम्बन्धेनैवादृष्टं कारणमास्थेयम्। तथा चात्मनां नित्यत्वाद्विभुत्वाच्च सर्वकालसर्वदेशभवसर्वदेहेन्द्रियादियुक्तत्वात् सर्वदेहगतानामप्यदृष्टानामेकस्मिन्नात्मनि तेन सम्बन्धेन सत्त्वात् कार्यावश्यकतया व्यवस्था न सिद्ध्येत्। न चादृष्टं स्वाश्रयवस्तु स्वामित्वसम्बन्धेन कारणम्, न तु संयुक्तत्वसम्बन्धेनेति न दोष इति वाच्यम्–अस्यैव स्वामित्वमित्यत्र नियामकाभावात्। न चादृष्टमेकस्मिन्नेव भोगं जनयतीति वाच्यम्—भूतधर्मस्य तत्स्वभावत्वायोगात्; नीलपीतादीनां भूतधर्माणां सर्वसमवेतप्रत्यक्षजनकत्वेन साधारण्यस्यैव दर्शनात्। ननु द्वित्वादिसंख्यापरत्वापरत्वादिकमेकैकस्यैव स्वानुभवं जनयति, एकोत्पादितद्वित्वादेरपरेणाग्रहणात्; दात्रा संख्याय दत्ते पुनः प्रतिग्रहीत्रापि संख्यानदर्शनात्। अतस्तद्वददृष्टमप्येकस्यैव भोगं जनयत्विति चेन्न–नीलपीतादिवत् कस्मात् द्वित्वादिकं न साधारणमिति तत्रापि शरीरादिविषय इवास्माभिः प्रश्नस्यावतारणात्। न च तद्भूतजन्यत्वे द्वित्वस्य तत्पुरुषानुभाव्यत्वमिति भूतजन्यतामात्रेण व्यवस्था सम्भवति; एकस्मिन्नेव वस्तुनि चैत्रानुभाव्यस्येव मैत्रानुभाव्यस्यापि द्वित्वस्योत्पत्तिदर्शनात् भूतस्याविशिष्टत्वात् तत्तदनुभाव्यद्वित्वादेरपि स्वरूपे विशेषाभावाच्च तदसम्भवात्। अतो द्वित्वादेरपि चेतनधर्मोपग्रहेणैव नियमो न तु तज्जन्यतामात्रेण। अतोऽत्रापि चेतनधर्मसिद्धिः। तथा च देवदत्तशरीरादिकं तत्समवेतगुणाकृष्टं कार्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वदिति पूर्वोक्तमनुमानं द्रष्टव्यमिति ॥

[53] नन्वप्रयोजकमिदमनुमानम्। न चैतदस्वीकारे उक्तव्यवस्थाभङ्ग इति वाच्यम्–अभङ्गात्। तथा हि—द्वित्वादेश्चेतनधर्मोपग्रहेणैव प्रत्यक्षादिजनकत्वमित्यस्य कोऽर्थः ? किं चेतनधर्मजन्यत्वमात्रेण नियम इति, किं वा चेतनधर्मसहकारिकत्वेनैव नियम इति। नाद्यः, अपेक्षाबुद्धिजन्यत्वस्य द्वित्वादौ सत्त्वेन तस्यास्मादिष्टत्वात्। तद्रीत्या प्रकृतेऽपि शरीरादेः परम्परया जन्मान्तरीययागादिकृत्यात्मकचेतनधर्मजन्यतया व्यवस्थासम्भवात्। नान्त्यः चेतनधर्म इति किमदृष्टमुतापेक्षाबुद्धिः ? नाद्यः तस्यासिद्धतया द्वित्वप्रत्यक्षे तत्सहकारिकत्वायोगात्। नान्त्यः,

**तथा च निरतिशयाश्चेतनाः साधारणानि भूतानीति न भुक्तिनियम उपपद्यते ॥**

अपेक्षाबुद्धेर्द्वित्वं प्रत्येव कारणत्वात्, द्वित्वप्रत्यक्षं प्रत्यकारणत्वात् । न चैकपुरुषापेक्षाबुद्धिजन्यद्वित्वेऽप्यन्यपुरुषेन्द्रियसंयुक्तसमवायरूपसन्निकर्षात् तस्य तत्प्रत्यक्षापत्तिरित्यपेक्षाबुद्धेः प्रत्यक्षं प्रति कारणत्वमावश्यकमिति वाच्यम्—एवमपि तद्द्वित्वाजनकापेक्षाबुद्धिमति पुरुषे तद्द्वित्वप्रत्यक्षापत्तेरनिवारणात् । अतस्तत्पुरुषाधीनद्वित्वस्यैव तत्पुरुषप्रत्यक्षयोग्यत्वमित्यङ्गीकारादन्यद्वित्वस्यान्यविषयेऽयोग्यतया गुरुत्वादिवदग्रहणोपपत्तिः । अतो न प्रत्यक्षस्यापेक्षाबुद्धिसहकारिकत्वम् । एवं 'तज्जन्यतामात्रेणे' त्यस्य कोऽर्थः ? किमपेक्षाबुद्धिजन्यतामात्रेणेति, किं वा भूतजन्यतामात्रेणेति । आद्ये न काचिदनुपपत्तिः, अपेक्षाबुद्धिसहकारिकत्वं बिना तज्जन्यतामात्रेणोपपत्तेरुक्तत्वात् । अन्त्येऽपि न दोषः, भूतस्यापि तत्पुरुषापेक्षाबुद्धिसहकारेण तन्मात्रानुभाव्यद्वित्वजनकत्वं स्वभाव इति तज्जन्यतयाऽपि नियमोपपत्तेः । एवंच प्रकृतेऽपि तदीयकृतिजन्यत्वादेव तददृष्टं तदाश्रयभूतवर्गश्च तद्भोगसाधनमिति व्यवस्थेति चेत्—चेतनगुणसहकारिकत्वानङ्गीकारे कार्यकारणभावभङ्गप्रसङ्गः । शरीरादीनां चेतनविशेषगुणसहकारिकतयैव चेतनविशेषगुणजनकत्वदर्शनात् चेतने समवायेन विशेषगुणं प्रति समवायेन विशेषगुणस्य कारणत्वात् । यथा प्रयत्ने इच्छा सहकारिकारणम् , इच्छाद्वेषादौ ज्ञानं, इच्छाद्वेषादि च सुखदुःखादाविति । प्रकृते च शरीरादिना प्रथममुत्पाद्यमाने ज्ञाने न ज्ञानादिकं सहकारि , पूर्वं तदभावात् । ज्ञानादौ शरीरस्य कारणत्वात् । अतः सिद्ध्यन् विशेष गुण एवादृष्टम् । तच्च शरीरद्वारा ज्ञानसुखादिकमुत्पादयितुं शरीरादिकमपि स्वयमुत्पादयतीति शरीरादेरपि तदधीनत्वम् । अतः शरीरादेस्तद्गुणाकृष्टत्वं तद्गुणसहकारिकत्वतद्गुणाधीनत्वोभयरूपम् । तथा च पूर्वोक्तमनुमानं निर्दुष्टम् । एवं चानेन विशेषगुणेनैव नियमनिर्वाहे भूतधर्मस्य नियामकत्वं न स्वीकर्तव्यमिति भूतानां साधारण्यमेव । अतो भोगव्यवस्थानुपपत्त्या चेतनानां सातिशयत्वसिद्धिरिति ॥

[ननु प्रयत्नत्वावच्छिन्नं प्रतीच्छाया इच्छात्वाद्यवच्छिन्नं प्रति ज्ञानादेर्विशिष्यैव कार्यकारणभावः ; न पुनरात्मविशेषगुणत्वावच्छिन्नं प्रति आत्मविशेषगुणस्य ; मानाभावात् । अतो नादृष्टस्यात्मनिष्ठत्वमिति चेन्न–यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोरपीति न्यायेन सामान्यकार्यकारणभावस्यापि सिद्धेः । नन्वदृष्टरूपात्मविशेषगुणस्यात्मविशेषगुणजन्यत्वाभावाद्व्यभिचारः ; होमादिस्थले तस्य प्रक्षेपाद्यात्मकशारीरव्यापारजन्यत्वेऽप्यात्मगुणजन्यत्वाभावात् । न च तत्र तादृशव्यापारानुकूलकृतिजन्यत्वमस्तीति वाच्यम्— कृतेर्व्यापारं प्रत्येव कारणत्वेनान्यथासिद्धत्वादिति चेत्—तस्य कृतिजन्यत्वस्यापि स्वीकारान्न दोष इति ॥ इदमत्र बोद्धव्यम्—अदृष्टस्य भूतधर्मत्वं तावन्न सम्भवति । स्वर्गसाधनयागोत्पाद्यं ह्यदृष्टं किं यागाद्यवच्छेदकदेहे उत्पद्यते,

[54] **एतेन सांख्यमतमपास्तम् । एवं हि तत् । अकारणमकार्यः कूटस्थचैतन्यस्वरूपः पुरुषः । आदिकारणं प्रकृतिरचेतना परिणामिनी । ततो महदादिसर्गः। न हि चितिरेव विषयबन्धनस्वभावा ; अनिर्मोक्षप्रसङ्गात् । नापि प्रकृतिरेव तदीयस्वभावा ; तथाऽपि नित्यत्वेनानिर्मोक्षप्रसङ्गात् । नापि घटादिरेवाहत्य तदीयः ; दृष्टादृष्टत्वानुपपत्तेः । नापीन्द्रियमात्रप्रणाडिकया ; व्यासङ्गायोगात् । नापीन्द्रियमनोद्वारा ; स्वप्न-**

---

स्वर्गलोकभाविभोगसाधने शरीरेन्द्रियादौ वा । नाद्यः ; भोगकाले तस्य नाशात् । नान्त्यः ; यागोत्पत्तिकाले तदभावेन तत्र तदुत्पादनायोगात् । न च परम्परया तादृशशरीरादिहेतुषु परमाणुषु तदुत्पादनामिति वाच्यम्—अदृष्टवतामेव भूतानां भोगसाधनत्वेन तद्रहितशरीरादेरसाधनत्वापत्तेः । न च परमाण्वादिगतमदृष्टं तज्जन्ये शरीरादौ क्रमेण संक्रामेत्—अमूर्तस्य संक्रमासमर्थत्वात् । न च सजातीयादृष्टान्तरजननमेव संक्रम इति वाच्यम्——अनन्तादृष्टधाराकल्पनप्रसङ्गात् । एवं देहगेहक्षेत्रकलत्राद्यनन्तभोगसाधनसम्बन्धिषु परमाण्वपरिमितेषु प्रतिव्यक्तिभिन्नादृष्टकल्पने एकस्यैवादृष्टस्य तावदधिकरणत्वकल्पनं वा महद्गौरवम् । तथा समवायेनादृष्टं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन होमादेः कारणत्वमिति लघुसम्बन्धमुपेक्ष्य, स्वानुकूलकृतिमत्पुरुषसंयुक्तत्वसम्बन्धेन होमादेः कारणत्वमिति कारणस्य परमाण्वादिवृत्तित्वसम्पादनाय गुरुसम्बन्धग्रहणेनापि गौरवम् । पुनरप्यत्र समवायेन भोगं प्रति समवायेनादृष्टं कारणमिति लघुरीतित्यागेन पूर्वोक्तकारणतावच्छेदकसम्बन्धस्वीकारेण भोगकारणत्ववर्णनेऽपि गौरवम् । यागफलयोर्व्यवहितयोः कार्यकारणभावासम्भवबलकल्पितस्यादृष्टस्यापि तदैकाधिकरण्ये सुखोपस्थिते सति तत्त्यागेनानुपस्थिताधिकरणग्रहणाच्च गौरवम् । एवं व्रीहीन् प्रोक्षतीत्यादौ भवता प्रोक्षणादिजन्यादृष्टस्य व्रीह्यादिषु कल्प्यतयाऽऽश्रयनाशात्तन्नाशावश्यंभावेन पिष्टादिकाल एव तदभावे यागापूर्वासिद्धिप्रसङ्गः । पिष्टादावदृष्टान्तरोत्पत्त्यङ्गीकारे चानन्तादृष्टकल्पना । तस्यादृष्टस्य तावत् व्रीहिपर्याप्तत्वे एकव्रीह्यपायेऽपि तन्नाशापत्तिः । प्रत्येकपर्याप्तत्वेऽनन्तादृष्टप्रसङ्गः । अनेकाधिकरणकल्पनगौरवं च । सर्वमिदं '**न भूतैः संस्कृतैरपि**, '**विशिष्टैरपि भूतै**' रिति भूतानामदृष्टविशिष्टत्वासम्भवज्ञापकेन अपिशब्देन सूचितमिति ॥ ]

[54] एतेन भूतादृष्टपक्षे नित्यविभुपर्वातमसम्बन्धाविशेषात् सर्वस्य सर्वसाधारण्यापत्तिदोषवर्णनेनान्तःकरणगतमदृष्टं नित्यविभूनात्मनश्च स्वीकुर्वतः सांख्यस्य मतमपि निरस्तम् । इत्थं हि तन्मतम्—प्रपञ्चान्तर्गतानि तत्त्वानि पञ्चविंशतिः । पुरुषः, प्रकृतिः, महान्, अहङ्कारः, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च भूतानि चेति । तत्र पुरुषः केवलचैतन्यं निर्विकारत्वात् कूटस्थपदवाच्यः अत एव न कस्यचित् कारणं कार्यं

दशायां वराहव्याघ्राद्यभिमानिनो नरस्यापि नरत्वेनात्मो[1]पधानायोगात्। नाप्यहङ्कारपर्यन्तव्यापारेण; सुषुप्त्यवस्थायां तद्व्यापारविरमेऽपि श्वासप्रयत्नसन्तानावस्थानात्। तद् यदेतास्ववस्थासु सव्यापारमेकमनुवर्तते, यदाश्रया चानुभववासना, तदन्तःकरणमुपारूढोऽर्थः पुरुषस्योपधानी भवति। भेदाग्रहाच्च निष्क्रियेऽपि तस्मिन् पुरुषे कर्तृत्वाभिमानः, तस्मिन्नचेतनेऽपि चेतनाभिमानः तत्रैव कर्मवासना। पुरुषस्तु पुष्करपलाशवत् [2] सर्वथा निर्लेपः॥

---

वा। प्रकृतिर्जडापरिणामस्वभावा, प्रकरोति जनयतीति व्युत्पत्त्याऽवधारणगम्या किञ्चिदजन्यत्वे सति कारणभूता। प्रकृतितोऽन्येषां क्रमेण सृष्टिः। ननु किमिति महदहङ्कारादितत्त्वस्वीकार इति चेदुच्यते—यद्यविच्चैतन्यस्वरूपस्यात्मनो विषयविषयकत्वं तच्चास्वाभाविकं, तर्हि मोक्ष एव न स्यात्। एवं प्रकृतेः स्वयमेव चैतन्यसम्बन्धित्वस्वीकारे स एव दोषः। विषयाणां साक्षादेव चैतन्यसम्बन्धित्वस्वीकारे कुड्यादिव्यवहितस्यापि तदीयत्वापत्त्या दृष्टादृष्टव्यवस्था न स्यात्। अत इन्द्रियमावश्यकम्। एवमप्येकत्र व्यासङ्गदशायामपरस्यापि सन्निकृष्टस्य ग्रहणापत्त्या मनःकल्पनम्। तथाऽपि स्वप्नदशायां कदाचिन्नरत्वेन स्वाभिमाने सत्यपि व्याघ्रोऽहमित्याद्यभिमानदशायां नरोऽहमित्यात्मग्रहणस्यायुक्तत्वात्, मनोमात्राधीनत्वे कदाचिदिव सर्वदा नरत्वेन ग्रहणप्रसङ्गात्, मनसस्तत्रासामर्थ्ये स्वप्ने कदाऽपि नरत्वेनात्मग्रहणायोगात् तद्व्यवस्थापकत्वस्वभावशाली अहङ्कार इष्यते। एवमिन्द्रियाद्यहङ्कारपर्यन्तवस्तुव्यापारमात्रेणापि न विषयस्य चैतन्यसम्बन्धित्वोपपादनं युक्तम्—सुषुप्तौ तावद्व्यापाराभावेऽपि श्वासप्रश्वासहेतुप्रयत्नसन्तानानुवृत्त्या तद्धेतोस्तत्त्वान्तरस्यावश्यकत्वात्। एवं श्वासादिव्यापारशालितया जाग्रदादिसर्वावस्थानुवर्तित्वात् संस्काराणां तत्रैव स्वीकारसम्भवाच्चान्तःकरणस्यैव प्राधान्यम्। तदुपारूढाः विषयाः पुरुषं संबध्नन्ति। यत्तु अहमिदं करोमीति पुंसो विषयकर्तृत्वानुभवः स न वास्तवः। किं तु पुंसो महतश्च मिथो भेदाग्रहणात् महत्तत्त्वनिष्ठस्य कर्तृत्वस्य स्वस्मिन्नभिमानः। महत्तत्त्वस्य कर्तृत्वं चोक्तभेदाग्रहाधीनात् स्वस्मिन् पुरुषस्वरूपचैतन्याभिमानात्। अतो वास्तवकर्तृत्वाश्रयं महत्येवादृष्टमपि। न तु पुरुषे; तस्य निर्विकारत्वात्॥

---

[1] 'नरत्वेनार्थोपधानाभावादिति केचित्पठन्ति। तत्र यथा वराहोऽहमिममर्थं जानामीत्यभिमन्यते। तथा नरोऽहमिममर्थं जानामीत्यर्थोपधानं नास्ति। तस्मान्नियतविषयाभिमानवानन्यः स्वीकर्तव्यः।' इति बो.।

[2] बो 'सर्वथेति अनुभवतद्वासनातत्फलैः कर्म तद्वासना तत्फलैश्चेत्यर्थः।' सर्वथेति पदं नान्यत्र।

[55] आलोचनं व्यापार इन्द्रियाणां ; विकल्पस्तु मनसः ; अभिमानोऽहङ्कारस्य ; कृत्यध्यवसायो बुद्धेः । सा हि बुद्धिरंशत्रयवती ; पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेत्यंशाः । भवति हि मयेदं कर्तव्यमिति । तत्र मयेति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपराग इन्द्रियप्रणाडिकया परिणतिभेदो दर्पणस्येव निश्वासाभिहतस्य मलिनिमा पारमार्थिकः । एतदुभयायत्तो व्यापारावेशोऽपि । तत्रैवंरूपव्यापारलक्षणाया बुद्धेर्विषयोपरागलक्षणं ज्ञानम् । तेन सहयः पुरुषोपरागस्यातात्त्विकस्य सम्बन्धो दर्पणप्रतिबिम्बितस्य मुखस्येव मलिनिम्ना, सोपलब्धिरिति ॥ तदेवमष्टावपि धर्मादयो भावा बुद्धेरेव ; तत्सामानाधिकरण्येनाध्यवसीयमानत्वात् । न च बुद्धिरेव स्वभावतश्चेतनेति युक्तम्—परिणामित्वात् ; पुरुषस्य तु कूटस्थनित्यत्वादिति ।

---

[55] ननु कथमर्थानामन्तःकरणारूढत्वं, कथं च महतः पुंसश्च भेदाग्रहः, कथं चार्थानां पुरुषोपधानत्वमिति चेदुच्यते । इन्द्रियव्यापारो निर्विकल्पकं; सविकल्पकं मनसः ; अहमित्यभिमानोऽहङ्कारतत्त्वस्य ; मयेदं कर्तव्यमित्यध्यवसायो महत्तत्त्वस्य । अस्मिंश्चाध्यवसाये यथावत् महत्तत्त्वेन चेतनापरपर्यायात्मदर्थोल्लिखेन मयेत्येवं स्वस्वरूपग्रहणम्, तत् स्वस्मिन् चेतनोपरागात् । अयं च चेतनोपरागश्चेतनतादात्म्यं स्वच्छत्वान्महत्तत्त्वस्य तत्र कृत्स्नांशे प्रतिफलिताच्चेतनतो विवेकाग्रहणाद्भवति । तदयं दर्पणात् दूरस्थस्य मुखस्य दर्पणे संबन्ध इवातात्त्विकः । अन्तःकरणस्येन्द्रियकुल्याद्वारा बहिः प्रसृत्य, केदारे जलस्येव, घटादौ तत्तदाकारपरिणामेन यः सम्बन्धः स एव विषयोपरागः इदमित्यंशसम्बन्धः । स च तात्त्विको दर्पणस्येव निश्वासमलिनिमा । एवं महत्तत्त्वस्य चेतनाभिमाने विषयसम्बन्धे च सति कर्तव्यमिति कृत्यध्यवसायो भवतीति । एवं तावद्भेदाग्रहणे अर्थानामन्तःकरणोपरोहणं चोक्तम् । एषां चार्थानां पुरुषोपधानमुपलब्धिरित्युच्यते । अस्मिन् हि मते न बुद्धिचैतन्यज्ञानोपलब्धिपदानां पर्यायता । बुद्धिर्महत्तत्त्वम्, चैतन्यमात्मा । प्रागुक्तो विषयसम्बन्धोऽयं घट इत्याकारकज्ञानम् । एवमुपरक्तेन विषयेणान्तःकरणगतचैतन्यप्रतिबिम्बस्य, दर्पणगतमुखप्रतिबिम्बस्य, मलिनिम्नेव, यः सम्बन्धः अहमिदं जानामीत्याकारकः, सैवोपलब्धिरिति । स चायमतात्त्विकः । तस्मात्पुरुषस्य निर्विकारत्वात्, विकारभूतकृतिसामानाधिकरण्येन गृह्यमाणा धर्मादयो बुद्धिगता एव । ते चाष्टौ भावाः—धर्माधर्मसुखदुःखेच्छाद्वेषज्ञानप्रयत्नाः एवं अध्यवसायसामानाधिकरण्येन गृह्यमाणत्वात् अध्यवसायाश्रयबुद्धिनिष्ठतया सांख्यशास्त्रे, 'अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् । सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्त'-मित्युक्ताः धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यात्मकाश्च । ननु किमर्थमात्मान्तराङ्गीकारः, महत्तत्त्वमेव वस्तुतश्चेतनमस्त्विति चेन्न—परिणामिनः सविकारस्य कूटस्थत्वासम्भवादिति ॥

[56] तदेतदपि प्रागेव निरस्तम् । तथा हि—

कर्तृधर्मा नियन्तारः चेतिता च स एव नः।
अन्यथाऽनपवर्गः स्यादसंसारोऽथवा ध्रुवः॥ १४॥

कृतिसामानाधिकरण्यव्यवस्थितास्तावद्धर्मादयो नियामका इति व्यवस्थितम्। चेतनोऽपि कर्तैव ; कृतिचैतन्ययोः सामानाधिकरण्येनानुभवात्। न चायं(नायं) भ्रमः ; बाधकाभावात्॥ परिणामित्वाद्घटवदिति बाधकमिति चेन्न—कर्तृत्वेऽपि समानत्वात्। तथा च कृतिरपि १ (स्वा)भाविकी महतो न स्यात्॥ दृष्टत्वादयमदोष इति चेत् तुल्यम्॥ २ अचेतनाकार्यत्वं बाधकं, कार्यकारणयोस्तादात्म्यादिति चेन्न—असिद्धेः। न हि कर्तुः कार्यत्वे प्रमाणमस्ति । प्रत्युत 'वीतरागजन्मादर्शना' (न्या-३. १. २५)दिति न्यायादनादित्वैव सिद्ध्यति। यच्च कार्ये रूपं दृश्यते तस्य तस्य कारणात्मकत्वे रागादयोऽपि प्रकृतौ स्वीकर्तव्याः स्युः । तथा च सैव बुद्धिः, न प्रकृतिः ; भावाष्टकसम्पन्नत्वात्॥

---

[56] इदं च सांख्यमतमित्थं निरस्यते—कर्तृधर्माः नियन्तारः ; चेतिता च स एव नः। कृतिसामानाधिकरण्य सत्येव धर्माधर्मयोः प्रतिनियतभोगसाधनत्वं भवतीति भूतादृष्टवादनिरासावसरे निरूपितम्। अतः अदृष्टानि कर्तृनिष्ठानि भोगनियामकानीत्यत्र न विवादः । एवं कर्तैव चेतनोऽपि भवतीत्येतावत्सांख्यं प्रति भ्रमः ; चेतनोऽहङ्करोमीति कृतिचैतन्ययोः सामानाधिकरण्यग्रहणात् । न च भेदाग्रहादेवं व्यवहार इत्युक्तमिति वाच्यम्—अस्याः प्रतीतेः प्रमात्वे बाधकाभावाद्भेदाग्रहकल्पनस्यायुक्तत्वात् । ननु बुद्धिर्न चेतना परिणामित्वात् घटवदित्यनुमानं बाधकमिति चेन्न—बुद्धिर्न कर्त्री परिणामित्वादित्यप्यनुमानसंभवात् । तथा च महत्तत्त्वस्य चैतन्यमिव कर्तृत्वमपि स्वाभाविकं न स्यात्। ननु ज्ञानं तावद्विषयोपरागरूपं बुद्धिनिष्ठमिति प्राग्वर्णितम् । ततश्च जानन् करोमीति सामानाधिकरण्यस्य प्रत्यक्षसिद्धत्वाद्बुद्धिरगुण इत्यनुमानस्येवाकर्तृत्वानुमानस्य प्रत्यक्षबाध इति चेन्न—चेतनोऽहङ्करोमीति कृतिसामानाधिकरण्यप्रतीत्याऽचेतनत्वानुमानस्यापि बाधात् । अथ कर्ता अचेतनोऽचेतनकार्यत्वादित्यनुमानमस्तु। न चात्रापि बाधः शङ्क्यः ; अचेतनकार्यत्वेऽपि चैतन्याङ्गीकारे कार्यकारणयोस्तादात्म्यस्य प्रमाणसिद्धस्य भङ्गप्रसङ्गाच्चेतनोऽहं करोमीति प्रतीतेर्भेदाग्रहमादायैवोपपादनादिति चेन्न-हेत्वसिद्धेः। कर्तुः कार्यत्वसाधकाभावात् । जातमात्रस्यैव प्रथमतः स्तन्यपानादिप्रवृत्तिदर्शनेन तत्कारणभूतस्य स्तन्यपाने रागस्यावश्याङ्गीकार्यतया सरागस्यैव जन्मदर्शनात् तद्रागमूलस्येष्टसाधनताज्ञानस्य संप्रति स्मरणात्मकस्य पूर्वानुभवसापेक्षतया जन्मान्तरसिद्धौ अनयैव युक्त्या कर्तुरना-

---

१ प्रकाशे भाविकीति पाठः। २ बोधन्याद्यनुसारेण स्त्रीलिङ्गनिर्देशः।

स्थूलतामपहाय सूक्ष्म(रूप)तया ते तत्र सन्तीति चेत् चैतन्यमपि तथा भविष्यति। तथाऽप्यसिद्धो हेतुः ॥ तथा सति घटादीनामपि चैतन्यप्रसङ्गः, तादात्म्यादिति चेत्—रागादिमत्त्वप्रसङ्गोऽपि दुर्वारः ॥ सौक्ष्म्यं च समानमिति ॥ तस्मात् यज्जातीयात् कारणाद्यज्जातीयं कार्यं दृश्यते, तथा भूतात्तथाभूतमात्रमनुमातव्यम्; न तु यावद्धर्मकं कारणं तावद्धर्मकं कार्यं, व्यभिचारादिति किमनेनाप्रस्तुतेन ॥

[57] यदि च बुद्धिर्नित्या; अनिर्मोक्षप्रसङ्गः। पुंसः सर्वदा सोपाधित्वे स्वरूपेणानवस्थानात्। अथ विलीयते, ततो नाऽनादेर्विलय इत्यादिमत्त्वे, तदनुत्पत्तिदशायां को नियन्ता? प्रकृतेः साधारण्यात्। तथा चासंसारः। पूर्वपूर्वबुद्धिवासनानुवृत्तेः साधारण्येऽप्यसाधारणीति चेत्—बुद्धिनिवृत्तावपि तद्धर्मवासनानुवृत्तिरित्यपदर्शनम्।

---

दित्वसिद्ध्या कार्यत्वं बाधकस्यैव दर्शनाच्च। किं च कथं त्वदुक्तकार्यकारणभावभङ्गप्रसङ्गः। न हि तादात्म्यमात्रेण कार्यगतयावद्धर्मवत्त्वं कारणस्य त्वदिष्टम्। तथा सति तत एव तादात्म्यात् बुद्धिगतरागद्वेषादिगुणाष्टकस्यापि प्रकृतौ स्वीकारापत्तेः। न चेष्टापत्तिः; तर्हि गुणाष्टकसम्पन्नत्वरूपबुद्धिलक्षणाक्रान्तत्वात्तस्याः बुद्धित्वमेव स्यात्, न प्रकृतित्वम्। न च तादात्म्यात्तद्गुणवत्त्वस्यावश्यकत्वेऽपि सूक्ष्मगुणाष्टकवत्त्वमेवेष्यते। बुद्धिलक्षणं त्वनुभवयोग्यस्थूलगुणाष्टकवत्त्वमिति वाच्यम्—तर्हि चैतन्यमपि हि सूक्ष्मं तत्र भवितुमर्हति। तथा चोक्तानुमाने कर्तृत्वेन पक्षमनिर्दिश्य बुद्धित्वेन तन्निर्देशे पूर्वोक्तरीत्याऽसिद्ध्यभावेऽपि कारणस्य प्रकृतेरुक्तरीत्या चेतनत्वादचेतनत्वाभावाद्धेतुतावच्छेदकविशिष्टहेत्वसिद्धिरस्त्येव। ननु प्रकृतौ सूक्ष्मचैतन्यस्वीकारे तत्कार्यघटादेरपि चेतनत्वप्रसङ्ग इति चेत्—रागादिमत्त्वप्रसङ्गोऽपि भवेदेव। अस्तु तत् सूक्ष्मं तत्रेति चेत्—रागादिकमप्येवमस्तु। इष्टापत्तिरिति चेत्—तर्हि बुद्धावपि रागादेः सौक्ष्म्यं तुल्यं स्यात् घटादिवत् प्रकृतिकार्यत्वाविशेषात्। अतो रागादिविधुरप्रकृतिजन्याऽपि बुद्धौ रागादिमतीत्येव युक्तम्। तस्माद्व्यभिचारादेकजातीयात्कारणादन्यजातीयमपि कार्यं भवतीति यथादर्शनं स्वीकार्यम्; न तु कारणवृत्तियावद्धर्मवत्त्वं कार्यस्येति प्रकृतेरचेतनत्वेऽपि बुद्धेरचेतनत्वाभावो युज्यत इति किमनेन यावद्धर्मवत्त्वाभावे मिथः कार्यकारणयोस्तादात्म्यं सिद्ध्यति न वेत्यप्रस्तुतेन विचारेण। कारणात्कार्ये कश्चिदतिशयस्तु प्रामाणिक इति। अतश्चेतनोऽहं करोमीति प्रतीत्या बाधितमचेतनत्वानुमानमिति ॥

[57] अन्यथानपवर्गः स्यादसंसारोऽथवा ध्रुवः। एवं कर्तुश्चेतनत्वमनभ्युपगम्य निर्लेपचेतनान्तरस्वीकारे कथं बन्धमोक्षोपपादनम्। तादृशबुद्धिसम्बन्धाद्भेदाग्रहादिति चेत्—सेयं बुद्धिर्नित्याऽनित्या वा। आद्ये सर्वदा बुद्धिसम्बन्धान्मोक्ष एव न स्यात्। अन्त्ये तस्या

**सौक्ष्म्यान्न दोष इति चेत्—मुक्तावपि पुनःप्रवृत्तिप्रसङ्गः । निरधिकारत्वान्नैवमिति चेत्—तर्हि साधिकारा १ प्रसुप्तस्वभावा बुद्धिरेव प्रकृतिरस्तु, कृतमन्तरा प्रकृत्यहङ्कारमनःशब्दानामर्थान्तरकल्पनया । सैव हि तत्तद्व्यापार २ योगात्तेन तेन शब्देन व्यपदिश्यते शारीरवायुवदिति आगमोऽपि संगच्छते इत्यतोऽपि हेतुरसिद्धः । अधिकारनिवृत्त्या बुद्धेरप्रवृत्तिरपवर्गः । वासनायोगश्चाधिकारः । ततः संसारः ॥**

[58] **धर्मधर्मिणोरत्यन्तभेदे च कौटस्थ्याविरोधः । भेदश्च विरुद्धधर्माध्यासलक्षणो घटपटादिवत् प्रत्यक्षसिद्धः । न च सामानाधिकरण्यादभेदोऽपि । तद्धि समानशब्दवाच्यत्वं, एकज्ञानगोचरत्वं, एकाधिकरणत्वं, आधाराधेयभावः, विशेष्यत्वं, स-**

अनादित्वेऽनादिभावस्य नाशायोगेनानित्यत्वासिद्ध्या सादित्वमपि स्वीकार्यमिति बुद्ध्युत्पत्तेः पूर्वं बन्धकाभावादसंसारापत्तिः । न च प्रकृतिरेव बन्धिका; तस्याः निर्विशेषतया मोक्षकाल इव बन्धकत्वायोगात् । नन्वनादिसंसारे पूर्वोत्पन्नबुद्धिजनिता वासना पुनर्बुद्ध्युत्पत्तिपर्यन्तं प्रकृतावनुवर्तते, तद्विशिष्टा सा बन्धिकेति चेत् —त्वन्मते धर्मधर्मिणोरभेदाद्बुद्धिनिवृत्तौ कथं तद्गतवासनानुवृत्तिः ? बुद्धिरपि सूक्ष्मरूपेण सर्वदाऽस्तीति चेत् मुक्तावपि तर्हि संसारप्रवृत्तिः स्यात् । ननु वासनाविशिष्टा बुद्धिर्बन्धिका ; तदा तु वासनारूपोऽधिकारो नास्तीति चेत्—तर्हि सर्वदा बुद्धिस्वीकारे तस्या एव प्रबुद्धवासनत्वे बुद्धित्वं, प्रसुप्तवासनत्वे च प्रकृतित्वमिति सुवचत्वादतिरिक्तप्रकृतिर्न स्यात् । एवमहङ्कारमनोरूपपरिणामद्वयमपि मध्ये न स्वीकर्तव्यम्— तत्र तत्र स्वीकृतासाधारणव्यापारस्य बुद्धावेव सुस्वीकरत्वात् । आगमेषु प्रकृत्यादिविभिन्नशब्दव्यपदेशोऽपि एकस्मिन् प्राणवायौ प्राणापानादिव्यपदेशवत् तत्तद्व्यापारभेदमात्रादेकनिष्ठादेव सङ्गच्छते । तथा चैवंप्रकारेणापि बुद्धेः प्रकृत्यनतिरिक्ततयाऽचेतनकार्यत्वरूपोक्तहेतोरसिद्धिरवधार्यताम् । एवं चास्या एव बाधकप्रमाणाभावादस्मदुक्तचेतनत्वसिद्धौ अदृष्टात्मकवासनासत्त्वे बन्धः, तदभावे मोक्ष इत्यस्मदुक्तप्रकार एवावलम्ब्येतेति, बुद्धिरिति नामभेदमात्रं, स एवात्मेति ॥

[58] नन्वात्मनः कृत्यादिमत्त्वे कूटस्थत्वासिद्धिरिति चेन्न—धर्मधर्मिणोरत्यन्तभिन्नत्वेन कृत्यादिनाशेऽपि धर्मिणो नित्यत्वोपपत्तेः । घटपटादौ भेदस्य हि विरुद्धधर्माध्यास एव ज्ञापकः । स चात्रापि अहं करोमि, अहमकार्षमित्येवं नित्यत्वानित्यत्वाधारत्वाधेयत्वादिरूपः समस्त्येव । न चात्यन्ताभेदे घटो घट इतिवत् अत्यन्तभेदेऽपि घटः पट इति सामानाधिकरण्यादर्शनात्,

१ बो. '**अप्रसुप्तस्वभावा**' तत्तत्कार्यपरिणामोन्मुखी । प्र. मुक्तौ तु प्रसुप्तस्वभावा प्रवृत्त्यजनिकेति' । २ प्र. '**तत्तद्व्यापारयोगात्**-आदिकारणत्वाभिमानकारणत्वादियोगात्' बो. 'तत्तद्व्यापारभेदात्प्रकृत्यादिव्यपदेशः' । **तत्तद्व्यवहारगोचरे**ति पाठान्तरं व्याख्यात्रसंमतं क्लिष्टार्थं च ।

म्बन्धमात्रं वा भेदे एव भेदेऽपि चोपपद्यमानं, नाभेदं स्पृशतीति सर्वमवदातम् ॥

[59] स्यादेतत् । नित्यविभुभोक्तृसद्भावे सर्वमेतदेवं स्यात् । स एव कुतः ? भूतानामेव चेतनत्वात् । कायाकारपरिणतानि (भू) तानि तथा ; अन्वयव्यतिरेकाभ्यां तथोपलब्धेः । कर्मज्ञानवासने तु सर्वत्र प्रतिभूतनियते अनुवर्तिष्येते, यतो भोगप्रतिसन्धाननियम इति चेत्—उच्यते ।

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

---

'नीलो घटः', 'अहं करोमि'त्येवं सामानाधिकरण्यस्य दर्शनाच्च न धर्मधर्मिणोरत्यन्तभेदः ; किंतु, भेदाभेदाविति वाच्यम्—शब्दयोः सामानाधिकरण्यस्यैकार्थवाचित्वरूपत्वेऽपि प्रकृतेऽर्थयोर्धर्मधर्मिणोः सामानाधिकरण्यस्य तद्रूपत्वायोगात् किमिदं सामानाधिकरण्यमिति विचार्यम् । तत्र यद्यधिकरणपदेन शब्दः, ज्ञानं, कालादिकमधिकरणं वा गृह्यते—तर्हि समानशब्दवाच्यत्वं, समानज्ञानविषयत्वं, समानकालाद्यधिकरणकत्वं वा तत् सिद्ध्यति । यदि तु तावद्विवक्षां विना नीलो घट इति प्रतीतिसिद्ध आधाराधेयभावः, विशेषणविशेष्यभावः, सम्बन्धमात्रं वा सामानाधिकरण्यमितीष्यते—सर्वथा सामानाधिकरण्यमिदं भेद एवोपपद्यमानं, न त्वभेदे ; सर्वस्यास्योभयमादायैव निरूप्यत्वात् । कथञ्चित् सम्बन्धमात्रादिरूपं सामानाधिकरण्यं तादात्म्यसम्बन्धादिकमादायापि सुवचत्वादभेदे उपपद्यमानमपि भेदेऽप्युपपद्यमानं, न त्वभेदमात्रे ; तादात्म्यसम्बन्धस्यैव विशिष्य ग्रहणे प्रमाणाभावात् । अतः सामानाधिकरण्यमिदं नाभेदं साधयति । अतः पूर्वोक्तविरुद्धधर्माध्यासबलेन धर्मधर्मिणोरत्यन्तभेद एव सिद्ध्यतीति सिद्धं चेतन एव कूटस्थः कर्ता भोक्ता प्रकृतादृष्टवांश्चेति ॥

[59] नन्वदृष्टस्य भूतधर्मत्वं यदिदं नित्यविभुसर्वचेतनसम्बन्धाविशेषात् भूतस्य सर्वसाधारण्यप्रसञ्जनं, तच्चेतनस्य कस्यचिन्नित्यविभोः सत्त्वे किल भवति । तदेव न ; भूतातिरिक्तचेतनसत्त्वे मानाभावात् । न च घटादीनामपि चेतनत्वापत्तिः ; अन्वयव्यतिरेकाभ्यां शरीरात्मकं भूतमेव चेतनमित्यङ्गीकारात् ; संस्थानविशेषविशिष्टस्यैव ज्ञानं प्रति कारणत्वात् । तत्र च येन शरीरेण किञ्चित् कृतमनुभूतं वा तत्रैवादृष्टाख्यायाः कर्मवासनायाः संस्काराख्याया ज्ञानवासनायाश्चानुवृत्त्यङ्गीकारात् अन्यत्रानुवृत्त्यभावाद्भोगनियमः स्मरण(प्रतिसन्धान)नियमश्च भवत इति चेन्न—विकल्पासहत्वात् । उत्पद्यमानमिदं ज्ञानं सर्वावयवनिष्ठं वा यत्किञ्चिदवयवनिष्ठं वा । आद्य उपचयापचयाभ्यां प्रतिदिनं शरीरभेदात्पूर्वदिन एकेनानुभूतं परदिनेऽन्येन न स्मर्येत । अन्त्ये यदेकं करश्चरणं वा ज्ञानाधिकरणं तस्य कदाचिदपक्रमादन्यावयवेन तत्स्मरणं न स्यात् । न च

न हि भूतानां समुदायपर्यवसितं चैतन्यम्; प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात् । नापि प्रत्येकपर्यवसितम्; करचरणाद्यवयवापाये तदनुभूतस्य स्मरणायोगात् । नापि मृगमदवासनेव वस्त्रादिषु, संसर्गादन्यवासनाऽन्यत्र संक्रामति; मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात् । न चोपादानोपादेयभावनियमो गतिः; स्थिरपक्षे परमाणूनां तदभावात् । खण्डावयविनं प्रति च विच्छिन्नानामनुपादानत्वात् । पूर्वसिद्धस्य चावयविनो विनाशात् ॥

[60] अस्तु तर्हि क्षणभङ्गः । न चातिशयो १ व्यतिरिच्यते; किं तु सादृश्यतिरस्कृतत्वात् द्रागेव न विकल्प्यते । कार्यदर्शनादध्यवसीयते अन्त्यातिशयवत् । तथा च भूतान्येव तथा तथोत्पद्यन्ते, यथा यथा प्रतिसन्धाननियमादयोऽप्युपपद्यन्ते ॥ क्षणिकत्वासिद्धावेवमेतत् । तदेव त्वन्यत्र विस्तरेण प्रतिषिद्धम् ॥ अपि च—

---

मृगमदगन्धस्य वस्त्र इवान्यस्मिन्नप्यन्यगतवासनायाः संक्रम इष्यते; नैतावताऽव्यवस्था; संसर्गस्यैव नियामकत्वाच्चैत्रवासनाया असंसृष्टमैत्रे संक्रमाप्रसक्तेरिति वाच्यम्- गर्भस्थशिशोर्मातृसंसर्गसत्त्वेन वासनासंक्रमेण मात्रानुभूतस्मर्तृत्वापत्तेः । न च न केवलसंसर्गो नियामकः किन्तूपादानोपादेयभाव इति गत्यन्तरमस्ति; अतो न भ्रूणेन स्मरणमिति वाच्यम्—वस्तुक्षणिकत्वपक्षास्वीकारान्मयेव त्वयाऽपि तस्य दुर्वचत्वात् । तथा हि—किं परमाणुपुञ्ज एव शरीरमुतावयव्यन्यदस्ति । आद्ये कस्य केनोपादानोपादेयभावः । क्षणिकत्वपक्षे तु पूर्वपरमाणुक्षणः उत्तरपरमाणुक्षणोपादानं स्यात् । न त्वस्मिन् पक्षे । अन्त्ये यो ज्ञानाश्रयः करचरणादिरूपैकदेशः, तद्गतवासना किं खण्डशरीरे संक्रामति महाशरीरे वा । नाद्यः; खण्डशरीरं प्रति तस्य विच्छिन्नस्यानुपादानत्वात् । नान्त्यः; तस्य नष्टत्वेन प्रकृतभोगस्मरणोपपादनासम्भवादिति ॥

[60] तर्हि क्षणभङ्गपक्षमेव स्वीकुर्मः । कोऽयं क्षणभङ्ग इति चेदुच्यते । एकैकमपि वस्तु प्रतिक्षणं भिन्नम् । एवं च क्षणमात्रभावित्वाद्वस्तून्येव क्षणा इत्युच्यन्ते । तत्र च पूर्वपूर्वक्षणानामुत्तरोत्तरक्षणोत्पादकत्वम् । एकैकस्य च क्षणरूपवस्तुन उत्तरक्षणे भङ्गो ध्वंस इति । ननु कारणावृत्त्यतिशयविशिष्टस्य तदनन्तरभाविनस्तत्कार्यत्वं लोके दृष्टम् । यथा कपालावृत्तिजलाहरणाद्यतिशयशालिनो घटस्य कपालकार्यत्वम्; बीजावृत्तिपल्लवकारित्वाद्यतिशयवतोऽङ्कुरस्य बीजकार्यत्वम् । इह पूर्वबीजक्षणापेक्षयोत्तरबीजक्षणे कस्याचिदतिशयस्याभावान्न पूर्वक्षणकार्यत्वमुत्तरक्षणस्येति चेन्न—अत्राप्यतिशयसद्भावात् । न चायमतिशयो नास्ति । किन्तु प्रदीपज्वालानां प्रतिक्षणं भिन्नत्वेऽपि मिथः सादृश्यातिशयेन भेदतिरस्कारवदत्रापि बीजक्षणानां

---

१ ऽप्यतिरिच्यते इति क. ख. । प्र. 'विविच्य न गृह्यत' इत्यत्र विविच्येति पदं वीत्युपसर्गं ज्ञापयति । बो. 'व्यतिरेको नास्तित्वं; न च भेदो नास्तीत्यर्थः' ।

[61] **न वैजात्यं विना तत्स्यान्न तस्मिन्ननुमा भवेत्।**
**विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥**

**न हि, 'करणाकरणयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्र'मित्यभ्युपगमे क्षणिकत्वसिद्धिः; तथैकव्यक्तावप्यविरोधात्। तद्वा तादृग्वेति न कश्चिद्विशेष इति न्यायात्। ततस्तावनादृत्य वैजात्यमप्रामाणिकमेवाभ्युपेय(गन्तव्य)म् ॥**

---

सौसादृश्यबलेन तिरस्कारात् वस्तुनो वर्तमानोऽप्यतिशयो झटिति सविकल्पप्रत्यक्षेण न गृह्यत इत्येतावदेव। कार्यदर्शनात्पुनरध्यवसीयतेऽन्त्यातिशयवत्। तथा हि—कुसूलस्थबीजस्याङ्कुरकारित्वाभावात्क्षेत्रस्थेन चाङ्कुरकरणादङ्कुराव्यवहितप्राक्क्षणबीजे कुर्वद्रूपत्वात्मकः कश्चिदतिशयोऽस्ति। अन्यथा पूर्ववदनुत्पादकत्वप्रसङ्गात्। अतः क्षेत्रस्थबीजं कुसूलस्थादन्यदतिशयितम्। तथा च तद्वदेव बीजानां प्रतिक्षणं भेदसिद्धिः। अङ्कुराव्यवहितप्राक्क्षणबीजस्य हि यदि कुसूलस्थेनैव कारणं स्यात्—तर्हि तत्र द्वितीयक्षण एवैतादृशबीजोत्पत्त्यापत्त्या तृतीयक्षण एवाङ्कुरः स्यात्। अतोऽङ्कुराव्यवहितप्राक्क्षणाव्यवहितप्राक्क्षण एव बीजे तत्क्षणकारित्वरूपोऽतिशय एष्टव्यः। एवं तत्क्षणकारित्वातिशयस्तत्पूर्वक्षण इति। एवंरीत्या खलपिटककुसूलक्षेत्रस्थबीजानां प्रतिक्षणमुत्तरोत्तरकार्यकारित्वरूपातिशयवत्त्वसिद्धिः। अतश्च क्षणिकत्वम्। तथा चेदमनुमानम्—भावाः क्षणिकाः सत्त्वात् यत्सत् तत्क्षणिकम् यथा दीपज्वालेति। सत्त्वं नामार्थक्रियाकारित्वम्। अर्थक्रिया नामार्थनिष्पत्तिरिति न्यायबिन्दुः। तथा च प्रतिक्षणमतिशयस्य क्षणिकत्वस्य च सिद्ध्या परमाणुपुञ्जात्मकानां भूतानां यदा यदा यादृशातिशयवत्त्वे भोगस्मरणनियमोपपत्तिः तदा तदा तादृशातिशयवत्त्वेनोत्पत्तिस्वीकारात् पूर्वपूर्वपरमाणोश्चोत्तरोत्तरोपादानतया कर्मवासनानुभववासनयोः क्रमेण संक्रमसम्भवाच्च न कश्चिद्दोष इति न भूतातिरिक्तं चेतनतत्त्वमिति चेत्—क्षणिकत्वसिद्धौ स्यादेवं भोगानियमाद्युपपादनम्। क्षणिकत्वमेव त्वात्मतत्त्वविवेके विस्तरेण प्रतिषिद्धम्। अपि चेह ब्रूमः—

[61] **न वैजात्यं विना तत्स्यात्।** कुर्वद्रूपत्वात्मकं वैजात्यं विना तावत् (तत्) क्षणिकत्वं न सिद्ध्यति। वैजात्यमेव त्वप्रामाणिकम्। बीजेन क्षेत्रेऽङ्कुरकरणात् कुसूलस्थतादशायां चाकरणात् करणाकरणयोश्च भावाभावयोर्विरुद्धयोरेकत्र समावेशासम्भवाद्धि क्षेत्रकुसूलस्थबीजयोर्वैजात्यं वक्तव्यम्। तत्रैकजातीयस्याविजातीयस्यैव बीजस्य सलिलकर्दमादिसहकारिलाभालाभावेव करणाकरणविषये प्रयोजकाविति स्वीकारे कुतो वैजात्यसिद्धिः? तर्हि वैजात्याभावेऽपि सजातीयमनेकं बीजमित्यस्त्विति चेन्न—वैजात्याभावे तदेव वा तत्सदृशं वेत्यत्र विशेषाभावेनैकव्यक्तावपि करणाकरणयोः कालभेदेनाङ्गीकारसम्भवेनानेकव्यक्ताविवाविरोधात्। अतो वैजात्यमप्रामाणिकम् ॥

[62] एवं च, 'कारणवत् कार्येऽपि किञ्चिद्वैजात्यं स्यात् यस्य कारणापेक्षा, न तु दृष्टजातीयस्य' इति शङ्कया न तदुत्पत्तिसिद्धिः। दृष्टजातीयमाकस्मिकं स्यादिति चेन्न— तत्रापि किञ्चिदन्यदेव प्रयोजकं भविष्यतीत्यविरोधात्॥ 'न कार्यस्य विशेषस्तत्प्रयुक्ततयोपलभ्यते ; नापि कार्यसामान्यस्यान्यत्प्रयोजकं दृश्यते' इति चेत्—तत् किं कारणस्य विशेषःस्वगतस्तत्प्रयोजकतयोपलब्धः, कारणसामान्यस्य वाऽन्यत्प्रयोज्यान्तरं दृश्यते ; यतो विवक्षितसिद्धिः स्यात्। शङ्का तूभयत्रापि सुलभेति॥ कार्यजन्माजन्मभ्यामुन्नीयत इति चेन्न–सहकारिलाभालाभाभ्यामेवोपपत्तेः। उन्नीयतां वा ; कार्येषु शङ्किष्यते ; निषेध-

---

[62] न तस्मिन्ननुमा भवेत्। एवमप्रामाणिकवैजात्यस्वीकारे सत्यनुमानं सर्वमुच्छिद्येत। त्रिविधं ह्यनुमानं बौद्धवर्णितम्–अनुपलब्धिः स्वभावः कार्यं चेति। तत्रानुपलब्धिरभावानुमापिका। स्वभावस्तादात्म्यम्। कार्यं कारणानुमापकम्। तत्र प्रथमं कार्यात् कारणानुमानप्रकारस्योच्छेद उपपाद्यते—एवं कारणेऽप्रामाणिकवैजात्ये सति तादृशवैजात्यावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया कार्येऽपि किञ्चिद्वैजात्यं सिद्ध्यतु। तत्रैव पूर्वोक्तवैजात्य निबन्धनमस्तु ; न तु दृष्टाङ्कुरत्वावच्छिन्ने इति तस्य न तत उत्पत्तिः सिद्ध्येत्। तथा च तादात्म्यतदुत्पत्तिभ्यामविनाभाव इति वर्ण्यमानतदुत्पत्तिरूपनियामकासिद्धिः। नन्वङ्कुरत्वावच्छिन्नं प्रति तस्याकारणत्वे तदाकस्मिकं स्यात्। न च कादाचित्कस्याकस्मिकत्वं युज्यत इति चेत्—न— तस्य कारणत्वासम्भवेऽप्यन्यस्य तत्र कारणत्वसम्भवात। ननु कार्ये तादृशवैजात्यं नोपलभ्यते। तथाङ्कुरत्वसामान्यावच्छिन्नस्य प्रयोजकमप्यन्यन्नोपलभ्यत इति चेत्—तर्ह्यनुपलब्ध्या तन्निषेधे कारणगतवैजात्यस्याप्यनुपलम्भादभावः स्यात्। तथा बीजत्वरूपकारणसामान्येनोत्पाद्यस्य कार्यस्यानुपलम्भात् बीजत्वेन रूपेण किञ्चित्कारणत्वं न स्यात्। न चेष्टापत्तिः ; तस्य तेन रूपेण सत्त्वस्येष्टत्वात्। सत्त्वस्य चार्थक्रियाकारित्वरूपत्वात्। यद्यनुपलब्धस्यापि सद्भावशङ्का ; सा तथा कार्यवैजात्येऽपि भविष्यति। करणाकरणयोस्तु सहकारिलाभालाभाभ्यामुपपत्तिरुक्ता। अथ वा तत उन्नीयतां तद्वैजात्यम, तदा कार्येऽपि वैजात्यं शङ्क्यते। या तु कार्यवैजात्याभावेऽनुपलब्धिः प्रमाणतयोपन्यस्ता, सा नैव भवितुमर्हति। अनुपलब्धिर्हि स्वभावानुपलब्धिः कार्यानुपलब्धिर्व्यापकानुपलब्धिः कारणानुपलब्धिरित्येवमादिः। तत्र कुर्वद्रूपत्वविशिष्टवह्निप्रयोज्यतया धूमे शङ्क्यमानस्य वैजात्यस्य न स्वभावानुपलब्धिर्बाधिका ; कारणवैजात्यवत्तस्यातीन्द्रियत्वस्वीकारात्॥ तर्हि बाधकाभावे कारणगतवैजात्यवत्तस्य कस्मान्न निश्चयः ? निश्चयाभावादेव हि शङ्क्यमानत्वमुपन्यस्यत इति चेत—उच्यते। वैजात्यं हि कार्यदर्शनबलान्निश्चेयम्। अत्र तु धूमे वह्निप्रयोज्यवैजात्यसाधकस्य तादृशवैजात्यावच्छिन्नधूमं प्रति कार्यभूतस्य कस्यचिदनुपलम्भात्तन्निश्चयो न भवेत्। तथा चानिश्चयोपपत्तेर्नास-

**कामावात् । न हि धूमस्य विशेषं दहनप्रयोज्यं प्रतिषेद्धुं स्वभावानुपलब्धिः प्रभवति । कार्यैकनिश्चेयस्य तदनुपलब्धेरेवानिश्चयोपपत्तेः । कार्यस्य चातीन्द्रियस्यापि सम्भवात् ; अत एवानुपलब्ध्यन्तरमपि निरवकाशमिति ॥**

[63] **एवं विधिरूपयोर्व्यावृत्तिरूपयोर्वा जात्योर्विरोधे सति न समावेशः । समाविष्टयोश्च परापरभावनियमः ; अन्यूनानतिरिक्तवृत्तिजातिद्वयकल्पनायां प्रमाणाभावात् । व्यावर्त्यभेदाभावेन विरोधानवकाशे भेदानुपपत्तेः । परस्परपरिहारवत्योश्च समा-**

---

च्छङ्कनस्य परिहारो भवतीति । ननु सति तस्मिन् तत्कार्यमपि स्यादेव; समर्थश्चेत् कुर्यादिति न्यायात् । अतः कार्यानुपलम्भात्तद्वैजात्यं नास्तीति निश्चीयत इति चेन्न —कार्यस्यातीन्द्रियस्यापि सम्भावितत्वेन तदनुपलब्धिमात्रेण किञ्चिन्निश्चयायोगात् । तथा च स्वभावानुपलब्धिः कार्यानुपलब्धिश्च न वैजात्यबाधिकेति सिद्धम् । एवं व्यापकानुपलब्ध्यादिकमपि न बाधकम् । अनुपलब्धिर्ह्येकादशधा न्यायबिन्दूक्ता । अन्यैश्च बौद्धैः षोडशधा । तत्र स्वभावानुपलब्धिः कार्यानुपलब्धिः व्यापकानुपलब्धिः कारणानुपलब्धिरिति चतस्रोऽनुपलब्धयः । तत्र स्वभावादीनां चतुर्णां प्रत्येकं ग्रहणेन तत्तद्विरुद्धविषयकोपलब्धिः तत्तद्विरुद्धकार्यविषयकोपलब्धिः तत्तद्विरुद्धव्याप्तविषयकोपलब्धिरितीमाः प्रत्येकं पूर्वोक्तानुपलब्धिभिर्मेलयन्ते । इमाश्चोपलब्धयोऽभावसाधकत्वाविशेषादनुपलब्धिपदेन व्यवह्रियन्त इति अनुपलब्धीनां षोडशविधत्वं मन्यते । अन्ततः सर्वासामप्यनुपलब्धीनामुपलब्धिलक्षणप्राप्तविषय एव प्रसरस्य बौद्धैरभिमततयाऽतीन्द्रियवैजात्यविषये प्रसक्त्यभावादबाधकत्वम् । तथा चाङ्कुरत्वावच्छिन्नस्य बीजत्वावच्छिन्नस्य कार्यतायाः बौद्धैरस्वीकारात् कुर्वद्रूपत्वावच्छिन्नबीजप्रयोज्यवैजात्यस्य चान्यस्याङ्कुरे शङ्कितत्वेनाङ्कुरत्वावच्छिन्नस्य तदकार्यत्वादङ्कुरेण बीजानुमानायोगात्, शङ्कितस्य च कार्यवैजात्यस्याप्रत्यक्षत्वेनानिश्चिततया तन्मुखेनापि बीजानुमानासम्भवात्, कार्यात् कारणानुमानं क्वापि न सम्भवतीति सिद्धम् ॥

[63] एवमनुपलब्धिरूपानुमानमपि कार्यानुमानवन्न भवतीति निरूप्यते । अङ्कुराव्यवहितप्राक्क्षणबीजे बीजत्वकुर्वत्त्वरूपजातिद्वयं खलु स्वीकृतम् । जातिश्चास्मन्मत इव भावरूपा बौद्धमतात्तद्व्यावृत्तिरूपा वा स्यात् । सर्वथा तावत् जात्योः परस्पराभावसामानाधिकरण्यरूपविरोधे सति नैकत्र समावेशः । सति तु समावेशेऽवश्यमेव व्याप्यव्यापकभावापन्नत्वम् । अन्यथा समाविष्टयोर्व्याप्यव्यापकभावास्वीकारे किं तुल्यव्यक्तिवृत्तित्वमिष्यते उतातुल्यव्यक्तिवृत्तित्वम् । नाद्यः, घटत्वव्यावर्त्यापेक्षया कलशत्वव्यावर्त्यस्य भेदाभावेन तादृशजातिद्वयकल्पनस्याप्रामाणिकत्वात् । नान्त्यः ; तथा सत्येकत्र समावेशस्य परस्पराभावसामानाधिकरण्यस्य च स्वीकारसिद्धौ गोत्वाश्वत्वयोरपि विरुद्धयोः समावेशापत्तेः । तथा हि —असमावेशः किं गवाश्वसामग्रीविरोधात् उत कार्ययोर्गवाश्वयोर्विरोधात् । सामग्र्योर्विरोधादिति चेत्—तयोरेव कुतो विरोधः । सर्वास्मिन्नपि

वेशे गोत्वाश्वत्वयोरपि तथा भावप्रसङ्गात् ॥ सामग्रीविरोधान्नैवमिति चेत्— १ कुत एतत् ? परस्परपरिहारेण सर्वदा व्यवस्थितेरिति चेत्—नेदमप्यध्यक्षम् । एकदेशसमावेशेन तु सामग्रीसमावेशोऽप्युन्नीयते २ यावत् ॥ ३ तत्कार्ययोः परस्परपरिहृतिस्वभावत्वादिति चेत्तर्हि कम्पशिंशपयोः परस्परपरिहारवत्योर्न समावेशः स्यात् ॥ दृश्यते तावदिदमिति चेत्–गोत्वाश्वत्वयोरपि न द्रक्ष्यत इति का प्रत्याशा ? तथा च गतमनुपलब्धिलिङ्गेनापि, क्वचिदपि विरोधासिद्धेः ॥

[64] ततो विपक्षे बाधकाभावात् स्वभावहेतुरप्यपास्तः ॥ ननु—अस्ति तत् । तथा हि—वृक्षजनकपत्रकाण्डाद्यन्तर्भूता शिंशपासामग्री । सा वृक्षमतिपत्य भवन्ती स्वका-

---

काले मिथः सम्बन्धादर्शनादिति चेन्न ; सर्वकालासम्बन्धस्य प्रत्यक्षेण ग्रहणासम्भवात् । प्रत्युत गवाश्वयोः पशुजातीयतयोभयानुगताकृतिसामग्रीसमावेशदर्शनेन कदाचित्सर्वसमावेशस्यापि सम्भव उन्नीयत एव । तर्हि कार्ययोर्गवाश्वयोर्मिथो भिन्नत्वदर्शनादसमावेश इत्यन्त्यपक्षोऽस्त्विति चेत्तर्हि क्वचिद्भेददर्शनमात्रेणासमावेशे चलत्वशिंशपात्वयोरसमावेशापत्तिः । प्रतिक्षणभिन्नानां शिंशपानां मध्ये हि चलशिंशपायां चलत्वं शिंशपात्वं च जाती स्वीक्रियेते । तयोश्च निश्चलशिंशपायां चलन्यग्रोधे च परस्परपरिहारो दृष्ट इति क्वचिदपि समावेशानापत्तिरिति । तत्र दर्शनबलात्स्वीकारेऽत्रापि, 'न द्रक्ष्यत इति नियन्तुं न शक्यम् । तथा च कार्यप्राक्क्षणभूते बीजेऽबीजे च कुर्वत्त्वस्य सत्त्वात् बीजत्वस्य कुर्वदकुर्वत्साधारणत्वाच्च विरुद्धयोर्बीजत्वकुर्वत्त्वयोरेकत्र समावेशस्वीकारे विरुद्धयोरपि समावेशसिद्ध्या अनुकूलानुपलब्धिप्रतिकूलोपलब्धिरूपानुपलब्धिपदार्थान्तर्गतेन गोत्वविरुद्धाश्वत्वोपलब्धिरूपहेतुना गोत्वासत्त्वानुमानं न भवति ; अनुपलब्धेर्वस्तुसत्तायाश्च क्वचिद्विरोधदर्शनेऽपि क्वचित्समावेशसम्भवेन वस्त्वसत्तानुमाने तस्या असामर्थ्यात् । एवञ्च कार्यानुमानवदनुपलब्ध्यनुमानमपि गतमिति ॥

[64] अनेनैव क्वचिदपि विरोधासिद्धिरूपहेतुना तादात्म्यानुमानमप्यपास्तं भवति ; शिंशपाया अपि क्वचिद्वृक्षत्वे विरोधाभावात् । नन्वस्ति विपक्षे बाधकम् । स्वभावानुमानं हि प्रचुरशिंशपे प्रदेशे कांचिदुच्चां शिंशपां प्रदर्श्यायं वृक्ष इत्युक्तौ अन्येषु वृक्षत्वबुद्धेर्वृक्षशब्दव्यवहा-

---

१ एतत् कुत इति क. ख । उपरितनानुपूर्वी बोधन्याम् । प्रकाशेऽपि कुत इति पूर्वं धृत्वा एतदिति पश्चाद्व्याख्यातम् । २ बो. 'सामग्र्योरपि समावेशसम्भवोऽनुमीयते, यावत् बाधकं दर्शनं तावदिति' प्रकाशदर्शनादिति यावदित्यवधारणार्थमिति भाति । सर्वथा पूर्वान्वयि यावत्पदम् । ३ बो. तत्कार्ययोरिति....सामग्रीद्वयकार्ययोर्गवाश्वयोः' ॥ क. ख. पु० तादिति विहाय कार्ययोरित्येव पाठः ।

रणमेवातिपतेत् । एवं शाखादिमन्मात्रानुबन्धी वृक्षव्यवहारः; तद्विशेषानुबन्धी च शिंशपाव्यवहारः। स कथं तमतिपत्यात्मानमासादयेदिति—चेत्—एवं तर्हि शिंशपासामग्र्यन्तर्भूता चलनसामग्री । ततस्तामतिपत्य चलनादिरूपता भवन्ती स्वकारणमेवातिपतेत् । तथा शाखादिमद्विशेषानुबन्धी शिंशपाव्यवहारः, तद्विशेषानुबन्धी च चलनव्यवहारः । स कथं तमतिपत्यात्मानमासादयेदिति तुल्यम् ॥

[65] नोदनाद्यागन्तुकनिबन्धनं चलनत्वं, न तु तद्विशेषमात्राधीनमिति चेत्—यदि नोदनादयः स्वभावभूताः; ततस्तद्विशेषा एव । अथास्वभावभूताः; ततः सहकारिण एव। ततः (तथा च) तानासाद्य निर्विशेषैव शिंशपाचलनस्वभा(वत्वमा)(वान् आ) वमारभत इति । तथा च कुतः क्षणिकत्वसिद्धिः ?

---

रस्य चायुक्ततामध्यवस्यतस्तद्भ्रमनिवृत्तये अयं वृक्षः शिंशपात्वात्, अयं वृक्षव्यवहारयोग्यः शिंशपाव्यवहारवत्त्वादिति द्विविधमुच्यते । उभयत्राप्यप्रयोजकशङ्कायां हेतोः स्वनिमित्तातिक्रम एव बाधकम् । तत्र प्रथमे [शिंशपासामग्र्या वृक्षसामग्रीबाहिर्भूतत्वाभावात] वृक्षसामग्रीं विना शिंशपासामग्र्या अभावात् वृक्षत्वानङ्गीकारे वृक्षसामग्र्यभावापत्त्या शिंशपासामग्र्यसत्त्वप्रसङ्गेन शिंशपात्वस्य स्वसामग्र्यतिक्रमः । द्वितीये—वृक्षव्यवहारयोग्यत्वाभावे तस्य योग्यत्वस्य सामान्यतः शाखादिनिमित्तकतया शाखादिमत्त्वरूपनिमित्तस्याभावापत्तौ सामान्याभावेन शाखादिविशेषस्याप्यभावे सति तादृशविशेषनिमित्तकस्य शिंशपाव्यवहारस्य स्वनिमित्तातिक्रमो भवेत्। तस्मात्स्वभावानुमानं सुस्थमिति चेत्–न; तथा सति इयं शिंशपा चलत्वात्, अयं शिंशपाव्यवहारविषयश्चलव्यवहारविषयत्वादित्यप्यनुमानापत्तेः ? । प्रतिक्षणभिन्नासु शिंशपासु शिंशपात्वस्य साधारणतया चलत्वस्य चाचलशिंशपावृत्तित्वाभावेन ततो विशेषरूपतया शिंशपासामग्र्यविनाभूतसामग्रीकस्य चले सत्त्वात्, तथा शिंशपाव्यवहारस्य वृक्षविशेषनिमित्तकत्वाच्चलव्यवहारस्य वृक्षविशेषात्मकशिंशपान्तर्गतकिञ्चिद्विशेषनिमित्तकत्वाच्च तत्रापि स्वनिमित्तातिक्रमस्य सुवचत्वात् ॥

[65] ननु शिंशपात्वं वृक्षसामग्रीविशेषमात्राधीनम्; न तथा चलत्वं शिंशपासामग्रीविशेषमात्राधीनम्, वाय्वादिकृतनोदनाभिघातादितात्कालिकवस्तुकृतत्वादिति चेत्—बौद्धमते सहकारिलाभालाभप्रयुक्तकरणाकरणानङ्गीकारात् नोदनादिदशायां चलशिंशपोत्पत्त्युपयोगिवैजात्यरूपस्वभावविशिष्टक्षणोत्पत्तेः स्वीकार्यतया नोदनादेस्तादृशक्षणासाधारणत्वाङ्गीकारे तस्य क्षणस्य चलसामग्रीभूतस्य शिंशपासामग्रीविशेषत्वस्य दुर्वारत्वात् । यदि तन्मतरीतिमनवलम्ब्य शिंशपासामग्र्याश्चलोत्पादने नोदनादिसहकारिकारणमिष्यते—तर्हि सहकारिबलादेव वैलक्षण्योपपत्तौ कारणे वैजात्यरूपविशेषस्यानावश्यकतया क्षणिकत्वासिद्धिः ॥

[66] स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाद्भवन्तीति चेत्—एवं तर्हि वृक्षसामग्र्यामागन्तुकसहकार्यनुप्रवेशादेव शिंशपाऽपि जायत इति न कश्चिद्विशेषः ॥

[67] एवमेतत् । किंतु शिंशपाजनकास्तरुसामग्रीमुपादायैव चलनजनकास्तु न तामेव ; किं तु मूर्तमात्रं ; तथा दर्शनादिति चेन्मैवम् ; कम्पजनकाः शिंशपाजनकविशेषा अपि सन्तस्तानतिपतन्ति ; न तु वृक्षजनकविशेषाः शिंशपाजनकास्तानिति नियामकाभावात् ॥

[68] शिंशपाजनकास्तद्विशेषा एव । कम्पकारिणस्तु न तथा ; किन्त्वागन्तवः [न्तुक]सहकारिण इति चेत्-एवं तर्हि तानासाद्य सदृशरूपा अपि केचित् कम्पकारिणः, अनासादितसहकारिणस्तु न तथा । तथा च तद्वा तादृग्वेति न कश्चिद्विशेष १ इति स्यात् ॥

[69] तस्माद्विरुद्धयोरसमावेश एव । समाविष्टयोश्च परापरभाव एव । अनेवंभूतानां द्रव्यगुणकर्मादिभावनोपाधित्वमात्रम् । तेषां तु विरुद्धानां न समावेशो व्यक्तिभे-

---

[66] ननु नोदनादीनां तत्क्षणस्वभावत्वाङ्गीकारेऽपि वाय्वादिसहकार्यधीनत्वस्वीकारात् शिंशपासामग्र्यामिवान्यत्रापि नोदनादयो भवितुमर्हन्तीति चेत्—एवमेव वृक्षसामग्र्यां सहकारिसमावेशबलात् शिंशपोत्पत्त्युपयोगिस्वभावस्वीकारसम्भवेन वृक्षसामग्र्यामिवान्यत्रापि तादृशसहकारिबलात्तादृशशिंशपाप्रयोजकस्वभावोत्पत्त्यापत्तेः ॥

[67] ननु सत्यं सहकारिणैव शिंशपोपयोगि स्वभावोत्पादनम् । अथापि शिंशपास्थले वृक्षसामग्रीं प्रत्येवागन्तुकानां सहकारित्वम् । चलस्थले तु घटादावपि चलनदर्शनात् शिंशपासामग्रीं प्रत्येव सहकारित्वमिति नास्ति ; किंतु मूर्तमात्रं प्रत्येवेति चेत्-चलजनकानां शिंशपाजनकविशेषत्वं स्वीक्रियते न वा । आद्ये चलहेतोर्न शिंशपापेक्षया वैलक्षण्यम् ॥

[68] न स्वीक्रियत इति चेत्—तर्हि नोदनादेः सहकारित्वमेव सिद्ध्यति । तथा च सहकार्यासत्त्यनासत्तिभ्यामेवोपपत्तौ चलशिंशपाकारणानि अचलशिंशपाकारणसदृशान्येवेति न वैजात्यसिद्धिः । न चैवं वैजात्याभावेऽपि सामग्रीभेदाद्वस्तुक्षणिकत्वसिद्धिरिति वाच्यम्-तदेव वा तत्सदृशं वेत्यत्र विशेषाभावेन पूर्वोत्पन्नशिंशपायामेव सहकारिबलात्कम्पक्रियोत्पत्तिमात्रस्वीकारसम्भवात् ॥

[69] तस्मादेकस्यामेव शिंशपायांकदाचित्कम्परूपक्रियोत्पत्तिरिति कम्पत्वजात्यभावात् कम्पत्वशिंशपात्वानुरोधेन विरुद्धसमावेशस्वीकारस्यानावश्यकत्वात् विरुद्धयोरसमावेशस्य, समाविष्टयोर्घट-

---

१ इति शब्दः क[2] पुस्तके ; नान्यत्र

**दात्। जातीनां च भिन्नाश्रयत्वात्। तथा च कुतः क्षणिकत्वम्? वैजात्याभ्युपगमे च कुतोऽनुमानवार्ता॥**

**[70] मा भूदनुमानमिति चेन्न—तेन हि विना १ न तत् सिद्ध्येत्। न हि क्षणिकत्वे प्रत्यक्षमस्ति; तथा निश्चयाभावात्। गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्। अन्यथा ऽतिप्रसङ्गात्॥**

**[71] ननु वर्तमानः क्षणोऽध्यक्षगोचरः। न चासौ २ पूर्वापरक्षणात्मा। ततो वर्तमानत्वनिश्चय एव भेदनिश्चय इति चेत्—किमत्र तदभि[पि] मतमायुष्मतः? यदि धर्म्येव नीलादिः, न किञ्चिदनुपपन्नम्; तस्य स्थैर्यास्थैर्यसाधारण्यात्॥ अथ धर्मः, तद्भेद-**

त्वपृथिवीत्वयोरिव व्याप्यव्यापकभावस्य च सिद्धिः। यानि तु समावेशेऽपि परापरभावानापन्नवस्थितानि, तेषां कार्यत्वभूतत्वमूर्तत्वकम्पत्वादीनां न जातित्वं, किं तूपाधित्वम्। उपाधीनां च यथायथं द्रव्यादिरूपत्वम्। यथा कार्यत्वमव्यवहितोत्तरक्षणसम्बन्धरूपं क्षणात्मकालरूपं द्रव्यम्; भूतत्वं बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं गुण एव; मूर्तत्वं कम्पत्वं च क्रियैवेत्येवम्। तथा च तेषां न विरोधसमावेशोभयशालित्वम्; तत्तद्भूतादिवर्तिभूतत्वादिव्यक्तीनां भेदात् समाविष्टव्यक्तेरन्यत्र स्थितव्यक्तेश्च भिन्नत्वात्। न चैष उपाधिन्यायो जातिषु ग्राह्यः, जातीनामनेकव्यक्त्याश्रितत्वेन व्यक्तिभेदेन भेदायोगात्। तथा च चलशिंशपास्थल इव सहकारिसमावेशवशादेव सर्वोपपत्तौ सर्वत्र सहकारिकलापसम्बन्धातिरिक्तस्य वैजात्यस्यासिद्धौ क्षणिकत्वं कुतः सिद्ध्येत्? अन्यथा कार्येऽपि वैजात्यशङ्कया कार्यानुमानोच्छेदात्, विरुद्धसमावेशापत्त्या चानुपलब्ध्यनुमानविलयात् कार्यानुपलब्धिलिङ्गभङ्गे स्वभावस्याप्यसिद्धेः प्रागेव दर्शितत्वात् कुतोऽनुमानप्रमाणकथेति।

[70] विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना। अनुमासद्भावेन विना वैजात्यमेव न सिद्ध्येत्। न च प्रत्यक्षं तत्र प्रमाणम्; भवतैव तस्याविकल्प्यमानत्वस्य कार्यदर्शनकल्प्यत्वस्य चोक्तत्वात्। नापि निर्विकल्परूपमध्यक्षं, सविकल्पनिश्चयं विना तदप्रसक्तेः। निर्विकल्पगृहीते सविकल्पनिश्चित एवार्थे प्रत्यक्षस्य प्रमाणत्वात् अन्यत्र निर्विकल्पानङ्गीकारात्। अत एव क्षणिकत्वेऽपि न निर्विकल्पं प्रमाणम्। अन्यथा शशशृङ्गादेरपि निर्विकल्पतः सिद्ध्यापत्तेः; सर्वैरपि वादिभिः स्वाभिमतस्य निर्विकल्पेन सिद्धेर्वर्णनापत्तेश्च। अतो न वस्तुक्षणभङ्गसिद्धिरिति॥

[71] ननु वैजात्यमुखेन निर्विकल्पेन वा क्षणिकत्वं मा सैत्सीत्। घटोऽयमिति वर्तमानतया घटादिरूपक्षणावगाहिना सविकल्पकेन तत् सेत्स्यति। न हि वर्तमानोऽर्थः पूर्वः पश्चात्तनश्च

१ विना कुतस्तत्? क॰ २ पूर्वापरवर्तमानक्षणात्मेति सर्वत्र पाठः।

निश्चयेऽपि धर्मिणः किमायातम् ? तस्य ततोऽन्यत्वात् ॥ वर्तमानावर्तमानत्वमेकस्य विरुद्धमिति चेत्—यदि सदसत्त्वं तत् ' तन्न ; अनभ्युपगमात् । ताद्रूप्येणैव प्रत्यभिज्ञानात् ॥ सदसत्सम्बन्धश्चेत्—किमसङ्गतम् ? ज्ञानवत्तदुपपत्तेः ॥ क्रमेणानेकसम्बन्ध एकस्यानुपपन्न इति चेन्न—उपसर्पणप्रत्ययक्रमेणैव तस्याप्युपपत्तेः ॥ प्रत्यभिज्ञानमप्रमाणमिति चेत्—अस्ति तावदतो निरूपणीयम् । क्षणप्रत्ययस्तु भ्रान्तोऽपि नास्तीति विशेषः ॥

[72] स्यादेतत् । मा भूदध्यक्ष[1]मनुमानं वा क्षणिकत्वे ; तथाऽपि सन्देहोऽस्तु । एतावताऽपि सिद्धं समीहितं चार्वाकस्येति चेत्—उच्यते ।

भवति । तस्माद्वर्तमानत्वनिश्चयः पूर्वापरभेदनिश्चयरूप एवेति सिद्धः प्रतिक्षणं पदार्थभेद इति चेत्—अत्र विकल्प्यते । किमिदं वर्तमानत्वम् ? यदि घटरूपधर्म्येव ; तर्ह्यनेन प्रत्यक्षेण घट एव गृहीतः । न तस्य पूर्वापरभेद इति स्थैर्यवदस्थैर्यस्यापि न ततः सिद्धिः । यदि घटवर्तिधर्म एव वर्तमानत्वम् , तर्हि तस्य धर्मस्य पूर्वत्वादिधर्मापेक्षया भेदः सिद्ध्यतु । तावता घटस्यानेकत्वं कथम् ? न च धर्मधर्मिणोरभेदः ; तस्यानङ्गीकारात् । ननु वर्तमानत्वावर्तमानत्वयोर्मिथो विरुद्धत्व तदाधारभेदसिद्धिरिति चेत् कथं विरोधः । यदि वर्तमानावर्तमानत्वं सदसत्स्वरूपं स्यात् तर्हि विरोधः स्यात् । सोऽयं घट इति पूर्वं पश्चाच्च सद्रूपेणैव प्रत्यभिज्ञायमानतयाऽसत्त्वानङ्गीकारे कुतो विरोधः । अतो वर्तमानावर्तमानत्वं सत्कालासत्कालसम्बन्ध इति वक्तव्यम् । तत्र च विरोध एव नास्ति ; सदसत्सम्बन्धस्याविरुद्धत्वात् । ज्ञानस्य नानाविषयकस्य प्रत्यभिज्ञादिविषयतया सदसदुभयसम्बन्धित्वदर्शनात् । ननु ज्ञानं युगपदेव सदसत्सम्बन्धं लभते, न तथा घटः ; पूर्वकालसम्बन्धस्योत्तरकालसम्बन्धस्य च क्रमेणैव भावादिति चेन्न—उपसर्पणे सम्बन्धे यत् प्रत्ययभूतं कारणभूतं तस्य क्रमभावितया क्रमोपपत्तेः । ननु सोऽयं घट इति प्रत्यभिज्ञानात् किलैकस्य सदसत्सम्बन्धोऽङ्गीकार्यः । तदेवाप्रमाणमिति चेत् ; प्रमाणं वा स्यादप्रमाणं वा । तदग्रेऽनिरूप्यम् । प्रतीतिस्तावत् स्थैर्यविषयिणीयमस्ति । न ह्येवं क्षणिकत्वे कश्चित्प्रत्ययो भ्रमात्मकोऽप्यस्तीति कुतः क्षणिकत्वम् ॥ तस्माच्चार्वाकस्य स्वपक्षरीत्या स्थापयितुमप्रगल्भमानस्य बौद्धमतं वैजात्यवर्तमानप्रत्ययाभ्यां वस्तु क्षणिकत्वं परिगृह्य नित्यविभुचेतनापलापेन भूतचैतन्यमत्याऽदृष्टस्य भूतधर्मत्वप्रत्यवस्थानं क्षणिकत्वस्यैवासिद्ध्या न युक्तमिति सिद्धम् ।

[72] अथ क्षणिकत्वनिश्चायकाभावेऽपि सन्देहसम्भवात् भूतचैतन्यभूतादृष्टपक्षसम्भावनया विलक्षणचेतनधर्मत्वानिश्चयमात्रं स्यादिति चेदुच्यते । किं सोऽयं घट इति प्रत्यभिज्ञानविषय-

[1] मा भूदध्यक्षं मा च भूदनुमानम् क० ।

स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकतानिश्चयो येन क्षणे, तेन स्थिरे मतः ॥ १७ ॥

न हि स्थिरे तद्दर्शने वा स्वरसवाही सन्देहः ; प्रत्यभिज्ञानस्य दुरपह्नवत्वात् । नापि तत्प्रामाण्ये ; स हि न तावत्सार्वत्रिकः ; व्याघातात् । तथा हि—प्रामाण्यासिद्धौ सन्देहोऽपि न सिद्ध्येत् ; तत्सिद्धौ वा तदपि सिद्ध्येत् । १ निश्चयस्य तदधीनत्वात् कोटिद्वयस्य चादृष्टस्यानुपस्थाने कः सन्देहार्थः ? तद्दर्शने च कथं सर्वथा तदसिद्धिः ॥ एतेनाप्रामाणिकस्तद्व्यवहार इति निरस्तम् ; सर्वथा प्रामाण्यासिद्धौ तस्याप्यसिद्धेः ?

[73] प्रकृते प्रामाण्यसन्देहः, लूनपुनर्जातकेशादौ व्यभिचारदर्शनादिति चेत्—न एकत्वनिश्चयस्य त्वयाऽपीष्टत्वात् । अनिष्टौ वा न किञ्चित्सिद्ध्येत् । सिद्ध्यतु—यत्र

---

घटस्थैर्ये सन्देहः, किं वा प्रत्यभिज्ञास्वरूपे, आहो प्रामाण्ये ? नाद्यौ ; अनुभवविरोधात् । नाप्यन्तिमः ; तत्रापि किं सर्वस्य ज्ञानस्य प्रामाण्ये सन्देहः उत प्रकृतप्रत्यभिज्ञानस्य । नाद्यः ; सार्वत्रिकप्रामाण्यविरहस्य सन्देहसत्त्वस्य च विरोधात् । कथमिति चेत्—सन्दिहानो हि लोके जिज्ञासमानो वस्तुतत्त्वं निश्चिनोतीति सिद्ध्यति निश्चयस्य प्रामाण्यम् । अन्यथा तत्प्रामाण्यासिद्धौ तद्धेतुजिज्ञासासंशययोः किमर्थं सत्ता । अतो निश्चयस्य सन्देहाधीनत्वादस्ति प्रामाण्यम् । यद्वा सर्वज्ञानाप्रामाण्ये सन्देहोऽस्तीति ज्ञानस्याप्यप्रामाण्यात् सन्देहासिद्धिः स्यात् ; सन्देहसत्तानिश्चयस्य सन्देहग्राहिज्ञानप्रामाण्यसिद्ध्यधीनत्वात् । किं च कस्यापि प्रामाण्याभावे प्रामाण्यकोटेरेवाप्रसिद्ध्याऽदृष्टनरकोट्युपस्थित्यप्रसक्त्या प्रामाण्यसन्देह इति कोऽयमर्थस्त्वयोच्यते । तदर्थं कोटिप्रसिद्धिसम्पादने च न सर्वाप्रामाण्यम् । अप्रामाणिक एवायं प्रामाण्यव्यवहार इति चेदिदमप्युक्तहेतुनैव निरस्तम्—अस्यैव त्वद्वचनस्य त्वया प्रामाण्यस्य स्वीकार्यत्वात् । अन्यथा कुत्राप्यप्रामाण्यासिद्धेः ।

[73] अस्तु तर्हि प्रकृतप्रत्यभिज्ञानमात्रे प्रामाण्यसन्देह इति द्वितीयः पक्षः । न हि प्रत्यभिज्ञानं प्रमाणमिति नियमः ; लूने पुनर्जाते च केशे सोऽयं केश इति प्रत्यभिज्ञाया अप्रामाण्यदर्शनादिति चेन्न— एकतानिश्चयो येन क्षणे, तेन स्थिरे मत इति । एकैकस्य क्षणस्यैकत्वनिश्चये यो विरुद्धधर्मासंसर्गो हेतुस्तेनैव स्थिरेऽप्येकत्वनिश्चयो मत इति । एवमेकत्वस्थिरत्वनिश्चयात्क्षणिकत्वसंशयनिवृत्तिः । क्षणे ह्येकत्वनिश्चयस्त्वयाऽपीष्यते । नेष्यते चेदेकत्वस्यैवाप्रसिद्ध्यानेकत्वमपि वस्तूनां दुर्वचम् । ननु वर्तमानावर्तमानत्वरूपविरुद्धधर्मविरहो

---

१ 'निश्चयवत्तस्य तदधीनत्वादिति केचित् पठन्ति । तत्रायमर्थः—यथा निश्चयः प्रामाण्याधीनस्तथा सन्देहोऽपीति' बो.

विरुद्धधर्मविरह इति चेत्—तेनैव स्थिरत्वमपि निश्चीयते । स इह सन्दिह्यत इति चेत्—तुल्यमेतत् । क्वचिन्निश्चयोऽपि कथञ्चिदिति चेत्—समः समाधिः ॥

[74] नन्वेतत् कारणत्वं यदि स्वभावो भावस्य, नीलादिवत्, तदा सर्वसाधारणं स्यात् । न हि नीलं [1] कञ्चित्प्रत्यनीलम् । अथौपाधिकम्; तदोपाधेरपि स्वाभाविकत्वे तथात्वप्रसङ्गः । औपाधिकत्वे त्वनवस्था । अथासाधारणत्वमप्यस्य स्वभाव एव; तत उत्पत्तेरारभ्य कुर्यात्; स्थिरस्यैकस्वभावत्वादिति चेत्—उच्यते—

[75] हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तुसत् ।
तद्युक्तं तत्र तत् शक्तमिति साधारणं न किम् ॥ १८ ॥

सर्वसाधारणनीलादिवैधर्म्येण काल्पनिकत्वं कार्यकारणभावस्य व्युत्पादयता

---

यत्र तत्र क्षण एकत्वं सिद्ध्यतु, न त्वत्रेति चेत्र—स्थिरेऽपि तयोर्धर्मयोरविरोधस्य प्रागुक्तत्वेनैकत्वनिश्चयसम्भवात् । ननु धर्मयोस्तयोरिहाविरोधविषये सन्देह इति चेत्तर्हि क्षणरूपस्यापि बीजस्यैकत्र देशे कार्यकरणमन्यत्राकरणम्, एकत्र सन्निधानमन्यत्रासन्निधिरित्येवं विरुद्धधर्मसन्देहादेकत्वनिश्चयो न स्यादिति तुल्यम् । नन्वेतद्देशे करणस्यैतद्देशेऽकरणेन, एतद्देशसान्निहितत्वस्यैतद्देशासन्निहितत्वेन सहैव विरोधः, न तु देशान्तराकरण-देशान्तरासन्निधानादिनेति चेत्—तर्ह्येतत्कालसम्बन्धित्वरूपवर्तमानत्वस्यैतत्कालासम्बन्धित्वरूपावर्तमानत्वेन सहैव विरोधः, न तु कालान्तरसम्बन्धरूपावर्तमानत्वेनेति समं समाधानमिति ॥

[74] ननु स्थिरत्वे बाधकसत्त्वादेव क्षणिकत्वसिद्धिः । स्थैर्ये हि कार्यकारणभावस्य काल्पनिकत्वमेव स्यात् । तच्च ते नेष्टम् । तथा हि किमिदं कारणत्वं भावनिष्ठं तस्य स्वाभाविकमुतौपाधिकम् । आद्ये एकैकस्यापि कारणत्वं सर्वं प्रति स्यादिति सर्वोत्पादकत्वापत्तिः । यथा स्वाभाविकनीलमुत्पलादि सर्वं प्रत्येव नीलं भवति; न तु कञ्चित्प्रत्यनीलम् । अन्त्ये स उपाधिः स्वाभाविको न वा । आद्ये सर्वसाधारण्यरूप उक्त एव दोषः । अन्त्ये उपर्युपर्युपाधिकल्पनादनवस्था । अथ स्वाभाविकत्वमेव स्वीकुर्मः । एवमपि कारणत्वस्य कार्यविशेषनिरूप्यतयाऽसाधारण्यमपि स्वभावः अतो बीजादेरङ्कुरादिनिरूपितमेव कारणत्वमिति न सर्वोत्पादकत्वप्रसङ्ग इति चेत्—तर्हि वस्तुस्थैर्ये तत् क्रमेण यावत्कार्यजनकं तावत्कारणत्वस्य तस्मिन् स्वाभाविकतया युगपदेव स्वोत्पत्तिकालादारभ्य सर्वस्वकार्यजननापत्तिः; स्वभावत्वात्कारणत्वस्येति चेत्—उच्यते ।

[75] किं ते कार्यकारणभावस्य काल्पनिकत्वं नीलादिवैधर्म्याद्वक्तव्यमित्याशयः यद्वा स्थैर्ये

---

[1] किञ्चिदिति सर्वत्र पाठः ।

नीलादि पारमार्थिकमेवाभ्युपगन्तव्यम्, अन्यथा तद्धर्मेण हेतुफलभावस्यापारमार्थिकत्वानुपपत्तेः। न च कार्यकारणभावस्यापारमार्थिकत्वे नीलादि पारमार्थिकं भवितुमर्हति, नित्यत्वप्रसङ्गात्। तस्मादस्य पारमार्थिकत्वेऽपरमपि तथा, नवोभयमपीति ॥

[76] 'कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात्। तत्स्वभावत्वादिति यदि, तदोत्पत्तेरारभ्य कुर्यादविशेषात्' इत्यपि न युक्तम्; तत्तत्सहकारिसान्निध्ये तत्तत्कार्यं करोतीति स्वभावव्यवस्थापनात् (स्वभावव्यवहारस्थापनात्)। इदं च साधारणमेव, सर्वैरपि तथोपलम्भात्। न हि नीलादेरप्यन्यत् साधारण्यमिति ॥

[77] स्यादेतत्। अस्तु स्थिरम्; तथाऽपि नित्यविभोर्न कारणत्वमुपपद्यते। तथा हि—अन्वयव्यतिरेकाभ्यां कारणत्वमवधार्यते, नान्वयमात्रेण; अतिप्रसङ्गात्। न च

---

त्याज्यमिति। नाद्यः; कार्यकारणभावो न पारमार्थिकः असाधारणत्वात् यन्नैवं तन्नैवं यथा नीलादीति विवक्षितस्ते नीलादि सत्यमिति सिद्ध्यति। अन्यथा दृष्टान्ताभावाद्धेतुहेतुमद्भावे काल्पनिकत्वानुमानं न युज्यते। तत्र नीलादिकार्यतया पारमार्थिकं अकार्यतया वा। अन्त्ये नित्यत्वापत्तिः। आद्ये कार्यकारणभावः पारमार्थिकः।

[76] यत्तु कथमेकस्य विरुद्धानेककार्यकारित्वम्। यदि तादृशस्वभाववत्त्वाददोष इत्युच्यते तदुत्पत्तेरारभ्य सर्वं करोतु। अतः स्थैर्यं त्याज्यमित्यवासंदिष्टमिति इदमपि न युक्तम्। तत्तत्सहकारियुक्तं सत् तत्र कार्ये तत् कारणं शक्तमिति हि ब्रूमः। अतः सहकारिसमवेशस्य युगपदभावान्न सर्वकार्ययौगपद्यम्। सहकारिसमवेशे कार्यकरत्वस्यैव तत्स्वभावत्वात्। इदं च तद्युक्तस्य तत्र शक्तस्वरूपं कारणत्वं सर्वसाधारणमेव नीलादिवत्। नीलादौ हि साधारण्यं सर्वपुरुषज्ञेयत्वमेव। तदत्राप्यस्ति; बीजादेरङ्कुरादिमात्रनिरूपितस्य कारणत्वस्य सर्वज्ञेयत्वात्। यदि सर्वप्रतिसम्बन्धिकत्वं साधारण्यं। न तन्नीलादावपि। न हि नैल्यं शंखप्रतिसम्बन्धिकमिति। अतस्तद्वत् कारणत्वं साधारणं न किमिति।

तस्मात्कार्यकारणभावासिद्ध्यादिदोषाभावात् प्रत्यभिज्ञाबलेन स्थैर्यसिद्धौ क्षणिकत्वे प्रमाणाभावेन क्षणभङ्गासिद्धौ च सत्यां भूतचैतन्याङ्गीकारे, 'न च गत्यन्तरं स्थिरं' इति पूर्वोक्तयुक्त्या शरीरस्य परमाणुपुञ्जत्वे उपादेयत्वस्यैवाभावात् अवयविरूपत्वे च विच्छिन्नकरं प्रत्यवशिष्टावयविन उपादेयत्वायोगाद्वासनासंक्रमासम्भवेन भोगप्रतिसन्धाननियमायोगान्नित्यविभुचेतनसिद्धिरिति।

[77] नन्वस्तु तावदुक्तयुक्त्या स्थैर्यम्। भूते चैतन्यादृष्टादिसत्त्व इवात्मनि तत्सत्त्वेऽपि बाधकमस्ति, आत्मनो नित्यत्वात्कालिकव्यतिरेकस्य। विभुत्वाद्दैशिकव्यतिरेकस्य च दुर्वचतया, 'आत्माभावे ज्ञानाद्यभाव' व्यतिरेकमुद्रावगम्यस्य कारणत्वस्य तत्रासम्भवात्। अन्वयमात्रेण

नित्यविभूनां व्यतिरेकसम्भवः । न च सोपाधेरसावस्त्येवेति साम्प्रतम् ; तथाभूतस्योपाधिसम्बन्धेऽप्यनधिकारात् । जनितो हि तेन स तस्य स्यात्, नित्यो वा । न प्रथमः, पूर्ववत् । नापि द्वितीयः, पूर्ववदेव । तथाऽपि चोपाधेरेव व्यतिरेकः ; न तस्य ; अविशेषात् । तद्वत इति चेत्—(न तस्य । अविशेषात्तद्वत इति चेत्—)न ; स चोपाधिश्चेत्यतोऽन्यस्य तद्वत्पदार्थस्याभावात् । भावे वा स एव कारणं स्यात् ॥ अत्रोच्यते—

[78] पूर्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥

भवेदेवं, यद्यन्वयव्यतिरेकावेव कारणत्वम् ; किं तु कार्यान्नियतः पूर्वभावः ।

---

कारणत्वे चात्माकाशादेः सकलकारणत्वप्रसङ्गात् । न च शरीरविशिष्टात्मव्यतिरेकः शरीरशून्यदेशकालावच्छेदेन सुवच इति न व्यतिरेकासिद्धिरिति युक्तम्—शरीरावच्छिन्नत्वस्य शरीरसंयोगरूपतया तस्यात्मजनितत्वाङ्गीकारे पूर्ववदात्मनो व्यतिरेकासम्भवेन तदुत्पादनेऽनधिकारात् । तस्य नित्यत्वाङ्गीकारे चोपाधिविशिष्टस्य पूर्ववत् कालिकव्यतिरेकस्य दुर्वचतया ज्ञानादिजनकत्वायोगात् ननूपाधिविशिष्टस्य क्वचिद्देशेऽभावाद्दैशिकव्यतिरेकादेव कारणत्वमस्त्विति चेत्—अयं दैशिकव्यतिरेकोऽप्युपाधेर्विभुत्वे पूर्ववत् दुर्घटः । उपाधित्वाद्विभुद्वयसंयोगाच्चाविभुरेवोपाधिरिति चेत्तथाऽपि विशिष्टाभावोऽयं विशेषणाभाव एव, विशेष्यस्य सर्वत्रान्वितत्वाविशेषात् । विशेष्येऽपि प्रतियोगित्वभानाविशेषात् विशिष्टाभावोऽयं न विशेषणाभाव इति चेन्न—विकल्पासहत्वात् विशिष्टमनन्यदन्यद्वा ; आद्ये विशिष्टात्मनेऽप्युपाध्यात्मोभयातिरिक्तत्वाभावेन विशेष्यवति विशिष्टाभावस्य विशेषणाभावपर्यवसानेनात्मव्यतिरेकासिद्धिः । विशिष्टस्यान्यत्वे तु विशिष्टव्यतिरेकात्कार्यव्यतिरेके विशिष्टमेव कारणं स्यात् ; नात्मेति ॥ अत्रोच्यते—

[78] नित्यस्यापि विभोरपि च वस्तुनः पूर्वभावरूपं कारणत्वमन्वयव्यतिरेकाभावेऽपि धर्मिग्राहकप्रमाणेन मीयते । यद्यन्वयव्यतिरेकावेव कारणत्वं स्यात् आत्मनो व्यतिरेकाभावादकारणत्वं भवेत् । नियतपूर्वकालसत्त्वस्यैव कारणपदार्थत्वात् तस्य क्वचिदन्वयव्यतिरेकबलादिवान्यत्र मानान्तरेण निर्णयो भवति । अन्यथा अन्वयव्यतिरेकत एव कारणत्वावधारणस्वीकारे स्पर्शादिकार्यव्यक्त्या वाय्वादिकारणव्यक्त्यनुमानासम्भवात् तादृशधर्मिधीरेव न स्यात् । तयोर्व्यक्त्योरन्वयव्यतिरेकानुपलम्भात् । अवश्यं चानुपलम्भस्थल एवानुमानप्रसरः । अन्यथा प्रत्यक्षत एव सिद्धेऽर्थे किमित्यनुमानम् । तस्मादनुमेयव्यक्त्यन्वयव्यतिरेकाग्रहणेऽपि यद्धर्मावच्छिन्नं प्रति यद्धर्मावच्छिन्नस्य कारणत्वं तद्धर्माक्रान्तयोरन्वयव्यतिरेकानुविधानं क्वचित् दृष्ट्वा तेन रूपेण व्यक्त्यन्तरसिद्धिरिति वक्तव्यम् । सा च सिद्धिर्व्यतिरेकरहितेऽपि क्वचिन्न न भवति ।

**स च क्वचिदन्वयव्यतिरेकाभ्यामवसीयते, क्वचिद्धर्मिग्राहकात्प्रमाणात् । अन्यथा कार्यात् कारणानुमानं क्वापि न स्यात्; तेन तस्यानुविधानानुपलम्भात् उपलम्भे वा कार्यलिङ्गानवकाशात् । प्रत्यक्षत एव तत्सिद्धेः । तज्जातीयानुविधानदर्शनात्सिद्धिरन्यत्रापि न वार्यते ॥**

[79] **तथाऽपि कीदृगस्यानुविहितान्वयव्यतिरेकमेव कार्यात् कारणं सिद्ध्येत्; अन्यत्र तथा दर्शनादिति चेन्न—बाधेन सङ्कोचात्; विपक्षे बाधकाभावेन चाव्याप्तेः । दर्शनमात्रेण चोत्कर्षसमत्वात् । अस्य चेश्वरे विस्तरो वक्ष्यते । सर्वव्यापकानां सर्वान् प्रत्यन्वयमात्राविशेषे कारणत्वप्रसङ्गो बाधकमिति चेन्न—अन्वयव्यतिरेकवज्जातीयतया विपक्षे बाधकेन च विशेषेऽनतिप्रसङ्गात् । तथा हि—कार्यं समवायिकारणवद् दृष्ट-**

[79] ननु तज्जातीयान्वयव्यतिरेकवत्सिद्धकारणत्वस्यान्यत्रानुमानेऽपि, अनुमेयकारणव्यक्तिरपि यथादर्शनं विशिष्यान्वयव्यतिरेकशालिन्येव सिद्ध्येदिति चेन्न—कारणस्यैवानुमानात्; अन्वयव्यतिरेकशालित्वस्य प्रकृतसाध्यकोटिप्रवेशाभावात्; नियतपूर्ववर्तित्वमात्रानुमानेऽनुमीयमानस्य तस्य युक्त्यन्तरेण व्यतिरेकासम्भवे निश्चिते बाधादेव तस्यार्थतः सिद्ध्यसम्भवात् । न चान्वयव्यतिरेकवत्कारणकत्वमेवानुमीयते, न तु सकारणकत्वमात्रमिति वाच्यम्—विपक्षे बाधकाभावेन हेतौ तादृशसाध्यनिरूपितव्याप्त्यभावात् । व्याप्त्यभावेऽपि दृष्टान्ते दर्शनमात्रेणापि तत्कथनस्य चोत्कर्षसमाख्यजातिरूपदोषदुष्टत्वात् । अस्य चोत्कर्षसमदोषदुष्टत्वस्य पञ्चमस्तबके ईश्वरे सशरीरत्वादिकमन्यत्र दर्शनमात्रेणोद्भावयन्तं प्रति विस्तरः करिष्यते । नन्वन्वयव्यतिरेकवत्कारणत्वानुमाने विपक्षे बाधकं नास्तीति न वक्तुं शक्यम् । अन्वयमात्रेण कारणत्वे सर्ववस्तुव्यापकानां विभूनां सर्वान्वयाविशेषात्सर्वकारणत्वप्रसङ्ग इति बाधकसत्त्वादिति चेन्न—अभिमतसाध्यस्यान्वयव्यतिरेकवज्जातीयत्वात्, हेतोर्विपक्षे बाधकसत्त्वात्, प्रकृतसाध्यविशेषस्य व्यतिरेकवत्त्वे बाधकसत्त्वाच्चेतरबाधसहकृतेन हेतुना विशेषेऽनुमीयमाने उक्तातिप्रसङ्गाभावात् । तथा हि—यद्यन्वयमात्रदर्शनेनात्मनो ज्ञानादिकारणत्वं कल्पयेम, तर्हि सर्वं प्रति कारणत्वमापद्येत । नत्वेवम् । किं तु यद्धर्मपुरस्कारेणान्वयव्यतिरेकौ दृष्टौ तद्धर्मवत्कारणानुमानमेव ब्रूमः । तत्र च भावकार्यत्वावच्छिन्नं प्रति समवायिकारणवत्त्वं दृष्टम् । समवायिकारणसत्त्वे कार्यसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकौ च दृष्टौ । एवं च यस्य न दृष्ट आश्रयो ज्ञानादेः, तस्य भावकार्यत्वरूपहेतुना समवायिकारणत्वरूपानुगतधर्मापरपर्यायजात्याक्रान्तवस्तुजन्यत्वमनुमीयते । अत्र चास्ति विपक्षे बाधकम्—'समवायिकारणाभावे कुत्र प्रत्यासन्नस्यासमवायिकारणत्वं स्यात् । कस्यानुग्राहकतया च किञ्चिन्निमित्तं स्यात् । तथा च सर्वविधकारणस्याप्यभावे ज्ञानादेरकार-

**मित्यदृष्टाश्रयमपि तज्जातीयकारणकम्—आश्रयाभावे किं प्रत्यासन्नं असमवायिकारणं स्यात् । तदभावे निमित्तमपि किमुपकुर्यात् । तथा चानुत्पत्तिः सततोत्पत्तिर्वा सर्वत्रोत्पत्तिर्वा स्यात् एवमपि निमित्तस्य सामर्थ्यादेव नियतदेशोत्पादे स एव देशोऽवश्यापेक्षणीयः स्यात् । तथा च सामान्यतो देशसिद्धौ इतरपृथिव्यादिबाधे तदतिरिक्तसिद्धिं को वारयेत् । एवमसमवायिनिमित्ते चोहनीये ॥**

---

णकत्वादनुत्पत्तिरेव स्यात् । कारणं विनाऽऽश्रयं विना चोत्पादे सततमुत्पत्तिः सर्वस्थलेऽप्युत्पत्तिश्च स्यात् इत्येवं रूपम् । ननु भावकार्यत्वात्समवायिकारणानुमानं मा भूत् । ज्ञानं किञ्चिदाश्रितं गुणत्वादिति देशमात्रानुमानं स्यात् । निमित्तानां च तत्रैव तदुत्पादकत्वं स्वभावोऽस्त्विति चेत्—एवं हि देशः कश्चिदपेक्षणीय एव । एवं च कार्यस्य तत्र समवायेनोत्पद्यमानतया तस्य तदपेक्ष्यत्वात् समवायिकारणत्वमपि सिद्धयति । नन्वेवं किञ्चित्सिद्धावपि नित्यविभुरूपविशेषपर्यवसानं कुत इति चेत्—अन्वयव्यतिरेकयोरपृथिव्यादिरूपत्वे भूतचैतन्यपक्षोक्तदोषादेव । नित्यविभुत्वसिद्धिश्च वीतरागजन्मादर्शनादिना अणुमध्यमपरिमाणत्वासम्भवेन चेति । एवञ्च सामान्यानुमाने बाधकवशादतिरिक्तसिद्धिं निषेद्धुं कः प्रभवतीति । अत्र प्रत्यासन्नतया चात्ममनःसंयोगोऽसमवायिकारणं भौतिकशरीरादि च निमित्तकारणमिति परिशीलनीयम् । अतोऽसमवायिकारणाश्रयत्वनिमित्तोपकार्यत्वबलादपि तत्सिद्धिः ॥

अतो नित्यविभोः कारणत्वासम्भवरूपदोषाभावात् भूतचैतन्यपक्षे च दोषस्योक्तत्वात् नित्यविभुचेतनसिद्धौ भुक्तिप्रतिनियमोपपत्तये क्षणभङ्गुरयागादिजन्यस्यादृष्टस्य चेतनधर्मत्वं स्वीकर्तव्यमिति सिद्धमलौकिकं लोकावगतपदार्थावृत्तिपरलोकसाधनमिति । तथा च तदधिष्ठातृतयेश्वरः सेद्धुमर्हतीति ॥

[नन्वदृष्टासिद्धावपि विश्ववृत्त्यन्यथानुपपत्त्यैव यागादेः फलसाधनत्वे सिद्धे तद्बोधकवेदोपदेष्टृतयैवेश्वरः सिद्धयेत् । एवमदृष्टस्य भूतधर्मत्वेऽपि तदधिष्ठातृतया स सिद्धयेदिति किं तदात्मधर्मत्वविचारणेति चेत्—उच्यते । यागादेः कृष्यादिवत् दृष्टविधया फलहेतुत्वे चेतनैः स्वयमेव बहुधा परिश्रम्य तादृशोपायाभ्यूहनसम्भवान्नात्यन्तमीश्वरोऽपेक्षितः स्यात् ; दृष्टद्वारा भावेऽदृष्टस्याप्यभावे विश्ववृत्तेर्भ्रान्तिमूलत्वमेव कल्प्यं भवेदित्यदृष्टस्थापनम् । एवं भूतातिरिक्तचेतनासिद्धौ चैतन्याधारयागादिकर्तृशरीरान्तर्गतभूतांश एव कृतिसामानाधिकरण्येनादृष्टोत्पत्तेरेष्टव्यतया पारलौकिकादिशरीरान्तर्गतभूतांशेन तज्जन्यफलानुभवस्य वैयधिकरण्येनायोगाद्विश्ववृत्तिदौःस्थ्यं तदवस्थमित्येवमभिसन्धाय तस्य भूतातिरिक्ते स्थापनमित्यलमधिकेन ॥]

[80] इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितः
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥ २० ॥

इति
श्रीन्यायकुसुमाञ्जलौ
प्रथमः स्तबकः ॥

---

[80] एवमनेन स्तबकेनोपपादितं यदधिष्ठितमदृष्टं स्वयं प्रतिजीवं विषमतयेश्वरवैषम्यनैर्घृण्यपरिहारकत्वेन मुख्यसहकारितया शक्तिरिति, इदमेतज्जन्यमेतज्जनकमिति विना शास्त्रं दुःसाधतया मायेति, सकलजगन्मूलतया प्रकृतिरिति, 'क्षीयन्ते चास्य कर्माणी'त्युक्तरीत्या विद्याविनाश्यत्वादविद्येति शास्त्रेणोदितम् , स देवः समयविशेषे विचित्ररचनप्रपञ्चपरिभ्रमणभावितविविधक्षोभविरतिहेतुः कामक्रोधविदूरः सर्वव्यापारसाक्षात्कारी भवन् निरन्तरसान्निधानाय मनसि मेऽभ्यधिकां प्रीतिमाधत्तामिति ॥

फणिपतिपर्वतवल्लभकृपया कुसुमाञ्जलेरयं प्रथमः ।
समवर्णि शिरोमणिना स्तबकः श्रीवीरराघवेणैवम् ॥

इति
कुसुमाञ्जलिविस्तरे
प्रथमः स्तबकः ।
शुभमस्तु ।

# शोधनम् ॥

| पु. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १९ | अन्मर्यामी | अन्तर्यामी |
| १४ | १३ | मानानवधिक | मानावधिक |
| १६ | १६ | एव न कार्ये | एव च कार्ये |
| १७ | २८ | न दर्शनात् इति नञ्समासः | नदर्शनादिति नगनैकादिवत् समस्तमेकं पदम् । दर्शनाददर्शनाच्च नेत्यर्थः । |
| २६ | २७ | (भोग)संविभाग | भोगसंविभाग |
| ३० | ५ | प्रध्वंसाविकल्पो | प्रध्वंसादिविकल्पो |
| ३३ | २५ | शक्तिशब्द | सहजशक्तिशब्द |
| ३५ | २७ | तत्राप्यन्तस्सु | तत्राप्यन्ततस्सु |
| ३६ | २३ | वीत्वजाति | वीत्वव्याप्यजाति |
| ४० | ७ | नि(कर्माणि) | नि कर्माणि |
| ,, | १२ | कर्पासा | कार्पास |
| ४१ | २ | संसर्गविशेषैः | संसर्गविशेषैः |
| ,, | २५ | काले | कालं |
| ४४ | ९ | निष्पात्व | निष्पापत्व |
| ४७ | २७ | कश्चित् | कश्चित् |
| ४८ | ७ | समवायेनादृष्टं | समवायेन भोगं |
| ५० | १२ | कल्पनं वा | कल्पने वा |
| ,, | १५ | मिती | मिति |
| ,, | २० | तावत् व्रीहि | तावद्व्रीहि |
| ६१ | २६ | ति प्रकाशदर्शनादिति | ति प्रकाशदर्शने तु |
| ६२ | १९ | सामग्रीकस्य | सामग्रीकत्वस्य |
| ६९ | १४ | मुद्गयसंयो | मुद्गयासंयो |
| ७० | १९ | कानां | पकानां |
| ७१ | १ | किंप्रत्यासन्नं | किम्प्रत्यासन्नं |

॥ श्रीः ॥

## न्यायकुसुमाञ्जलौ द्वितीयस्तबकः ।

**[1] तदेवं सामान्यतः १ सिद्धे अलौकिके हेतौ–तत्साधनेनावश्यं भवितव्यम् । नच तच्छक्यमस्मदादिभिर्द्रष्टुम् । नचादृष्टेन व्यवहारः—ततो लोकोत्तरः सर्वानुभावी संभाव्यते ॥**

**[2] २ ननु नित्यनिर्दोषवेदद्वारको योगकर्मसिद्धसर्वज्ञद्वारको वा धर्मसंप्रदायः स्यात् । किं परमेश्वरकल्पनयेति चेत्— ३ अत्रोच्यते—**

**प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।**
**४ तदन्यस्मिन्ननाश्वासान्न विधान्तरसंभवः ॥ १ ॥**

---

॥ श्रीः ॥

## अथ कुसुमाञ्जलिविस्तरे द्वितीयस्तबकः ।

यस्य निःश्वसितं वेदाः ऋक्सामयजुरादयः ।
सुपर्णशैलशृङ्गारः श्रीनिवासः श्रियेऽस्तु नः ॥

[1] उक्तैः प्रथमविप्रतिपत्तिनिरासकैर्हेतुभिः प्रपञ्चवैचित्र्यनिर्वाहके प्रतिनियतभोगहेतावलोकप्रत्यक्षेऽदृष्टे सिद्धे सर्वलोकातिशायी सर्वज्ञः कश्चिदीश्वरस्तर्कपुरस्सरमनुमीयते । कथम्? उच्यते । अस्य खल्वदृष्टस्य साधनमवश्यमङ्गीकर्तव्यम् । अन्यथा तदनुत्पादप्रसङ्गात् । तत्र यद्यपि विश्ववृत्त्यन्यथानुपपत्त्यैवादृष्टस्यानुमितत्वाददृष्टमिव तत्साधनमपि सामान्यतो ज्ञातमेव ; अथाप्येतत्फलजनकादृष्टसाधनमिदं कर्मेति विशिष्य तत्साधनत्वेन तन्नास्माभिरस्मत्पूर्वपुरुषैर्वा स्वयमेव द्रष्टुं शक्यम् । नच तददर्शने सति तदनुष्ठानरूपः कायिकः, तदवबोधिवाक्यात्मकवेदरचनारूपो वाचिकश्च व्यवहारो घटते । अतोऽदृष्टसाधनं अभिज्ञपौरुषेयकृतिविज्ञेयम् । अन्यागम्यत्वादित्यस्मदनुष्ठेयादृष्टसाधनावबोधिवाक्यवक्तृतयाऽदृष्टबलादीश्वरसिद्धिरिति ।

(2) अत्र द्वितीयविप्रतिपत्त्या प्रत्यवस्थानम्–नादृष्टबलादीश्वरसिद्धिः, अन्यथैवोपपत्तेः । वेदस्यापौरुषेयतया नित्यत्वात् अत एव भ्रमप्रमादादिदोषसम्भावनाविरहेण निर्दोषत्वात् । वेदाध्ययनसामान्यस्य गुर्वध्ययनपूर्वकत्वनियमेन धर्मावबोधिवेदप्रवचनरूपः संप्रदायोऽयमविच्छिन्नः

---

१ सिद्धे इत्यस्य स्थिते इत्यर्थे हेतावित्यन्तस्य भवितव्यमित्यनेनान्वयः । अनुमिते इत्यर्थे तु संभाव्यत इत्यनेनान्वयः । तदा तत इत्येतदर्थज्ञानाय तत्साधनेनेत्यादि अवान्तरवाक्यत्रयम्, २ वेदान्वयां स्यादेतादिति पाठः । ३ अत्रेति नास्ति । ४ ततोऽन्यस्मिन्निति पा० ।

**[3] तथा हि....प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत् । यदि च तावन्मात्राधीना भवेत्, अप्रमाऽपि प्रमैव भवेत् । अस्ति हि तत्र ज्ञानहेतुः । अन्यथा ज्ञानमपि सा न स्यात् ॥**

---

प्रवहतीत्यङ्गीकारसंभवात्; वेदस्यानित्यत्वेष्टावपि योगेन कर्मणा च ये सिद्धाः कपिलादयस्तैरेव सर्वज्ञैर्धर्मसंप्रदायप्रवर्तनोपपत्तेश्चेति ॥ अत्रोच्यते—वेदपौरुषेयत्वसाधकस्य सद्धेतुत्वस्थापनं पञ्चमे करिष्यते । अत्र वेदापौरुषेयत्व-कपिलादिकृतत्वसाधकत्वाभिमतपूर्वपक्षिहेतुदूषणं क्रियते । न तावन्नित्यनिर्दोषवेदद्वारकत्वसंभवः, प्रमात्वविशिष्टस्य सर्वस्योत्पत्तौ ज्ञप्तौ च परतन्त्रत्वात् गुणायत्तत्वात् वेदजन्यशाब्दप्रमाया अपि वक्तृयथार्थज्ञानाधीनत्वस्यावश्यकत्वात् वक्तरि यथार्थज्ञानाभावे तदुक्तवाक्यात्प्रमानुत्पत्तेः वेदेऽपि वक्तृगुणापेक्षणात् तन्निर्दोषत्वमात्रस्याप्रयोजकत्वात् । न च नित्यत्वाद्वेदस्य वक्त्रपेक्षाऽभावात्सुतरां गुणापेक्षा नास्तीति न तज्जन्यप्रमायाः गुणाधीनत्वम् । यद्यप्येवं तदुत्पत्तौ तदनपेक्षत्वेऽपि तद्गतप्रामाण्यस्य ज्ञप्तौ पराधीनत्वं स्वतःप्रमाण्यास्वीकारे आवश्यकम्, अथापि महाजनपरिग्रहादेव प्रामाण्यसिद्धिरिति न तदर्थमपि गुणापेक्षेति वाच्यम्—वर्णादेरनित्यत्वेन सृष्टिप्रळयसद्भावेन वेदनित्यत्वमहाजनपरिग्रहयोरसंभवेन सर्वथा गुणापेक्षाया आवश्यकत्वात् । नापि सिद्धसर्वज्ञद्वारकत्वम्; ईश्वरादन्यत्रैदृशवेदविधानौपयिकगुणसद्भावे आश्वासाभावात् । अतो नेश्वरद्वारकत्वातिरिक्तप्रकारसम्भवः ॥

[3] तत्रादौ प्रमाया उत्पत्तौ परतस्त्वमुपपाद्यते—यद्यपि कार्यसामान्यस्य स्वभिन्नकारणजन्यत्वादुत्पत्तौ परतस्त्वं निर्विवादम्; अथापि प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति ज्ञानविशेषत्वात् अप्रमावदितीदृशसाध्यात्मकं परतस्त्वं साध्यते । स च हेतुः प्रमायां गुणः, अप्रमायां दोषः । न च तयोरपि प्रमाऽप्रमारूपज्ञानहेतुत्वात् । ज्ञानहेत्वतिरिक्तत्वं कथमिति शङ्क्यम्—प्रमाऽप्रमोभयनिरूपितकारणतावद्भिन्नकिञ्चित्कारणकत्वं साध्यमिति विवक्षितत्वात् । उभयसाधारणकारणं तावत् आत्ममनःप्रभृतिकम् । नन्वत्र कार्यत्वे सतीति व्यर्थम् । ईश्वरतज्ज्ञानतन्नित्यत्वानामसिद्धतया नित्यज्ञाने व्यभिचारवारणाय तदिति च दुर्वचमिति चेदुच्यते—नात्र सामान्यमुखी व्याप्तिः—यः कार्यत्वे सति यद्विशेषः स तद्धेत्वतिरिक्तहेत्वधीन इति; अङ्कुरविशेषघटविशेषकारणस्य बीजविशेषकुलालविशेषादेरङ्कुरसामान्यघटसामान्यकारणबीजसामान्यकुलालसामान्यातिरिक्तत्वाभावेनातिरिक्तहेत्वधीनत्वस्य कार्ये दुरुपपादत्वात् । अतो विशेषव्याप्तिरेव । अत एव कार्यत्वादेर्हेतुत्वेपेक्षा । तत्र ज्ञानविशेषत्वमात्रस्य हेतुत्वे, 'तदस्तु । अधीनत्वरूपसाध्यं मास्तु, नित्यस्यापि ज्ञानस्य स्वीकारसंभवा'दित्यप्रयोजकशङ्का स्यात् । तत्परिहाराय स्वयं ज्ञाननित्यत्वखण्डनायोगादयमुक्तो विशिष्टो हेतुः । संभवति हि प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीनत्वाकार्यत्वा-

**[4] ज्ञानत्वेऽप्यतिरिक्तदोषानुप्रवेशादप्रमेति चेत्—एवंतर्हि दोषाभावमाधिकमासाद्य प्रमाऽपि जायेत ; नियमेन तदपेक्षणात् । अस्तु दोषाभावोऽधिकः, भावस्तु नेष्यत इति चेत्—भवेदप्येवम् , यदि नियमेन दोषैर्भावरूपैरेव भवितव्यम् । न त्वेवम् ; विशेषादर्शनादेरभावस्यापि दोषत्वात् । कथमन्यथा ततः संशयविपर्ययौ ? ततस्तद-भावो भाव एवेति कथं स नेष्यते ?**

**[5] स्यादेतत्—शब्दे तावत् विप्रलिप्सादयो भावा एव दोषाः । ततस्तदभावे स्वत एव शाब्दी प्रमेति चेत्—न—अनुमानादौ लिङ्गविपर्यासादीनां १ भावानामपि दोषत्वे तदभावमात्रेण प्रमानुत्पत्तेः ॥ 'अन्यत्र यथातथाऽस्तु । शब्दे तु विप्रलिप्साद्यभावे**

---

न्यतरवती ज्ञानविशेषत्वादित्यनुमाय पश्चात्प्रकृतप्रमायामकार्यत्वांशत्यागेनाधीनत्वांशनिर्धारणार्थं, प्रमा तादृशहेत्वधीना अकार्यत्वाभाव (कार्यत्वे) सति ज्ञानविशेषत्वादित्यनुमानं निर्दुष्टम् । तदत्र भाव्यम् । न चायं हेतुरप्रयोजकः ; यदि प्रमा किञ्चिदसाधारणकारणमनपेक्ष्य ज्ञानसामान्य-कारणमात्राधीना स्यात् , तर्ह्यप्रमाऽपि प्रमैव भवेत् । (अत्र यदि प्रमात्वं ज्ञानसामान्यकारण-मात्रप्रयोज्यं स्यात् ; अप्रमावृत्त्यपि स्यादिति निष्कर्षः । तथा च नापाद्यापादकयोः सामाना-धिकरण्यहानिः ।) **अन्यथा** सामान्यकारणाधीनत्वस्याप्रमायामस्वीकारे सा ज्ञानमेव न स्यात् । कुतस्तस्या अप्रमात्वरूपो विशेषः ?

[4] ननु ज्ञानसामान्यहेत्वतिरिक्तदोषरूपसहकारिप्रयोज्यं तत्राप्रमात्वमिति चेत्—तर्हि ज्ञान-सामान्यकारणं दोषसहकृतमप्रमां जनयति ; तदसहकृतत्वे तु प्रमामिति दोषाभावस्य नियमेनापे-क्षितस्य प्रमाकारणत्वं सिद्धमिति कथं प्रमाया असाधारणकारणानपेक्षत्वम्? ननु ज्ञानसामान्यकार-णातिरिक्तभावकारणानधीनत्वं प्रमायामस्मादिष्टम् । अतः सामान्यतस्तदतिरिक्तहेत्वधीनत्वसाधने सिद्धसाधनम् ; तादृशभावरूपहेत्वधीनत्वसाधने चाप्रयोजकत्वमिति चेत्—भवेदिदमप्रयोजकत्वम् । यदि दोषो भावरूप एव स्यात् । न त्वेवम् । स्थाणुत्वपुरुषत्वव्याप्यवक्रकोटर-करचरणाद्यदर्शने हि स्थाणुर्वा पुरुषो वेति संशयः , कदाचिद्विपर्ययश्चोदेतीति विशेषादर्शनरूपोऽभावोऽपि क्वचि-द्दोषः । एवमसामीप्यादिरपि । तत्र तस्यादोषत्वे दोषसापेक्षौ संशयविपर्ययौ तज्जन्यौ न स्याताम् । तथा च तद्दर्शनरूपो दोषाभावः संशयोत्तरप्रमायां हेतुरिति कथं प्रमायां भावरूपहेतु-र्नेष्यत इति वक्तुं शक्यमिति ॥

[5] नन्वस्तु क्वचिद् भावरूपस्यापि दोषाभावस्य कारणत्वम् । सर्वथा दोषाभावातिरिक्तभावा-पेक्षा कुत्रापि प्रमायां नेष्यते । विशिष्य तु शब्दे भ्रमो विप्रलिप्सा, विषयान्तरव्यासङ्गः ,

---

१ बो. 'अपिशब्दो भिन्नक्रमः , दोषत्वे सत्यपीत्यर्थः । अवधारणे वा.

**वक्तृगुणापेक्षा नास्ती'ति चेन्न-गुणाभावे तदप्रामाण्यस्य वक्तृदोषापेक्षा नास्तीति विपर्ययस्यापि १ तुल्यत्वात्॥ अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ स्त इति चेन्न—प्रामाण्यं प्रत्यपि गुणानां तयोः सत्त्वात्॥**

**[6] पौरुषेयविषये इयमस्तु व्यवस्था। अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेन्न-गुणनिवृत्त्याऽप्रामाण्यस्यापि संभवात्॥ तस्या अप्रामाण्यं प्रति सामर्थ्यं नोपलब्धमिति चेत्—दोषनिवृत्तेः प्रामाण्यं प्रति क्व सामर्थ्यमुपलब्धम्? 'लोकवचसी'ति चेत्-तुल्यम्॥ तदप्रामाण्ये दोषा एव कारणम्; गुणनिवृत्तिस्त्ववर्जनीयसिद्धसन्निधिरिति चेत्—प्रामाण्यं प्रति गुणेष्वपि तुल्यमेतत्॥ गुणानां दोषोत्सारणप्रयुक्तः सन्निधिरिति चेत्—दोषाणामपि गुणोत्सारणप्रयुक्त इत्यस्तु॥ निःस्वभावत्वमेवमपौरुषेयस्य वेदस्य स्यादिति चेत्—आत्मानमुपालभस्व। तस्मात् यथा—द्वेषरागाभावाविनाभावेऽपि रागद्वेषयो-**

करणापाटवापरपर्यायः करणे किञ्चित्प्रतिबन्धकवस्तुसंयोग इत्येते भावा एव दोषा इति दोषाभावस्यापि भावरूपस्य न प्रसक्तिरिति चेन्न—दोषाभावमात्रस्य प्रमाकारणत्वासंभवात्। तथा सति भ्रमात्मकपरामर्शादेरेवानुमानादौ दोषतया तदभावमात्रेण प्रमात्मकानुमित्यापत्तेः। अतः प्रमात्मकपरामर्शादिरूपो गुणोऽप्यपेक्षित इति दोषाभावातिरिक्तभावापेक्षत्वमपि सर्वत्र स्वीकार्यमिति। नन्वन्यत्रान्वयव्यतिरेकबलात् गुणस्य भावस्यापेक्षायामपि शब्दे वक्तृगुणं विना दोषाभावमात्रेण प्रमा संपद्यत इति चेन्न—दोषे सत्यप्रामाण्यं, तदभावे च प्रामाण्यमिति यत् त्वदुक्तं, तद्वैपरीत्यस्य 'गुणे सति प्रामाण्यं, तदभावे चाप्रामाण्यमिति अप्रामाण्ये दोषो न हेतु'रित्येवंरूपस्य त्वदुक्तरीतितुल्यत्वात्। दोषाणामप्रामाण्यान्वयव्यतिरेकाविव गुणानां प्रामाण्यान्वयव्यतिरेकौ स्त एव।

[6] ननु सर्वत्र गुणाधीनमेव प्रामाण्यमस्तु। अथापि वेदस्यापौरुषेयत्वात्तत्र परं दोषनिवृत्तिमात्राधीनमेव तत् स्वीक्रियत इति चेन्न—अन्यत्र सर्वत्राप्रामाण्यस्य दोषाधीनत्वेऽपि वेदे परं गुणाभावमात्राधीनत्वस्वीकारेणाप्रामाण्यापत्तेः॥ अक्लृप्तकल्पनं पुनरुभयोरविशिष्टम्॥ लौकिकवाक्ये गुणनिवृत्त्या सह दोषाणामिव, दोषनिवृत्त्या सह गुणानामपि समावेशदर्शनेन दोषनिवृत्तेरपि प्रामाण्यप्रयोजकत्वासिद्धेः॥ एवं सत्यपौरुषेयतया निवृत्तगुणदोषे वेदे उभयमपि न स्यात्। कथं चेदं घटत इति चेत्—अपौरुषेयवादिनमात्मानमुपालभस्व। वयं तु पौरुषेयत्वमेवातिष्ठामह इति न गुणाभावः। तथा च यथा—रागस्थले द्वेषाभावस्य। द्वेषस्थले रागाभावस्य च सत्त्वात् प्रवृत्तिप्रयत्नस्य द्वेषाभावेन, निवृत्तिप्रयत्नस्य रागाभावेन चाविनाभावे सत्यपि, नियमेन रागद्वेषयो-

१ अयं पाठो व्याख्याद्वयानुसारी। सुवचत्वादिति क. ख. पाठः।

१ रनुविधाननियमात् प्रवृत्तिनिवृत्तिप्रयत्नयो रागद्वेषकारणकत्वम्; न तु निवृत्तिप्रयत्नो द्वेषहेतुकः, प्रवृत्तिप्रयत्नस्तु सत्यपि रागानुविधाने द्वेषाभावहेतुक इति विभागो युज्यते ; विशेषाभावात्—तथा प्रकृतेऽपि ॥

[7] तथाऽपि वेदानामपौरुषेयत्वे सिद्धे अपेतवक्तृदोषत्वादेव प्रामाण्यं सेत्स्यति। ततः सिद्धे प्रामाण्ये गुणाभावेऽपि तदिति दोषाभाव एव हेतुः ; अकारणं गुणा इति चेन्न—अपेतवक्तृगुणत्वेन सत्प्रतिपक्षत्वप्रसङ्गात् ॥ 'स्वत एव प्रामाण्यनिश्चयः। किं तु शङ्कामात्रमनेनापनीयते ; दोषनिबन्धनत्वात्तस्य तदभावेऽभावात् । अतो नेदमनुमानवत् (अनुमानं) सत्प्रतिसाधनीकर्तुमुचितमिति चेत्—न-गुणनिवृत्तिनिबन्धनायाश्शङ्कायास्सुलभत्वात् ॥ तस्याः केवलाया अप्रामाण्यं प्रत्यनङ्गत्वान्न शङ्केति चेत्—दोषनिवृत्तेरपि केवलायाः प्रामाण्यं प्रत्यनङ्गत्वान्न तया शङ्कानिवृत्तिरिति तुल्यमिति ॥

---

रनुसरणात् तयोः प्रयत्नयो रागद्वेषावेव कारणभूतौ ; न तु निवृत्तिप्रयत्नस्य द्वेषहेतुकत्वेन प्रवृत्तिप्रयत्नस्य द्वेषाभावहेतुकत्वस्वीकारेण रागहेतुकत्वास्वीकारः ; एकस्य भावहेतुकत्वमपरस्याभावहेतुकत्वमिति विभागनियामकाभावात्—तथा प्रकृतेऽपि गुणदोषानुविधानसाम्यात् न प्रामाण्यस्य गुणहेतुकत्वास्वीकार इति ।

[7] ननु द्वेषाभावस्य प्रवृत्तिहेतुत्वे उपेक्षाबुद्धिस्थलेऽपि प्रवृत्त्यापत्तिरिति राग एव कारणम् । तथाऽपि वेदापौरुषेयत्वस्य प्रमाणसिद्धत्वात् वेदप्रामाण्यस्य चोभयसम्मतत्वात् साधकपर्यालोचनायां वेदः प्रमाणं अपेतवक्तृदोषत्वादिति प्रामाण्यसिद्धौ प्रामाण्यप्रयोजकाकांक्षायां गुणाभावेऽपि वेदे तत्सत्त्वेन गुणस्य कारणत्वासम्भवेन दोषाभावस्य तत्त्वस्वीकार इति चेन्न— प्रामाण्यस्यासिद्धिप्रसङ्गात् । उक्तानुमानस्य वेदो न प्रमाणमपेतवक्तृगुणत्वादिति सत्प्रतिपक्षितत्वात् । ननु न वयं प्रामाण्यमनुमानात्सिद्ध्यतीति ब्रूमः ; स्वतःप्रामाण्यस्वीकारात् । अतो न प्रामाण्यानुमानस्थल इव सत्प्रतिपक्षकार्यम् । किं तु स्वतो निश्चितेऽपि प्रामाण्ये क्वचिदप्रमायामपि प्रामाण्यनिश्चयात् प्रकृतेऽपि तथाऽप्रामाण्यशङ्कायां सर्वत्राप्रामाण्यस्य दोषनिबन्धनत्वात् प्रकृते च तदभावात् कारणाभावज्ञानात् तच्छङ्कानिरासमात्रमिति चेन्न—तन्निरासस्यैवासंभवात् । गुणाभावस्थलेऽप्रामाण्यस्यान्यत्र दर्शनेनात्रापि गुणाभावरूपकारणसत्त्वेनाप्रामाण्यशङ्काया अवस्थानात् । अथ गुणनिवृत्तिः केवला नाप्रामाण्यहेतुः , किं तु दोषे सतीति चेत्—दोषनिवृत्तिरपि केवला न प्रामाण्यहेतुः । किं तु गुणे सतीति उक्तशङ्का तदवस्थेति ॥ तस्मादुत्पत्तौ पारतन्त्र्यस्येत्थमुपपादनात् प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीनेति, सिद्धा प्रकृतेऽपि वक्तृयथार्थज्ञानरूपगुणापेक्षा ॥

---

१ अन्वयदर्शनादिति क. २. पा०।

**[8] एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्। यदि तु स्वतो ज्ञायेत, कदाचिदपि प्रामाण्यसंशयो न स्यात् ज्ञानत्वसंशयवत्; निश्चिते तदनवकाशात्। नहि साधकबाधकप्रमा(साधकप्रमा)णाभावमवधूय समानधर्मादिदर्शनादेवासौ; तथा सति तदनुच्छेदप्रसङ्गात्॥**

---

[8] यथा प्रामाण्यमुत्पत्तौ परतः, तथा ज्ञप्तावपि परत एव; आप्तोक्तवाक्यजन्यत्वेन वेदार्थज्ञाने प्रमात्वस्यानुमातव्यत्वात्। नच ज्ञानस्य स्वतःप्रामाण्यं सम्भवति, अनभ्यासदशायां सांशयिकत्वात्। अनभ्यासदशा नामाभ्यासाभावदशा। अभ्यास आवृत्तिः ज्ञानसजातीयज्ञानोत्पत्तिः। जातु जलाशये जलमालोक्य तत्र विहितस्नानपानादेः पुंसः परदिने मद्ध्याह्ने दूरात्तत्र यज्जलदर्शनं, तदभ्यासदशापन्नं ज्ञानम्। तत्र गृहीतप्रामाण्यकपूर्वज्ञानसजातीयतया मरीचिकासंशयस्य इदं ज्ञानं प्रमा न वेति संशयस्य च न प्रसक्तिः। गृहीतप्रामाण्यकज्ञानसजातीयत्वानुसन्धानाविषयभूतं तु ज्ञानं प्रामाण्यसंशयविषय एव भवति। अनेन सांशयिकत्वेन प्रामाण्यं **परतो ज्ञायते**। न स्वतो ग्राह्यं इत्यनुमीयते।

तत्राभ्यासदशापन्नज्ञानेऽपि सजातीयत्वानुसन्धानबलात्प्रामाण्यस्य ग्रहणात् यद्यपि परतो ग्राह्यत्वमस्ति; तथाऽपि तत्र संशयस्य स्वरसतोऽनुदयात्सांशयिकत्वरूपहेतुर्भागासिद्ध इति तद्वारणार्थं अनभ्यासदशायामित्युच्यते। न च विशेषणं कृतेऽपि सांशयिकत्वं तत्रासिद्धमेवेति वाच्यम्—तस्य पक्षविशेषणत्वात्। तथा च गृहीतप्रामाण्यकज्ञानसजातीयत्वानुसन्धानाविषयज्ञाननिष्ठप्रामाण्यं न स्वतो ग्राह्यं सांशयिकत्वादित्यनुमानम्। यदि तु ज्ञानव्यक्तिभेदेऽपि सजातीयज्ञानेषु सर्वत्र प्रामाण्यव्यक्तिरेकैव वर्तत इति मन्यते, तर्ह्यनभ्यासदशापन्नत्वविशेषणं पक्षांशेऽपि न देयम्; तस्य प्रामाण्यस्याभ्यासदशायामसांशयिकत्वेऽप्यन्यदा सांशयिकत्वेन भागासिद्ध्यभावात्। वस्तुतस्तु तस्य पक्षविशेषणत्वेऽपि उपेक्षात्मकानभ्यासदशापन्नज्ञाननिष्ठप्रामाण्ये यत्र संशयो न जातः तत्र भागासिद्धितादवस्थ्यात् प्रामाण्यविशेषस्यैव पक्षत्वं स्वीकार्यमिति न दोषः। अत एव पक्षकोटिबहिर्भावेनानभ्यासदशायामिति पृथगुक्तं केवलं समन्वयोपयोगिसमयपरिचयाय। अत्र परतो ग्राह्यत्वेन मीमांसकनैयायिकोभयमतमप्रामाण्यं दृष्टान्तः। ज्ञानस्य प्रामाण्यं यदि स्वत एव गृह्येत तर्हि ज्ञानग्रहणकाले ज्ञानत्वस्येव तत्प्रामाण्यस्यापि गृहीतत्वात्, यथा इदं ज्ञानं नवेति संशयो न जायते तथा, इयं प्रमा न वेत्यपि न जायेतेति। न च संशयं प्रति साधारणधर्मवत्ताज्ञानमसाधारणधर्मवत्ताज्ञानमितीदं कारणम्। तच्च प्रमाऽप्रमोभयसाधारणज्ञानत्वादिज्ञानं स्वतःप्रामाण्यनिश्चयानन्तरमप्यस्तीति न स्वतो ग्राह्यत्वस्य सांशयिकत्वविरोधित्वमिति वाच्यम्—संशयं प्रति सिद्धेर्बाधनिश्चयस्य च प्रतिबन्धकत्वेन, साधारणधर्मवत्ताज्ञानरूपकारणसत्त्वेऽपि प्रतिबन्धकाभाव-

**[9] अथ प्रमाणवदप्रमाणेऽपि तत्प्रत्ययदर्शनात् विशेषादर्शनात् भवति शङ्केत्यभिप्रायः—तत् किं प्रमाणज्ञानोपलम्भेऽपि न तत्प्रामाण्यमुपलब्धम्, प्रमाणज्ञानमेव वा नोपलब्धम्? आद्ये कथं स्वतः प्रामाण्यग्रहः; प्रत्ययप्रतीतावपि तदप्रतीतेः। द्वितीये कथं तत्र शङ्का; धर्मिण एवानुपलब्धेरिति ॥**

**[10] यदपि झटिति प्रचुरतरसमर्थप्रवृत्त्यन्यथानुपपत्त्या स्वतःप्रामाण्यमुच्यते—तदपि नास्ति; अन्यथैवोपपत्तेः। झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातमन्तरेणानुपपद्यमाना तमाक्षिपेत्। प्रचुरप्रवृत्तिरपि स्वकारणप्राचुर्यम्। इच्छा च प्रवृत्तेः कारणम्।**

---

घटितसामग्र्यभावेन प्रामाण्यसिद्धौ सत्यां संशयानवकाशात्। सिद्ध्यभावस्य सामग्रीप्रवेशानङ्गीकारे च सर्वदैव साधारणधर्मज्ञानकाले संशयापत्तिरिति।

[9] अथ प्रामाण्यं स्वतो ग्राह्यमेव। परं तु तत् प्रमाभूतज्ञान इवाप्रमाभूतेऽपि स्वतो गृह्यते। पश्चात्तु करणदोष-बाधकप्रत्ययादिनाऽप्रमायां स्वतो गृहीतप्रामाण्यत्यागः। एवं च प्रमायां प्रामाण्ये गृहीतेऽप्यप्रमावैलक्षण्यनियामकस्य विशेषस्यादर्शनात् पुनरप्यप्रमाणं किमिति संशयो भवितुमर्हतीति चेन्न—अप्रामाण्यसंशयं प्रति प्रामाण्यनियामकविशेषरूपतदभावव्याप्यवत्ताज्ञानस्येव तदभाववत्तानिश्चयस्यापि प्रतिबन्धकत्वात् स्वतःप्रामाण्यग्रहेऽप्रामाण्यसंशयाप्रसक्तेः। अप्रामाण्यज्ञानप्रतिबन्धकं हि ज्ञानं धर्मिप्रामाण्यरूपविपरीतकोट्युभयविषयकं वाच्यम्। विशेष्यप्रकारविशेषानवगाहित्वेऽप्रतिबन्धकत्वात्। स्वतःप्रामाण्यज्ञानं च तादृशमेव; अन्यथा प्रामाण्यानवगाहने स्वतःप्रामाण्यासिद्धेः। विशेष्यानवगाहने च धर्मिण एवाग्रहणात् धर्मिज्ञानरूपकारणाभावात् संशय एव न स्यात्। नचु प्रामाण्यनिश्चयो न प्रतिबन्धकः, किं तु विशेषदर्शनरूपव्याप्यवत्ताज्ञानाधीनावधारणात्मकज्ञानमेवेति वाच्यम्—निश्चयत्वावधारणत्वयोरवैलक्षण्यात्। सर्वस्य च निश्चयस्य प्रतिबन्धकताया आनुभविकत्वादिति। तथा च सांशयिकस्थले प्रामाण्यग्रहः परत एव सफलप्रवृत्तिजनकत्वरूपात् पश्चादवगम्यमानाद्धेतोः; न तु स्वतः। एवञ्चाभ्यासदशापन्नज्ञानेऽपि तुल्यनयेन प्रामाण्यग्रहः प्रज्ञातप्रामाण्यकज्ञानसजातीयत्वहेतोः परत एवेति न कुत्रापि प्रामाण्यं स्वतो गृह्यते।

[10] एवं प्रामाण्यग्रहस्य परतस्त्वे साधकं समभाहि। अथ स्वतस्त्वसाधकं क्षिप्यते। इत्थं खलु साधकमुपन्यस्यते—अर्थसन्देहादपि यद्यपि कचित्प्रवृत्तिः तस्याः प्रवृत्तेः सामर्थ्यं (सङ्गतार्थत्वं साफल्यं) चानुभूयत इति न प्रवृत्तिसामान्यं प्रति वा सफलप्रवृत्तिसामान्यं प्रति वा प्रामाण्यग्रहः कारणम्; अथापि या प्रचुरतरा उत्कटा निष्कम्पा प्रवृत्तिस्तत्र प्रामाण्यज्ञानं कारणम्। अर्थनिश्चयं विना तादृशप्रवृत्त्ययोगात्, ज्ञानस्य चार्थांशे निश्चय-

**तत्कारणमपीष्टाभ्युपायताज्ञानम् । तदपि तज्जातीयत्वलिङ्गानुभवप्रभवम् । सोऽपीन्द्रियसन्निकर्षादिजन्मा । न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः । उपयोगे वा स्वत एवेति कुत एतत् ? ततः समर्थप्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्तद्ग्रहणप्राचुर्याद्वा स्वतस्त्वं तु तस्य कोपयुज्यते । न हि पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिस्तस्य प्रत्यक्षा स्यात् ॥**

त्वस्य प्रामाण्यग्रहाधीनत्वात् । न चेदं प्रामाण्यज्ञानं तदा परतः ; ज्ञानसमनन्तरं झटित्येव प्रवृत्तिदर्शनात् ; परतस्त्वे च झाटित्यायोगादिति-तन्न— **अन्यथैवोपपत्तेः** । प्रामाण्यग्रहं विनाऽप्यर्थनिश्चयसम्भवात् , प्रामाण्यग्रहस्यावश्यकत्वेऽपि स्वतस्त्वं विनाऽपि संभवाच्च । तथा हि—कारणं विना कार्योदयायोगात् । शीघ्रभाविनी प्रवृत्तिः स्वकारणस्य शीघ्रोपनिपातमाक्षिपेत् , न प्रामाण्यग्रहस्य स्वतस्त्वम् । न च प्रचुरप्रवृत्तौ प्रामाण्यग्रहस्य कारणत्वात् सा शीघ्रं भवन्ती तत्स्वतस्त्वं ग्राहयतीति वाच्यम्–तत्र तस्याकारणत्वात् । प्रवृत्तिं प्रति यत् कारणं तत्प्राचुर्यबलेन प्रवृत्तिप्राचुर्यसिद्धेः । इच्छा हि तत्र कारणम् । अत उत्कटेच्छासत्त्वे उत्कटा प्रवृत्तिः । इच्छायाश्चेष्टसाधनताज्ञानं कारणम् । तच्च प्रकृतक्षीरादाविष्टसाधनताज्ञानं इष्टसाधनत्वेन निश्चितानुभूतक्षीरव्यक्तिजातीयत्वरूपहेतुज्ञानायत्तम् । इदं च तज्जातीयत्वज्ञानमिन्द्रियसन्निकर्षादिप्रमाणजन्यमित्यस्यां परम्परायां न कुत्रापि प्रामाण्यग्रहस्योपयोगः । न चोक्तेष्टसाधनताज्ञानादेर्निश्चयरूपत्वस्यावश्यकत्वात् प्रामाण्यग्रहाभावे च अर्थांशे निश्चयत्वायोगादस्त्येवोपयोग इति वाच्यम्—प्रामाण्यसन्देहादर्थसन्देहस्य क्वचिदङ्गीकारेऽपि प्रामाण्यनिश्चयस्यार्थनिश्चयहेतुत्वानङ्गीकारात् । तदभावेऽपि तस्यार्थांशे निश्चयरूपत्वात् । न चैवमप्रामाण्यग्रहकालेऽप्यर्थज्ञाने निश्चयत्वस्याक्षततया प्रवृत्त्यापत्तिरिति शङ्क्यम् —अप्रामाण्यज्ञानानास्कन्दितार्थनिश्चयस्यैव प्रवृत्तिहेतुत्वस्वीकारेणादोषात् । अथ बहुवित्तव्ययायाससाध्येषु वैदिकेषु व्यवहारेषु प्रामाण्यनिश्चयमन्तरा न निष्कम्पप्रवृत्तिर्दृश्यत इति प्रामाण्यग्रहविशिष्टार्थनिश्चयस्यैव प्रवृत्तिहेतुत्वम् । युक्तं चैतत्–अप्रामाण्यज्ञानानास्कन्दितार्थनिश्चयत्वेन कारणत्वे, तच्छरीरे तदभाववति तत्प्रकारकत्वरूपस्य तद्वति तत्प्रकारकत्वाभावरूपस्य चाप्रामाण्यस्य तथा अनास्कन्दितत्वस्य च निवेशापेक्षया प्रामाण्यग्रहास्कन्दितत्वनिवेशे लाघवादिति चेत्–अस्तु कामं प्रामाण्यग्रहस्योपयोगः । अथापि स ग्रहः स्वत एवेत्येतत् कुतः ? समर्थप्रवृत्तिजनकपूर्वज्ञानसजातीयत्वेन गुणजन्यत्वेन वा हेतुना प्रामाण्यानुमानसम्भवात् । ननु प्रचुरसमर्थप्रवृत्तौ प्रवृत्त्यंशे ज्ञानस्योपयोगः । अप्रमाजन्यप्रवृत्तावुत्सर्गतो वैफल्यदर्शनाच्च प्रवृत्तिगतसामर्थ्यांशे वस्तुसतः प्रमात्वस्योपयोगः । तत्प्राचुर्यांशे तु किं प्रयोजकम् ? न चाप्रामाण्यज्ञानानास्कन्दितत्वमेव कारणतावच्छेदकत्वाभिमतं तत्र प्रयोजकम् ; अनुत्कटप्रवृत्तावपि तस्य प्रयोजकत्वदर्शनादिति चेत्

[11] **स्यादेतत्—प्रामाण्यग्रहे सति सर्वमेतदुपपद्यते । स च स्वतो यदि न स्यात्, न स्यादेव ; परतःपक्षस्यानवस्थादुःस्थत्वादिति—चेत्— न—तदग्रहेऽप्यर्थसन्देहादपि सर्वस्योपपत्तेः । न चानवस्थापि ; प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमात् । अन्यथा स्वतःपक्षेऽपि सा स्यात् ॥**

---

किमतः ? तुल्यन्यायेन प्रामाण्यनिश्चयविशिष्टार्थनिश्चयत्वेन कारणत्वपक्षेऽपि प्रामाण्यनिश्चयस्य न प्राचुर्योपयोगित्वम् ; तत्सत्त्वेऽपि क्वचिदनुत्कटप्रवृत्तिदर्शनात् । स्वतस्त्वं तु तत्र नैवोपयुज्यते ; तथाऽन्वयव्यतिरेकादर्शनात् । ततः स्वतस्त्वस्य प्राचुर्यांशोपयोगे प्रमाणाभावात् अन्यस्याप्रामाण्यज्ञानानास्कन्दितत्वादेस्तत्रानुपयोगस्य च स्थितत्वात् समर्थप्रवृत्तिप्राचुर्यमप्रामाण्यज्ञानानास्कन्दितत्वनिवेशपक्षे प्रामाण्यप्राचुर्याधीनं वाच्यम् । प्रामाण्यनिश्चयविशिष्टत्वेन कारणत्वपक्षे च प्रामाण्यग्रहणप्राचुर्याधीनमपि भवितुमर्हति । प्रामाण्यप्राचुर्यं नाम तद्वति तत्प्रकारकत्वरूपप्रामाण्यघटकस्य तद्वत्तांशस्य सार्वकालिकत्वम्, अथ वा प्रवृत्तिजनकीभूतेष्टसाधनताज्ञाननिष्ठं यत् इष्टसाधनत्ववतीष्टसाधनत्वप्रकारकत्वरूपं प्रामाण्यं तद्घटकेच्छागतमौत्कट्यमेव । तथा च फलेच्छायामुत्कटायां प्रवृत्तिरुत्कटेति सिद्ध्यति । प्रामाण्यग्रहणप्राचुर्यं नामोत्कटो विश्वासविशेषः । अस्तु वा प्रथमपक्षेऽपि प्रचुरतरप्रवृत्तिमात्रे इच्छौत्कट्यस्य प्रामाण्यग्रहणप्राचुर्यस्य च सम्भूय हेतुत्वम् । सर्वथा स्वतस्त्वं नोपयुज्यते । न च झटित्ये तदुपयोगः, परतस्त्वेऽपि तत्सम्भवात् । यथा ह्यम्भो ग्राहकेण प्रत्यक्षेणातीन्द्रियाम्भोगतपिपासाशमनशक्त्यग्रहणेऽपि शमितपिपासाम्भस्सजातीयत्वलिङ्गानुभवप्रभवेण पिपासाशमनशक्त्यनुमानेनाम्भसि पिपासूनां झटित्येवाभ्यासबलाद्भवति प्रवृत्तिस्तथेहापीति ॥

[11] ननु स्वतस्त्वसिद्धिरुक्तविधप्रवृत्त्यन्यथानुपपत्त्या माभूत् । परिशेषात्तु भविष्यति । तथा हि— प्रामाण्यग्रहस्य प्रवृत्तावुपयोगस्य प्रागुक्ततया तदभावे प्रवृत्तितत्कार्यादिकं सर्वं नोपपद्येत । तत्र परत इति पक्षे द्वयी अनवस्था । ज्ञानगतप्रामाण्याग्रहे ज्ञानस्य कार्यक्षमत्वाभावात् अनुमानफलभूतः प्रामाण्यग्रहो योऽनुमितिरूपस्तद्गतप्रामाण्यमनुमित्यन्तरेण ग्राह्यम् ; एवं तद्गतमप्यनुमित्यन्तरेणेत्येका फलमुखी । अनुमापकज्ञानसन्तानमादाय चान्या कारणमुखीति । अतः परत इति पक्षस्य दुःस्थतया परिशेष इति चेत्–न प्रामाण्यग्रहस्य प्रवृत्त्युपयोगित्वमनवस्था च भवतः । तथा हि—न तावत्तस्यार्थनिश्चयहेतुतया प्रवृत्तिहेतुत्वम् ; तस्यार्थनिश्चायकत्वेऽपि तदभावेऽप्यर्थसन्देहमात्रेणापि प्रवृत्तितःसाफल्यदर्शनात् । प्रामाण्यग्रहं विनैवार्थग्रहस्य निश्चयरूपत्वं च प्रागेवावोचाम । एवं सन्देहादपि प्रवृत्तिदर्शनादेव न प्रामाण्यग्रहविशिष्टार्थनिश्चयत्वेनापि प्रवृत्तिहेतुत्वम् । न च निष्कम्पप्रवृत्तौ तेन रूपेण कारणता ; अप्रामाण्यज्ञानानास्क-

**[12] लिङ्गं निश्चितमेव निश्चायकम्। ततस्तन्निश्चयार्थमवश्यं लिङ्गान्तरापेक्षायामनवस्थेति चेत्—तत्किमनुपपद्यमानोऽर्थः अनिश्चित एव स्वोपपादकमाक्षिपति ; येनानवस्था**

न्दिततत्वेन रूपेणैव कारणत्वसम्भवात् । न च प्रामाण्यग्रहविशिष्टत्वपक्षे प्रागुक्तं लाघवमपि ; प्रामाण्यग्रहस्य संशयरूपत्वे निष्कम्पप्रवृत्त्यसम्भवेन प्रामाण्यनिश्चयविशिष्टत्वेनैव हेतुता वाच्येति अप्रामाण्याप्रकारकत्वविशिष्टप्रामाण्यप्रकारकज्ञानत्वरूपप्रामाण्यनिश्चयत्वस्य तत्र प्रवेशेन तत्राप्रामाण्यद्वैविध्येन च गौरवस्यैव दर्शनात् । न चोत्कटतरप्रवृत्तौ प्रामाण्यग्रहस्योपयोगः ; अप्रामाण्यज्ञानानास्कन्दिततत्वस्येच्छौत्कट्यस्य च सम्भूय प्रयोजकत्वोपपत्तेः । अथ यत्रार्थनिश्चयेऽप्रामाण्यशङ्का समापतति , तत्र तत्परिहाराय प्रामाण्यनिश्चयस्यैवापेक्षितत्वात् तस्मिन्ननुमित्यात्मके प्रामाण्यग्रहणमन्यथाऽनुमित्येति क्वचिदनवस्थापरमस्त्येवेति चेत्—न चानवस्थाऽपि ; प्रतिज्ञानं प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमात् । प्रामाण्यग्रहस्य विषयनिश्चयहेतुत्वाभावेन तदावश्यकत्वाभावात् । अर्थज्ञानेऽप्रामाण्यशङ्कापरिहाराय प्रामाण्यानुमित्यपेक्षायामपि तत्रानुमितावपि प्रामाण्यग्रहस्यानपेक्षितत्वात् । अन्यथा उपर्युपर्यप्रामाण्यशङ्कापरिहारकत्वेन वा विषयनिश्चायकत्वेन वा प्रामाण्यग्रहधाराभ्युपगमे स्वतस्त्वपक्षेऽप्यनवस्था स्यात् । तथा हि—ज्ञानस्य स्वयंप्रकाशतया स्वगतप्रामाण्यं स्वेनैव गृह्यत इति गुरवः । ज्ञानस्यातीन्द्रियतया ज्ञानजन्यज्ञाततानुभवे सति तदन्यथानुपपत्त्या ज्ञानमाक्षिप्यत इति तस्मिन्नाक्षेपे ज्ञानेन सह प्रामाण्यं गृह्यत इति भट्टाः । ज्ञानस्यानुव्यवसायात्मकमानसप्रत्यक्षवेद्यतया तेन सह तद्ग्रहणमिति मुरारिमिश्राः । तत्र प्रथमपक्षे ज्ञानोत्पादकसामग्र्येव ज्ञानग्राहकसामग्री । अन्यत्र पुनरन्यैव । अथापि यद्विशेष्यकं यत्प्रकारकं यद् ज्ञानं जायते, तद्विशेष्यकत्वतत्प्रकारकत्वाभ्यां तद् ज्ञानं यया सामग्र्या प्रथमतो गृह्यते , तया सामग्र्या तद्गतप्रामाण्यमपि गृह्यत इति त्रयाणां साधारणम् । तथा च तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं सर्वमपि स्वघटकविशेष्यप्रकारविशिष्ट-स्वाश्रयज्ञानविषयक(प्राथमिक)ज्ञानसामान्यविषयभूतमिति तन्मतम् । इदमेव च स्वतो ग्राह्यत्वम् । उक्तस्वतो ग्राह्यत्वाभाव एव प्राक् सांशयिकत्वहेतुना सिषाधयिषितः । अत्र च मतत्रयेऽप्यनवस्था—प्रामाण्यस्यावश्यज्ञेयत्वोपगमे गुरुमते एकेनैव ज्ञानेन घटांशे प्रामाण्यस्येव प्रामाण्यांशेऽपि प्रामाण्यस्य तत्प्रामाण्यान्तरेऽपि प्रामाण्यान्तरस्येत्येवमनन्तग्रहणाद्विषयनियमाभावादनवस्था । भट्टमते आक्षेपगृहीतप्रामाण्यांशे प्रामाण्यग्रहणार्थमाक्षेपान्तरमित्येवम् , मिश्रमते तदर्थमनुव्यवसायधारेति चानवस्था फलमुखी सर्वपक्षाविशिष्टेति ॥

12 या च कारणमुखी ; तत्रोच्यते—यदि न्यायपक्षे इयं प्रमा सफलप्रवृत्तिजनकत्वादित्यत्र योऽयं हेतुः , स हेतुत्वादेव न स्वरूपसन्ननुमापक इति तन्निश्चयोऽपेक्ष्यते । स च लिङ्गनिश्चयः

न स्यात् ॥ प्रत्यक्षेण तस्य निश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति चेत्—ममापि प्रत्यक्षेण लिङ्गनिश्चयात् तस्य च सत्तयैव निश्चायकत्वान्नैवमिति तुल्यम् ॥

[13] लिङ्गज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चय(लिङ्गनिर्णे)यस्स्यादिति चेत्–अनुपपद्यमानार्थज्ञानप्रामाण्यानिश्चये कथं तन्निश्चय इति तुल्यम् ॥ न हि निश्चयेन स्वप्रामाण्यनिश्चयेन वा विषयं निश्चाययति प्रत्यक्षम्; अपि तु स्वसत्तयेत्युक्तमिति चेत्—तुल्यम् ॥

[14] तथापि यदि तत् लिङ्गाभासः स्यात् , तदा का वार्तेति चेत्—अनुपपद्यमानोऽप्यर्थो यद्याभासः स्यात्, तदा का वार्तेति तुल्यम् ॥ सोऽपि प्रामाण्यमाक्षिपतीत्युत्सर्गः । स च क्वचिद्बाधकेनापोद्यत इति चेत्—लिङ्गेऽप्येवमिति तुल्यम् ॥ तर्हि प्रामाण्यानुमानेऽपि शङ्का तदवस्थैवेति निष्फलः प्रयास इति चेत्—एतदपि तादृगेव ॥

---

केनापि लिङ्गेनेत्युपर्युपरि लिङ्गनिश्चयापेक्षयाऽनवस्थेति ; तर्हि भट्टमतेऽपि घटादिनिष्ठज्ञाततया अन्यथानुपपत्त्या ज्ञानाक्षेपकत्वादनवस्था तुल्या । न हि ज्ञातता स्वरूपसती स्वोपपादकीभूतं ज्ञानमाक्षिपति ; अपि त्वन्यथानुपपद्यमानत्वेन ज्ञातैव । इदं चान्यथाऽनुपपद्यमानत्वेन ज्ञातताविषयकं ज्ञानमुपपत्तिपुरःसरमेव संपाद्यमिति । अथ प्रत्यक्षप्रमाणेन चक्षुरादिना ज्ञाततानिश्चयोत्पादात् चक्षुरादेश्च स्वरूपसत एव कारणत्वान्नानवस्थेति चेत्–ममापि चक्षुरादित एव लिङ्गनिश्चय इत्यादि तुल्यम् ॥

[13] ननु ज्ञानगतप्रामाण्यनिश्चयाभावे ज्ञानविषयनिश्चयो न भवतीत्यस्मन्मतम् । अतो लिङ्गज्ञानप्रामाण्यनिश्चयाभावे लिङ्गनिश्चयो न भवतीति तत्प्रामाण्यस्यानुमेयत्वे तदर्थं लिङ्गान्तरापेक्षायां तत्रापि तथेति प्रामाण्यनिश्चयापेक्षयाऽनवस्थेति चेत्—तर्ह्यनुपपद्यमानज्ञातताविषयकज्ञानस्यापि प्रामाण्यनिश्चयाभावे ज्ञाततानिश्चयानुदयात् ज्ञानानुमितिरेव न स्यादिति तदर्थं ज्ञातताज्ञानाक्षेपायाक्षेपकान्तरे गृहीते तद्ज्ञानेऽपि प्रामाण्यनिश्चयापेक्षेत्यनवस्थोपपादनं तुल्यम् । ननु प्रत्यक्षप्रमाणस्य ज्ञाततानिश्चयजनकत्वं स्वरूपसत एव भवति । तत्र स्वविषयकनिश्चयस्येव प्रामाण्यनिश्चयस्यापि नापेक्षेति चेत्–तर्हि चक्षुरादेर्लिङ्गनिश्चायकत्वेऽपि न प्रामाण्यग्रहापेक्षेति तुल्यम् ॥

[14] तथाऽप्यहेतोरपि क्वचिद्धेतुत्वेन भानदर्शनात् तत् प्रामाण्यानुमापकलिङ्गं कदाचिल्लिङ्गाभासः स्यादिति लिङ्गज्ञाने प्रामाण्यनिश्चय आवश्यक इति चेत्–अन्यथोपपद्यमानस्यापि कदाचिदर्थोपपत्तितया भानादर्थापत्तिज्ञानेऽपि प्रामाण्यनिश्चयापेक्षा तुल्या । अथाभासोऽप्यर्थापत्तिर्ज्ञानप्रामाण्यमनाभासवदुत्सर्गत आक्षिपति । परं तु स उत्सर्गः क्वचिद्बाधकबलादपोद्यत इति चेत्––लिङ्गाभासेऽपि तुल्यम् । तर्ह्याभासस्याप्यनुमापकत्वे अनुमितेऽपि प्रामाण्ये आभासत्व-

**अनुपपद्यमानोऽर्थ एवासौ तथाविधः कश्चित् यः स्वप्नेऽपि नाभासः स्यात्। ततो नाऽऽशङ्केति चेत्—लिङ्गेऽप्येवमिति समः समाधिः ॥**

[15] **कः पुनरसावर्थः, यः स्वप्नेऽपि नाभासः स्यात्? यदनुपलम्भे विभ्रमावकाशः, १ यादृगुपलम्भे च तद्बाधव्यवस्था । अन्यथा हि तथाभूतस्यापि व्यभिचारे साऽपि**

शङ्कयाऽप्रामाण्यशङ्का नापैतीति किमनेनानुमानप्रामाण्यानुमानेनेति चेत्–इदमर्थापत्त्याभासेऽपि तुल्यमेव । नन्वनाभासत्वप्रसक्तिलेशरहितो विलक्षणोऽयमनुपपद्यमानार्थ इति कथमप्रामाण्यशङ्केति चेत–लिङ्गमपि तथाविधमिति तुल्यमुत्तरम् ।

[15] अयि भो नैयायिकमीमांसकौ! इदमहं वां पृच्छामि—कः पुनरसावर्थः; य आभासत्वप्रसक्तिरहितः स्वप्नेऽपि नाभासः स्यादिति ॥ शृणु तावत् । यस्य शुक्तित्वादिविशेषविशिष्टस्यानुपलम्भे रजतादिभ्रमप्रसक्तिः; यस्य तु विशिष्टस्योपलम्भे तस्य भ्रमस्य बाधनियमः, स एवार्थोऽनाभासः । अन्यथा विशिष्टतयोपलब्धस्यापि भ्रमविषयत्वाङ्गीकारे बाधव्यवस्थाऽपि न स्यात् । मा भूद्व्यवस्थेति चेन्न–तत्त्वातत्त्वविभागस्यावश्यकत्वात् । बाधव्यवस्थानङ्गीकारे च बाधकज्ञानविषयस्तत्त्वम्; बाध्यज्ञानविषयोऽतत्त्वमिति विभाग एव न स्यात् । तस्याप्यस्वीकारे व्याघातः त्वदीयाक्षेपादिव्यवहारस्यापि तत्त्वव्यवस्थापकत्वाभावो लोकमर्यादाविप्लवश्च । किं च विशिष्टग्रहणे सत्यपि भ्रमो भवतीत्येतदेवानुपपन्नम् । कथं हि इदमिदमेव; न तु तदित्येवं व्यवस्थापकानिखिलविशेषोपलम्भेऽपि भ्रमप्रसक्तिः? तथा हि– त्वदुक्तभ्रमस्य बाधकमस्ति न वा। नाद्यः; असाधारणधर्मात्मकसकलविशेषोपलम्भस्य प्रागेव जाततया विशेषान्तरस्योपलभ्यस्याभावेन तदसम्भवात् । नान्त्यः; बाधकाभावेऽबाध्यस्य तस्य भ्रमत्वमेव कथमिति । तस्मात् यदुपलम्भे भ्रमबाधव्यवस्था, सोऽनाभास इति ।

[तस्मात् फलमुख्याः कारणमुख्याश्चानवस्थाया उभयपक्षाविशिष्टत्वात् प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगम एव सर्वेषां शरणम् । अतोऽर्थनिश्चये सति स्वयमेव प्रवृत्तिः । अन्य-

१ अत्र, 'यस्य तदितरव्यावर्तकधर्मविशिष्टस्य वस्तुनोऽनुपलम्भे भ्रान्तिर्भवति; यादृशस्योपलम्भे चासौ न भवति, सोऽर्थः स्वप्नेऽपि नाभासः स्यादिति । अनाभासस्योपलक्षणान्तरमाह बाधकेति । तदितरव्यावर्तकधर्मानुपलम्भोपलम्भाभ्यां हि ज्ञानयोर्बाध्यबाधकव्यवस्थेति । यद्वा यादृशस्योपलम्भे बाधकं व्यवतिष्ठते, नातः परं भवति, सोऽप्यर्थः' इति बोधनीदर्शनात्, '**यदनुपलम्भे विभ्रमावकाशो यादृगुपलम्भे च न; बाधकव्यवस्था च**' इति पाठ उन्नीयते । बाधकेति वाक्ये **यदनुपलम्भे यादृगुपलम्भे** इत्युभयोरनुषङ्गाभिप्रायेण प्रथमव्याख्या द्वितीयपदमात्रानुषङ्गेण द्वितीयव्याख्या । उपरि निवेशितः पाठः प्रकाशानुसारी ।

**न स्यात् ॥ माभूदिति चेन्न—भवितव्यं हि तत्त्वातत्त्वविभागेन (तत्त्वातत्त्वव्यवस्थया) अन्यथा व्याघातात् । कथं हि नियामकनिःशेषविशेषोपलम्भेऽपि विपरीतारोपः ? तथाभावे वा तदतिरिक्तविशेषानुपलम्भे कथं बाधकम् ? तदभावे त्वबाधस्य कथं भ्रान्तत्वमिति ॥**

---

व्यासङ्गादिना तादृशानिश्चयरूपधर्मिज्ञानाभावाच्चाप्रामाण्यशङ्काऽपि न । यदि कचिद्धर्मिज्ञानादिपूर्विका शङ्का, तत्र परतः प्रामाण्यनिश्चयः । लिङ्गज्ञानस्य च जातत्वेऽपि ज्ञातत्वाभावान्न तद्विषयेऽप्रामाण्यशङ्का । तत्रापि धर्मिज्ञानादिपूर्वकं कदाचिदाशङ्कायां तु तत्रापि परत एव प्रामाण्यं निश्चेयम् । एवं यावदाशङ्कं प्रामाण्यानुमितिप्रसक्तावपि नानवस्थाप्रसङ्ग इति परिशेषाभावात् पूर्वोक्तसांशयिकत्वयुक्तेश्च प्रामाण्यं न स्वतो गृह्यते । किन्तु सफलप्रवृत्तिकरत्वेन वा तादृशज्ञानजातीयत्वेन वा गुणजन्यत्वेन वाऽनुमीयत एवेति ॥

**अत्रेदं बोध्यम्**—अयं घट इति ज्ञाने घटे घटत्वं भासते । घटो विशेष्यः, घटत्वं प्रकारः । घटमहं जानामीति ज्ञानग्रहणे च घटविशेष्यकत्वं घटत्वप्रकारकत्वं च विषयीभवति । घटविशेष्यकत्वविशिष्टघटत्वप्रकारकत्वमेव च प्रामाण्यम् । तत् विशेष्यज्ञानग्रहणे कथं न गृह्यत इति स्वत एव गृह्यते । किं च प्रामाण्यं चेत् प्रामाण्यैकविधेयकानुमानगम्यम्—तर्ह्यनुमितेः प्राक् साध्यप्रसिद्ध्यभावेन व्याप्तिग्रहादनुमानमेव न स्यात् । अतोऽप्यगत्या स्वतोग्राह्यत्वमिति **मीमांसकाः** । **अत्रोच्यते**-अयं घट इति ज्ञानानन्तरं ज्ञानविषयकं हि ज्ञानं जायमानं, 'इमं घटं जानामि' 'इमं घटत्वेन जानामी'त्याकारकम् ; न तु घटं घटत्वेन जानामीति । प्रामाण्यं च न केवलं धर्मिविशेष्यकत्वविशिष्टघटत्वप्रकारकत्वम् ; तस्य प्रमाभ्रमोभयनिष्ठत्वात् । किन्तु घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वम् । इदं च नानुव्यवसायादिज्ञाने भासते ; तत्र घटत्वविशिष्टनिष्ठतया विशेष्यताया अग्रहणात् । पूर्वज्ञाने घटत्वस्य केवलं प्रकारत्वात् घटत्वविशिष्टत्वेन घटस्य विशेष्यत्वाभावादनुव्यवसायेन तथा ग्रहणासम्भवात् । अतो न प्रामाण्यं स्वतो गृहीतमस्ति ॥ यत्त्वनुमानासम्भव इति—तत्र **सांप्रदायिकाः**—तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं जन्मान्तरानुभूतं स्मर्यते । अतो व्याप्तिग्रहणे सति 'अयं घट इतीदं ज्ञानं तद्वति तत्प्रकारक'मित्यनुमितौ तच्छब्दस्य सर्वनाम्नः प्रकृतपरत्वात् घटे घटत्वप्रकारकत्वग्रहणमिति । **मणिकृतस्तु** न प्रामाण्यं साध्यते । किन्तु तदभाववति तत्प्रकारकत्वरूपाप्रामाण्याभाव एव । पक्षधर्मताबलाच्चानुमितौ प्रामाण्यविषयीकार इत्याहुः । **वस्तुतस्तु**—घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपं हि प्रामाण्यम् । तत्र घटत्वप्रकारकत्वस्य तत्र धर्मिविशेष्यकत्वावच्छिन्नत्वस्य चानुव्यवसायादिना ज्ञानेन सह ग्रहणात् । तद्विषये तावन्न संशयः । तस्मात्प्रामाण्यघटक-

[16] **स्यादेतत्—परतःप्रामाण्येऽपि नित्यत्वाद्वेदानामनपेक्षत्वम्; महाजनपरिग्रहाच्च प्रामाण्यमिति को विरोधः? न; उभयस्याप्यसिद्धेः॥**

[17] **न हि वर्णा एव तावन्नित्याः। तथा हि— 'इदानीं श्रुतपूर्वो गकारो नास्ति' (स्तीति) 'निवृत्तः कोलाहल' इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते। न हि शब्द एवान्यत्र गतः; अमूर्तत्वात्। नाप्यावृतः; तत एव सम्बन्धविच्छेदानुपपत्तेः। नाप्यनवहितः श्रोता; अवधानेऽप्यनुपलब्धेः। नापीन्द्रियं दुष्टम्; शब्दान्तरोपलब्धेः। नापि सह-कार्यन्तराभावः; अन्वयव्यतिरेकवतः(कृतः) तस्यासिद्धेः। १ नाप्यतीन्द्रियम्; तत्कल्प-**

विशेष्यतायां घटत्वसामानाधिकरण्यांशे प्रामाण्यसंशयपर्यवसानम्। एवं चैतद्ज्ञानीयघटत्वप्रकारतानिरूपितविशेष्यता घटत्वसमानाधिकरणा, यद्वा एतद्ज्ञानीयं घटत्वप्रकारकत्वं घटत्ववद्विशेष्यकत्वावच्छिन्नं सफलप्रवृत्तिजनकज्ञानीयत्वादित्येवमनुमानेन घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रामाण्यं प्रथमतोऽवसीयते। अथ च व्याप्तिग्रहादिदं ज्ञानं प्रमेति पश्चादन्यत्रानुमितिर्निष्प्रत्यूहा। घटत्ववद्विशेष्यकत्वावच्छिन्नत्वादिकं च घटो नील इति ज्ञानीयनैल्यप्रकारकत्वादौ प्रसिद्धमिति। तस्मात् स्वत ईदृशप्रामाण्यग्रहे सामग्र्यभावात् परतःप्रामाण्यपक्षेऽनुपपत्त्यभावात् अन्यथा सांशयिकत्वानिर्वाहाच्च न्यायमतं साधीय इति॥]

[16] नन्वस्त्वेवमुत्पत्तितो ज्ञप्तितश्च प्रमायाः परतन्त्रत्वम्। अथापि नेष्टसिद्धिः; प्रामाण्यस्य पौरुषेयवाक्ये दोषसम्भावनया गुणापेक्षत्वेऽपि वेदजन्यप्रमायां तदनपेक्षत्वात्। वेदस्य नित्यत्वात्। प्रामाण्यज्ञप्तः पुनः सर्वत्रानुमानाधीनत्वेऽपि नाप्तोक्तत्वरूपहेत्वधीनत्वनियमः; महाजनपरिगृहीतवाक्यजन्यत्वेनैव तदनुमितिसंभवात्। अतो नेश्वरसिद्धिरिति चेत्—न— वेदनित्यत्वस्य सार्वकालिकमहाजनपरिग्रहस्य चासिद्धेरत्रापि प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च वक्तृगुणापेक्षाया अक्षतत्वात्।

[17] तथा हि—न तावत् वेदनित्यत्वम्; वर्णनित्यत्वे सिद्धेऽपि लौकिकवचस इव वेदस्याप्यनित्यत्वं वक्ष्यमाणं दुष्परिहरम्। वस्तुतो वर्णा अपि न नित्याः; 'पूर्वं श्रुतो गकार इदानीं नास्ति', 'निवृत्तः कोलाहल' इत्येवं ध्वंसप्रतियोगित्वेन प्रत्यक्ष्यमाणत्वात्। कोलाहलोऽपि हि जनतायामन्योन्याभिभवेनास्पष्टो वर्णस्तोम एव। न चेदं प्रत्यक्षमुपलब्धचरस्यानुपलम्भमात्रेण भ्रान्तिकल्पितमिति वाच्यम्—ध्वंसानङ्गीकारे उपलब्धस्य शब्दस्यानुपलम्भे हेतोर्दुर्वचत्वात्।

१ अत्र क्लीबनिर्देशात्, गत इत्यादाविव पुंलिङ्गाभावात्, पूर्वमुपलब्धस्य शब्दस्य सार्वकालिकातीन्द्रियत्वस्य दुर्वचत्वाच्च प्रकृतसहकार्यन्तरविषयमिदम्; न तु शब्दविषयम्। तथैव च व्याख्यातम्।

**नायां प्रमाणाभावात् । अन्यथा घटादावपि तत्कल्पनाप्रसङ्गात् । न च शब्द(स्य) नित्यत्वसिद्धौ तत्कल्पनेति युक्तम्; निराकरिष्यमाणत्वात् ॥**

**[18] यत्त्वेकदेशिनो नैवमिच्छन्ति तान् प्रत्युच्यते—विवादाध्यासितः शब्दप्रध्वंस इन्द्रियग्राह्यः ऐन्द्रियिकाभावत्वात् घटाभाववत् ॥ नैतदेवम्; इन्द्रियासन्निकृष्टत्वादतीन्द्रियाधारत्वाद्वेति चेन्न—इदं ह्युपाध्युद्भावनं वा स्यात्, व्यापकानुपलब्ध्या सत्प्रति-**

---

किमस्योपलब्धस्यानुपलम्भः तस्य देशान्तरसम्बन्धात्, उतेन्द्रियसन्निकर्षभङ्गरूपादावृतत्वात्, अथ वा श्रोतुरनवधानात्, आहोस्विदिन्द्रियस्य दुष्टत्वात्, यद्वा उपलम्भ सहकारिविरहात् । न प्रथमः; शब्दस्याक्रियत्वात् । न द्वितीयः; भङ्गहेत्वभावात् । न तृतीयः; कृतेऽप्यवधाने शब्दस्यानुपलम्भात् । न तुरीयः; शब्दान्तरोपलब्धिबलाददुष्टत्वस्यावश्यकत्वात् । न पञ्चमः; क्लृप्तसहकारिसद्भावात्; अन्वयव्यतिरेकाभावेनान्यस्य सहकारिणः संप्रति कल्पनाऽयोगात् । नापि तत् सहकार्यन्तरमतीन्द्रियमन्वयव्यतिरेकवत्तया न दृश्यत इति वाच्यम्—तथा कल्पकाभावात् । निष्कारणकल्पनायां तु घटादेरपि अनुपलम्भकालेऽतीन्द्रियसहकारिकल्पनयाऽनुपलब्धिर्वाच्या स्यात् । न च नित्यत्वस्य प्रमाणसिद्धत्वादेवमत्र कल्पनम्, न तु घटादाविति वाच्यम्—नित्यत्वप्रमाणस्य निराकरिष्यमाणत्वात् । तस्मादुपलब्धशब्दानुपलम्भस्यान्यथा निर्वाहासम्भवात् । उक्तध्वंसप्रत्यक्षस्याबाधितत्वादनित्या एव वर्णा इति ॥

[18] ये पुनर्नैयायिका एव केचिद्वर्णध्वंसमुपयन्तोऽपि तस्य प्रत्यक्षत्वं नेच्छन्ति, तान् प्रति प्रत्यक्षत्वेऽनुमानमुच्यते—विवादविषयः शब्दध्वंस इन्द्रियग्राह्यः ऐन्द्रियिकप्रतियोगिकाभावत्वात् घटाभाववदिति । अत्र ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् यः शब्दः श्रोत्रेण न गृहीतस्तद्व्यक्तिध्वंसस्यायोग्यतद्व्यक्तित्वरूपप्रतियोगितावच्छेदककस्य प्रत्यक्षस्वरूपयोग्यत्वं न स्वीक्रियत इति बाध-भागासिद्धिपरिहाराय तस्य पक्षत्वव्यावृत्तये विवादविषय इति विशेषणम् ॥ ननु नैतदुक्तहेतुसाध्यं, शब्दध्वंसस्येन्द्रियसन्निकर्षशून्यत्वादैन्द्रियिकपदार्थानाधारकत्वाच्चेति चेन्न—किमत्रेन्द्रियसन्निकर्ष-ऐन्द्रियिकाधारकत्वयोः पक्षेऽभाववर्णनेन तयोः साधनाव्यापकत्वसूचनेनोपाधित्वमभिमतम्, किं वा तयोः साध्यव्यापकत्वविवक्षया व्यापकाभावरूपप्रतिपक्षहेतुवर्णनेन पक्षे साध्याभावसाधनं चिकीर्षितम्? न तावत् प्रथम उपाधित्वपक्षः; तत्राऽऽद्यस्येन्द्रियसन्निकर्षस्य प्रत्यक्षकारणकलापान्तर्गतत्वेन विषयं प्रति सहकारितया सहकारियोग्यताशब्दितस्येन्द्रियग्रहणस्वरूपयोग्यतारूपसाध्यं प्रत्युपाधित्वासम्भवात् । स्वरूपयोग्यता हि कार्योपधानाय सहकारिकारणमपेक्षमाणा सहकारिसमवधानकालेऽसमवधानकाले च सर्वदा नियमेन स्वयमस्ति । अतः कादाचित्कसहकारिणो न सार्वकालिकस्वरूपयोग्यताव्यापकत्वमिति न स उपाधिः । नाप्यै-

**पक्षत्वं वा । न प्रथमः ; स्वरूपयोग्यतां प्रति (ग्यतायां) सहकारियोग्यताया अनुपाधित्वात् । १ तस्यास्तामपेक्ष्यैव सर्वदा व्यवस्थितेः ॥ नाप्यैन्द्रियिकाधारत्वप्रयुक्तमभावस्य प्रत्यक्षत्वम् ; धर्माद्यभावस्यापि तथात्वप्रसङ्गात् ॥ अत एव नोभयप्रयुक्तम् ॥**

**[19] नापि द्वितीयः ; प्रथमस्यासिद्धेः । अस्ति हि श्रोत्रशब्दाभावयोः स्वाभाविको विशेषणविशेष्यभावः ॥ विशेष्यस्यातीन्द्रियत्वात्कथमैन्द्रियिकविशिष्टज्ञानविषयत्वम् ? तथा विशेष्यमव्यवस्थापयतश्च कथं विशेषणत्वमिति चेत्—न ; तथा विशेष्यव्यवस्था-**

न्द्रियिकाधारकत्वमुपाधिः । उपाधिर्हि साध्यं प्रति स्वयंप्रयोजकीभवन् हेतोरप्रयोजकत्वं कल्पयति । न च प्रत्यक्षत्वरूपसाध्ये ऐन्द्रियिकवृत्तित्वं प्रयोजकम् ; आत्म-शब्दद्व्यणुकादीनामतथाभूतानामपि प्रत्यक्षत्वात् । नाप्यभावत्वरूपपक्षधर्मावच्छिन्नगतप्रत्यक्षत्वं तत्प्रयुक्तम्—तथा सत्यतीन्द्रियधर्माधर्मप्रतियोगिकाभावस्यापि मानसग्राह्यात्मवृत्तित्वेन प्रत्यक्षत्वापत्तेः । **अत एव** धर्माद्यभावप्रत्यक्षतापत्तेः उक्तस्येन्द्रियसन्निकर्ष ऐन्द्रियकत्वाधारत्वोभयस्य सम्भूयापि नोपाधित्वम् । धर्माभावे मनस्संयुक्तविशेषणतारूपसन्निकर्षस्याप्यक्षतत्वात् ।

[19] नापि द्वितीयः सत्प्रतिपक्षत्वपक्षः, तत्र प्रथमस्येन्द्रियसन्निकर्षाभावरूपप्रतिपक्षस्यासिद्धेः ; श्रोत्रस्याकाशरूपतया तस्य शब्दाभावस्य च विशेष्यविशेषणभावरूपसहजस्वरूपसम्बन्धवत्त्वात् । ननु न शब्दाभावे विशेषणत्वं सन्निकर्षः ; आकाशस्यातीन्द्रियतया 'आकाशः शब्दाभाववा' निति विशिष्टज्ञानाभावेन तद्विषयत्वरूपविशेष्यत्वाभावात् ; विशेष्यमाकाशं विशिष्टज्ञानविषयत्वेनास्थापयतोऽव्यावर्तयतः शब्दाभावस्य प्रकारत्वासंभवाच्चेति चेन्न—विशेष्यव्यवस्थापना हि विशेष्यस्येतरव्यावृत्तिग्रहोपयोगि-विशेष्यनिरूपितप्रकारतारूपा प्रस्तुतविशेषणतारूयसन्निकर्षजन्यज्ञानीयतया विशेषणताप्रयोज्या , न तु विशेषणत्वाभिन्ना । समवायाभावयोर्ग्रहणे हि विशेषणता सन्निकर्षः । ग्रहणं च विषयतैव । विशेषणतायाः विषयतारूपत्वे चात्माश्रय इति । तस्मात्सन्निकर्षरूपं विशेषणत्वं न प्रकारता , किं तु स्वरूपातिरिक्तं वैशिष्ट्यादिसम्बन्धान्तरं विना समवायाभावयोः स्वभावतोऽधिकरणोपश्लिष्टस्वरूपकत्वमेव । तथा च यथा समवायस्य घटे सम्बन्धस्स्वरूपमेव, नातिरिक्तः ; अन्यथा सम्बन्धान्तरस्वीकारे तस्याप्यन्यः सम्बन्ध इत्यनवस्था-

१ प्र. "**तस्याः** प्रत्यक्षतायाः **तां** इन्द्रियसन्निकर्षरूपसहकारियोग्यतामित्यर्थः । तथा च पक्षवृत्तित्वेन साधनव्यापकत्वान्नोपाधिरिति भावः । यद्वा स्वरूपयोग्यतारूपं साध्यं प्रति सहकारियोग्यता नोपाधिः , साध्याव्यापकत्वादित्यर्थ इति । मकरन्दे , '**स्वरूपयोग्यतापदस्य** फलोपधानपरत्वे अपदार्थव्याख्यानमित्यनुशयवानाह **यद्वेति** । एवं चात्र कल्पे .... ....**सर्वदा अव्यवस्थिते**रित्यकारप्रश्लेषेण मूलफक्किका योज्या । तेन साध्याव्यापकत्वं निर्वहति" इति ।

पनायाः फलत्वात् । न तु तदेव विशेषणत्वम् ; आत्माश्रयप्रसङ्गात्—विशेषणभावेन समवायाभावयोर्ग्रहणं, तथा ग्रहणमेव च विशेषणत्वमिति । तस्मात् सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वमेव हि तयोः । सैव च विशिष्टप्रत्ययजननयोग्यता विशेषणतेत्युच्यते । सा चात्र दुर्निवारा । प्रतियोग्यधिकरणेन स्वभावत एवाभावस्य मिलितत्वात् ॥

[20] तथाऽपि तया तथैव प्रतीतिः कर्तव्येति चेन्न—गृह्यमाणविशेष्यत्वाव(च्याव)च्छिन्नत्वाद्व्याप्तेः । अन्यथा संयुक्तसमवायेन रूपादौ विशिष्टविकल्पधीजननदर्शनात् गन्धादावपि तथात्वप्रसङ्गात् ॥

[21]तथाऽपि नेन्द्रियविशेषणतया कस्यचित् ग्रहणं दृष्टम् ; अपि त्विन्द्रियसम्बद्धविशेषणतया ; सा चातो निवर्तेत इति चेन्न–अस्य प्रतिबन्धस्येन्द्रियसन्निकृष्टार्थप्रतिसम्बन्धि-

---

प्रसङ्गात् , तथा—अभावस्यापि स्वरूपमेव सम्बन्ध इति । तस्मिंश्च स्वरूपसम्बन्धे विशेषणताव्यवहारो विना सम्बन्धान्तरं विशिष्टप्रत्ययजननयोग्यतारूपत्वात् । सेयं विशेषणता शब्दध्वंसेऽप्यस्ति , ध्वंसस्य स्वप्रतियोगिदेशवर्तित्वस्वाभाव्यात् ॥

[20] नन्वेवं विशेषणतायाः स्वरूपसम्बन्धपर्यायत्वेऽपि विशिष्टप्रत्ययजननयोग्यतारूपया तया आकाशः शब्दाभाववानिति विशिष्टप्रतीतिरुत्पाद्येति चेन्न—इन्द्रियग्राह्यविशेष्यकप्रत्यक्षं प्रत्येवेन्द्रियसन्निकर्षस्य कारणतया प्रत्यक्षरूपकार्यनियतकारणनिरूपितव्याप्यतायाः प्रत्यक्षनिष्ठायाः इन्द्रियग्राह्यविशेष्यकत्वावच्छिन्नत्वात् भूतलादाविन्द्रियग्रहणयोग्यतारूपकारणसत्वेन प्रत्यक्षविशेष्यतासम्भवात् आकाशादौ चासम्भवात्तथा प्रतीत्यनुपपत्तेः । तस्य व्याप्यतावच्छेदकत्वानङ्गीकारे चक्षुस्संयुक्तसमवायरूपसन्निकर्षस्य रूपादिप्रकारकद्रव्यविशेष्यकसविकल्पकबुद्धिजनकत्वदर्शनात् घ्राणसंयुक्तसमवायस्यापि गन्धप्रकारकद्रव्यविशेष्यकप्रत्यक्षजनकत्वप्रसङ्गात् । तथा चक्षुस्संयुक्तसमवायेन पुष्पगतरूपादिविषय इव गन्धादिविषयेऽपि 'अत्र गन्ध' इत्येवं प्रत्यक्षजननप्रसङ्गाच्च । अतस्तत्र तत्रेवायोग्यत्वादाकाशो न विशेष्यम् ॥

[21] नन्वेवं विशिष्टप्रतीतिपरिहारसम्भवेऽपि न शब्दध्वंसप्रत्यक्षसम्भवः ; संयुक्तविशेषणता संयुक्तसमवेतविशेषणतादिरूपेन्द्रियसम्बद्धविशेषणताया एव समवायाभावप्रत्यक्षजनकत्वक्लृप्तेरिति चेन्न—अस्य व्याप्त्यपरनाम्नः प्रतिबन्धस्येन्द्रियसम्बद्धवस्तुगताभावादिविषयकत्वात् तादृशाभावप्रत्यक्षे तथाविधसन्निकर्षस्यापेक्षितत्वेऽपि साक्षादिन्द्रियवृत्तिप्रतियोगिकाभावप्रत्यक्षे केवलविशेषणतायाः कारणत्वसम्भवात् । अन्यथाऽभावविषये परम्परासम्बन्धस्यैव सन्निकर्षत्वे गुणेऽपि गन्धादौ संयुक्तसमवायादेरेव सन्निकर्षत्वदर्शनात् शब्दरूपगुणेऽपि समवायो न सन्निकर्षः स्यात् । तस्मा-

विषयत्वात् । अन्यथा संयुक्तसमवायेन गन्धादावुपलब्धिदर्शनात् समवायेनादर्शनात्‌ छब्दस्याग्रहणप्रसङ्गात् ॥

[22] नाप्यभावत्वे सति अतीन्द्रियाधारत्वात्सत्प्रतिपक्षत्वम्; योग्यताविरहप्रयुक्तत्वा-द्व्याप्तेः । न चातीन्द्रियाधारत्वमेव तस्य योग्यताविरहः; तद्विपर्ययस्यैव योग्यता-त्वापत्तेः । न चैवमेव ; धर्मादिध्वंसग्रहणप्रसङ्गात् ॥ दृश्याधारत्वं दृश्यप्रतियोगिता चेति द्वयमप्यस्य योग्यतेति चेन्न—उभयनिरूपणीयत्वनियमानभ्युपगमात् । प्रतियो-गिमात्रनिरूपणीयो ह्यभावः ॥

[23] अन्यथा 'इह भूतले घटो नास्ती'त्येषाऽपि प्रतीतिः प्रत्यक्षा न स्यात् । संयोगो ह्यत्र निषिध्यते । तदभावश्च भूतलवद् घटेऽपि वर्तते । तत्र यदि प्रत्यक्षतया भूतल-स्योपयोगः, घटस्यापि तथैव स्यात् । अविशेषात् । अथ घटस्यान्यथोपयोगः ; भूतल-

---

च्छब्द इव तद्ध्वंसेऽपि सन्निकर्षसद्भावात् प्रथमो हेतुरसिद्ध इति । अत्रेन्द्रियसन्निकर्षस्योपा-धित्वपक्षे साध्याव्यापकत्वकथनात्सत्प्रतिपक्षपक्षे तदभावस्याव्याप्यत्वमर्थसिद्धम् । सत्प्रतिपक्षपक्षे अस्यासिद्धिकथनात् उपाधित्वपक्षे सन्निकर्षस्य पक्षे साधनाव्यापकत्वभङ्गोऽर्थसिद्ध इति ॥

[22] एवमतीन्द्रियाधारत्वमपि न प्रतिपक्षहेतुः ; गगनाधारकस्य द्रव्यत्वादेः पृथिव्यादौ ग्राह्य-त्वेन व्यभिचारात् । न चैन्द्रियिकाधारकत्वाभावपर्यवसितमतीन्द्रियाधारत्वं हेतुः ; शब्दवायवीय-स्पर्शादौ व्यभिचारात् । अभावत्वे सतीति विशेषणान्न दोष इति चेत्—एवमपि तत्र योग्य-ताविरहस्योपाधित्वात् प्रकृतहेतौ प्रकृतसाध्यव्याप्तेस्तत्प्रयुक्तत्वात् व्याप्तिरियमारोपिता, न तु वस्तु-तोऽस्तीति । न चैन्द्रियिकाधारकत्वाभाव एव योग्यताविरह इति हेतूपाध्योरैक्यमिति शङ्क्यम्— तर्ह्यैन्द्रियिकाधारत्वाभावाभावस्य योग्यतात्वापत्तेः । तथा चात्मनि धर्मध्वंसादेरिन्द्रियग्राह्यत्व-प्रसङ्गः । ननु दृश्यप्रतियोगिकत्वविशिष्टदृश्याधारकत्वमभावप्रत्यक्षयोग्यता ; न तु केवलम् । अतो न तत्प्रसङ्गः । नाप्युक्तरूपयोग्यताविरहस्य प्रतिपक्षहेतावुपाधित्वम् ; साधनाव्यापकत्वादि-ति चेन्न-आधारप्रतियोग्युभयनिरूप्यत्वनियमस्याभावेऽनभ्युपगमात् तस्य प्रतियोगिमात्रज्ञप्त्यधीन-ज्ञप्तिकत्वादाधारदृश्यत्वस्यानपेक्षितत्वेन विशिष्टस्य योग्यतात्वायोगात् ।

[23] अन्यथाऽभावप्रत्यक्षपूर्वक्षणेऽधिकरणप्रत्यक्षस्याप्यावश्यकत्वे 'इह भूतले घटो नास्ती'ति प्रतीतेः प्रत्यक्षता न स्यात् । अत्र हि घटस्य ध्वंसः प्रागभावो वा न विषयः ; तयोः स्वप्रति-योगिसमवायिदेशस्थत्वात् । नाप्यत्यन्ताभावः ; कदाचिदिह घटसत्त्वेन तस्य त्रैकालिकाभा-वस्य तत्रायोगात् । अतः नास्ति घटो गेह इति घटं गेहसंसर्गप्रतिषेधः (वै. द. ९.) इति सूत्रानुसारेण संयोगध्वंसादिरत्र विषयः । स च प्रतियोगिनः संयोगस्य द्विष्ठतया घटभूतलो-

व्याप्यन्यथैव स्यात्, अविशेषात्॥ कथमन्यथेति चेत्—प्रतियोगिनिरूपणार्थमभाव-सन्निकर्षार्थं च। तत्र प्रतियोगिनिरूपणं स्मरणलक्षणमनुपलभ्यमानेनापीति, न तदर्थमध्यक्षगोचरत्वमपेक्षणीयमन्यतरस्यापि; कुत उभयस्य। सन्निकर्षस्तु भूतलघटसंयोगाभावस्येन्द्रियेण साक्षान्नास्ति। येनास्ति, तेनापि यदीन्द्रियं न सन्निकृष्येत, कथमिव तं गमयेत्॥ न चोपलब्धोपलभ्यमानाभ्यामेवेन्द्रियं सन्निकृष्यते; इतरेतराश्रयप्रसङ्गात्॥

[24] तस्मात् सन्निकर्षे सति योग्यत्वात् भूतलमप्युपलभ्यते; न तु तस्योपलभ्यमानत्वमभावोपलब्धेरङ्गमिति युक्तमुत्पश्यामः॥ प्रकृते तु न प्रतियोगिनिरूपणार्थं तदुपयोगः

---

भयगत इति भूतलवदधिकरणत्वाविशेषात् घटस्यापि प्रत्यक्षविषयतयैव प्रकृतप्रतीतिकारणत्वापत्तिः। न चेष्टापत्तिः, घटसंयोगाभावप्रत्यक्षकाले घटप्रत्यक्षायोगात्। हस्तेन घटधारणावसर इव तदप्रत्यक्षावसरेऽपि भूतले घटाभावधियः प्रत्यक्षत्वस्येष्टत्वाच्च। अथ प्रतियोगिस्मरणं विनाऽभावप्रत्यक्षासम्भवात् घटसंयोगरूपप्रतियोगिस्मरणे घटस्योपयोग इति न तत्प्रत्यक्षमिति चेत्—भूतलस्याप्यन्यथैवोपयोगः। ननु कथमन्यथोपयोगः। भूतले घटो नास्तीत्यधिकरणतयैव तस्य ग्रहणात् प्रतियोगिस्मरणे उपयोगासम्भवादिति चेत्—अत्र भूतलानुयोगिकत्व-घटप्रतियोगिकत्व-विशिष्टसंयोगस्यैव निषिध्यमानतया विशिष्टप्रतियोगिज्ञापनार्थमस्योपयोगः। एवं भूतलस्य प्रतियोगिकोटिप्रवेशानङ्गीकारेऽपि स्वद्वारा अभावेऽक्षसन्निकर्षसंपत्त्यर्थं भूतलस्योपयोगः। एतावता कथं भूतलप्रत्यक्षं प्राङ्नापेक्षितमिति चेत्—उक्तोभयमध्ये प्रतियोगिनिरूपणं तावत् तत्स्मरणात्मकं तदानीमदृश्यमानेनापि सुकरमिति घटभूतलयोर्मध्ये एकतरप्रत्यक्षमपि तदा नापेक्षितमिति कुत उभयप्रत्यक्षापेक्षा। एकस्य प्रत्यक्षापेक्षायामन्यस्यापि सा प्रसज्येत। एवमस्याभावस्य भूतलादिनिष्ठस्य, शब्दध्वंसस्य श्रोत्रेणेव, चक्षुरिन्द्रियेण साक्षात् सन्निकर्षो नास्तीति येन भूतलेन सह साक्षाद्विशेषणतारूपसन्निकर्षस्तस्याभावस्यास्ति तेन भूतलेन साकमपीन्द्रियसन्निकर्षः संयोगाख्यो यदि न स्यात्—तर्हि संयुक्तविशेषणतया अभावेन कथमिन्द्रियमभावं गमयेदिति सन्निकर्षघटकतयाऽपि भूतलमुपयुज्यते। न च—अस्तु सन्निकर्षे उपयोगो भूतलस्य। तथाऽपि सन्निकर्ष एव प्रागुपलब्धेन वा संप्रत्युपलभ्यमानेन वा वस्तुना सह भवति; न त्वनुपलम्भेऽपीति तदर्थमेव भूतलस्य दृश्यत्वमपेक्षितमिति वाच्यम्—तदुपलम्भं प्रति सन्निकर्षस्येव सन्निकर्षं प्रत्युपलम्भस्याप्यपेक्षिततयाऽन्योन्याश्रयप्रसङ्गात्। अतो न भूतलप्रत्यक्षं प्रागपेक्षितम्।

[24) न च तर्हि घ्राणेन गन्धग्रहे यथा संयुक्तसमवायरूपसन्निकर्षघटकस्यापि द्रव्यस्य न विषयता; एवमिहाप्यभावप्रत्यक्षे भूतलस्याधारतया विषयत्वं न स्यात्। अतो विषयभावादाधारप्रत्यक्षमपेक्ष्यमिति वाच्यम्—योग्यत्वायोग्यत्वाभ्यां वैषम्यात्। तस्मात् सन्निकर्षे प्रथमतः

**तस्य संयोगवत् आधारानिरूप्यत्वात् । नापि सन्निकर्षार्थम् ; तदभावस्य साक्षादिन्द्रियसन्निकर्षादिति ॥**

**[25] न चेदेवम् ; कुत एषा प्रतीतिः, इदानीं श्रुतपूर्वः शब्दो नास्तीति ? 'अनुमाना'दिति चेन्न शब्दस्यैव पक्षीकरणे १ हेतोरनाश्रयत्वात् । अनित्यत्वमात्रसाधनेऽभावस्य नियतकालत्वासिद्धेः । आकाशस्य पक्षत्वे तद्वत्तयाऽनुपलभ्यमानत्वस्य हेतोरनैकान्तिकत्वात् । शब्दसद्भावकालेऽपि तस्य सत्त्वात् । एवं कालपक्षेऽपि दोषात् ।**

सति योग्यत्वात् भूतलमपि सह विषयीभवति । न पुनराधारोपलब्धिः प्राग्भाविनी अभावोपलब्धिहेतुरिति युक्तमुत्पश्यामः । न चाभावस्याधारप्रत्यक्षाधीनप्रत्यक्षकत्वरूपतन्निरूप्यत्वाभावेऽपि प्रतियोगियोग्यत्व इवाधारायोग्यत्वेऽप्यभावोपलम्भो न भवतीतीदृशदृश्याधारकत्वमपेक्षितमेवेति वाच्यम्—गन्धादिभावात्मकधर्मग्रहणे घ्राणग्राह्याधारकत्वादेरिवाभावग्रहणेऽपीदृशदृश्याधारकत्वस्यानपेक्ष्यत्वात् । आधारापेक्षायाश्च भवन्त्या अन्यथोपपत्तेर्गस्य वर्णितत्वात् । एवं च प्रकृते शब्दाभावप्रत्यक्षे गगनस्य किं प्रतियोगिनिरूपणार्थमुपयोगो मन्यते, सन्निकर्षघटकतया वा । नाद्यः ; संयोगस्य ससम्बन्धिकस्य द्विष्ठस्य भूतलापेक्षायामपीह शब्दस्य तदभावात् । नान्त्यः ; श्रोत्रसन्निकर्षस्य विशेषणताख्यस्य शब्दाभावे साक्षादेव सत्त्वेन घटकानपेक्षणात् । अत इह प्रकारान्तरेणाप्याधारनिरूप्यत्वाभावान्नाधारनिरूप्यत्वानियमोऽभावस्य ॥

[25] यदि च प्रतियोगिमात्रनिरूपणीयोऽभाव इति नेष्यते ; आधारनिरूप्यत्वस्वीकारेण शब्दध्वंसस्याप्रत्यक्षत्वमागृह्यते—तर्हि इदानीं श्रुतपूर्वो गकारो नास्तीत्येवं प्रतीतिरेषा कुतः प्रमाणादिति पृच्छामः । अनुमानादिति चेत्—तर्हि शब्द आकाशः काल आत्मा अवच्छेदकदेशो वा कः पक्षः ? नाद्यः ; शब्द इदानीं ध्वस्तोऽनुपलभ्यमानत्वादित्यत्र हेतोरनुपलभ्यमानत्वस्य शब्दसत्तादशायामसिद्धिः । असत्तादशायां च पक्षस्याभावान्न तत्र हेतुसत्त्वम् । न च शब्दस्य धर्मिणः कदाचित्प्रसिद्धत्वात्तत्तत्कालावच्छिन्नोपलब्धिविषयत्वाभावः प्रकृतहेतुर्नासिद्ध इति वाच्यम्—हेतोरप्यभावरूपतया आधारनिरूप्यत्वस्यावश्यकत्वात्, असतश्चाधारस्याग्रहणेन तदग्रहणात् । तस्याप्यनुमानान्तरेण साधने चानवस्थेति । न च कृतकत्वमेव हेतुः ; तस्य ध्वंसप्रतियोगित्वमात्रसाधकतया 'इदानीं नास्ती'ति ध्वंसस्य प्रकृतकालकत्वासिद्धेः ॥ न द्वितीयः ; आकाश इदानीं शब्दध्वंसवान् शब्दवत्तयाऽनुपलभ्यमानत्वादित्यत्राकाशस्यातीन्द्रियतया शब्दसत्ताकालेऽपि हेतुसत्त्वेन व्यभिचारात् । तथा शब्दनित्यत्वेऽप्येतद्धेतुसम्भवेनाप्रयोजकत्वात् ॥ अत एव न तृतीयः ।

१ प्र. 'शब्दसत्त्वकालेऽनुपलभ्यमानत्वं हेतुः स्वरूपासिद्धः । तदसत्त्वकाले तु हेतोः पक्षे वृत्तावपि ध्वंसवत्त्वरूपस्य साध्यस्य तत्रावृत्तेर्बाधितविषयत्वेनापक्षधर्मत्वा(पक्षताविशिष्टधर्म्यवृत्तित्वा)दित्यर्थः । ननु ध्वंसप्रतियोगित्वे साध्ये न बाध इत्यत आह अनित्यत्वेति ।'

**[26] अहमिदानीं निःशब्दश्रोत्रवान् शब्दोपलब्धिरहितत्वात् बधिरवदिति चेत्—न—दृष्टान्तस्य साध्यविकलत्वात्, व्याहतत्वाच्च; बधिरश्च श्रोत्रवांश्चेति व्याहतम्। तस्यापि च श्रवसो निश्शब्दत्वे प्रमाणं नास्ति ॥ अनुपभोग्यस्योत्पादवैयर्थ्यं प्रमाणमिति चेत्—न— आद्यादिशब्दवदुपपत्तेः ॥ तेषां शब्दान्तरारम्भं प्रत्युपयोगः ; अन्त्यस्य न तथेति चेत्—न—अन्त्यत्वासिद्धेः । सर्वेषां चोत्पाददतां प्रयोजनतदभावयोरस्मादृशैरनाकलनात् ; सुषुप्त्यवस्थायां श्वासप्रश्वासप्रयोजनवच्च तदुपपत्तेः । आरम्भे सति प्रयोजनमवश्यमिति व्याप्तेः । न त्वापाततः प्रयोजनानुपलम्भमात्रेणारम्भनिवृत्तिः ; तथा सति कर्णशष्कुल्यवच्छेदोत्पाद एव नभसस्तं प्रति निवर्तेत ; बधिरस्य तेनानुपयोगात् । विवादकाले बधिरकर्णः शब्दवान् योग्यदेश१स्थानावृतकर्णशष्कुलीसुषिरत्वात् तदितरकर्णशष्कुलीसुषिरवदिति ॥**

[26] नन्वहमिदानीं निःशब्दश्रोत्रवान् शब्दोपलम्भशून्यत्वाद्बधिरवदित्यात्मपक्षकानुमानं तुरीयमस्त्विति चेन्न—दृष्टान्ते श्रोत्रवत्त्वरूपसाध्यवैकल्यात्; बधिरपदस्य श्रोत्रहीन इत्यर्थकतया श्रोत्रवान् श्रोत्रहीन इति मिथो विरुद्धवचनेन व्याघाताच्च । ननु बधिरपदं न श्रोत्रहीनार्थकम् । कर्णशष्कुल्यवच्छिन्नाकाशश्च श्रोत्रम् । तत्तस्याप्यस्ति विभुत्वादिति नैतौ दोषाविति चेत्—तथाऽपि तस्य निःशब्दत्वे प्रमाणाभावात् निश्शब्दश्रोत्रवत्त्वरूपसाध्यवैकल्यमेव । ननु शब्दो न बधिरश्रोत्रवृत्तिः तदभोग्यत्वादिति प्रमाणमस्ति । न चाप्रयोजकत्वम् ; अनुपभोग्यस्योत्पादवैयर्थ्यादिति चेन्न—नह्यनुपभोग्यत्वेऽनुत्पत्तिः ; शब्दसन्ताने प्रथमशब्दादेः स्वदेशेऽनुत्पत्तिप्रसङ्गात् । वीचीतरङ्गन्यायजातस्यैव भोग्यत्वात् । ननु तत्र भोग्यशब्दान्तरोत्पादनेन तत्सार्थक्यम् । बधिरश्रोत्रे तूच्यमानः शब्दोऽन्त्य इति नास्य तथा सार्थतेति चेन्न—अन्त्यत्वासिद्धेः । शब्दो हि वीचीतरङ्गन्यायेन भवन् मध्यवर्तिबधिरश्रोत्रं व्याप्य तदुपर्यपि शब्दं जनयितुमलमिति । किञ्च बधिरानुपभोग्यत्वमात्रेण वैयर्थ्यमपि दुर्वचम्, नह्युत्पद्यमानेषु सर्वेषु अस्येदं प्रयोजनमस्ति, अस्येदं नेति विशिष्य ज्ञानमस्माकमल्पदृशां भवितुमर्हति । सुषुप्तौ भवतोः श्वासप्रश्वासयोः प्रयोजनस्येवाज्ञायमानस्य प्रयोजनस्येहापि सम्भवात् । यत् उत्पन्नं, तत् साक्षात् प्रणाल्या वा सप्रयोजनमित्येव व्याप्तिः । न पुनरविवेचनदशायामनुपलभ्यमानप्रयोजनत्वादनुत्पद्यमानत्वसिद्धिः । तथा सति बधिरकर्णशष्कुल्यवच्छिन्नत्वमपि नभसो न स्यात् । तेन नभोगतेनावच्छेदेन बधिरस्य का-

१ देशस्थानावृत इति क. ख. पाठः। बो. 'यदा शब्दसन्तानः श्रूयते, योग्ये च देशे अनावृतकर्णविवरो बधिरस्तिष्ठति तदा तत्कर्णो न शब्दवानिति परेणोच्यते तस्मिन् विवादकाल इत्यर्थः।' इति । योग्यदेशस्येति पाठे योग्यदेशकस्य बधिरस्येत्यर्थः ।

**[27] निःशब्दाः पणववीणावेणवः १ तदेकज्ञानसंसर्गयोग्यत्वे सति तदनुपलम्भेऽप्युपलभ्यमानत्वात् । यत् यदेकज्ञानसंसर्ग २ योग्यं(य) तस्यानुपलम्भेऽप्युपलभ्यते तत् तदभाववत्, यथाऽघटं भूतलमिति चेत्—न—एकज्ञानसंसर्गयोग्यत्वाभावात्; शब्दस्य श्रौत्रत्वात, वीणादीनां चाक्षुषत्वात॥ अभिमानमात्रादिति चेन्न, तथाऽपि शब्दप्रध्वंसस्यातद्देशत्वात्; अत्यन्ताभावस्य च कालनियमात्॥**

**[28] स्यादेतत्—शब्दवदाकाशोपाधयो हि मेर्यादयः। तेन तेषु विधीयमानः शब्दः**

---

र्याभावात् । अतो बधिरश्रोत्रस्य निःशब्दत्वे न प्रमाणम् । प्रत्युत सशब्दत्वे प्रमाणम्— विवादकालावच्छिन्नबाधिरकर्णः शब्दवान् शब्दोत्पत्तियोग्यप्रदेशस्थितनिरावरणकर्णशष्कुलीरन्ध्रत्वात् अबधिरकर्णवदिति । न खलु तदा तत्कर्णः कार्पासादिना पिहितः । अश्रवणं पुनरिन्द्रियस्य दुष्टत्वात् । न खल्वबधिरमण्डलमध्यगस्य बाधिरस्य परं कर्णे शब्दो नोद्भवतीति युक्तिसहम् । अतः श्रोत्रसत्त्वेऽसत्त्वे च साध्यवैकल्यमक्षतमिति ।

[27] अथ पणवादयोऽवच्छेदकदेशाः निःशब्दाः, शब्देन सहैकज्ञानविषयत्वार्हत्वे सति शब्दानुपलम्भेऽप्युपलभ्यमानत्वात् । यत् येन सहैकज्ञानविषयत्वार्हं सत् तस्यानुपलम्भेऽप्युपलभ्यते, तत् तदभाववत्; यथा घटेन सहोपलब्धुमर्हं भूतलं घटानुपलम्भे सत्युपलम्भात् घटाभाववत् तथेति । अत्रोपलभ्यमानत्वमात्रस्य हेतुत्वे सशब्दतादशायां व्यभिचारः । सत्यन्तानुक्तौ सामान्यमुखव्याप्तिभङ्गः; सगन्धपुष्पसाहद्दष्टपुरुषादेर्गन्धादृष्टाद्यनुपलम्भेऽप्युपलभ्यमानत्वात् । तदेवं शब्दध्वंसानुमानमित्यस्तु पञ्चमः पक्ष इति चेत्—न–शब्दस्य श्रोत्रग्राह्यतया पणवादेश्च चाक्षुषतया सत्यन्तविरहेण हेत्वसिद्धेः । ननु वीणा वाद्यते, वेणुः पूर्यत इत्येवमनुभवात् सुरभि चन्दनमित्यादिवदेकज्ञाने उपनीतभानमात्रेण पणवादेः शब्दस्य चैकज्ञानीयलौकिकविषयताशालित्वाभिमानो लोकानाम् । अतस्तन्मात्रदृष्ट्या हेतूपपादनमिति चेत्—एवमपि साध्यं निःशब्दत्वं किं शब्दध्वंस उतात्यन्ताभावः? आद्ये बाधः, तस्य गगनगस्य पणवाद्यधिकरणकत्वाभावात् । अन्त्ये सर्वदैव तदस्तितायाः सिद्धत्वात् कालविशेषे तत्साधनमयुक्तमशक्यं च ।

[28] ननु शब्दवतो गगनस्य मेर्यादय उपाधिभूताः, तदवच्छेदेन तत्र तदुत्पत्तेः । अतो

---

१ तदेकज्ञानसंसर्गयोग्यत्वस्य इति क. ख. पाठः स चाशुद्धः । बो. 'धर्माद्यनुपलम्भेऽप्युपलभ्यमानेनात्मना व्यभिचारो मा भूदिति उक्तं **तदेकज्ञानसंसर्गयोग्यत्वे सती**'ति ।

२ **योग्यस्यानुपलम्भे** इति क. ख. पाठः । तस्यानन्वितत्वात् उक्तहेत्वनुरोधेनेदमुपरि शोधितम् ।

**आकाश एव विहितो भवति ; प्रतिषिध्यमानश्च तत्रैव प्रतिषिद्धो भवति , शरीरे सुखादिवत् इति चेत् न— तत्र सोपाधावात्मनि प्रत्यक्षसिद्धे सुखादिनिषेधस्यापि प्रत्यक्षसिद्धत्वात् । न चैवमिहापि ; तदुपहितस्य नभसोऽप्रत्यक्षत्वात् ॥ उपाधयस्तावत् प्रत्यक्षा इति चेन्न—तैरभावानिरूपणात् । निरूपणे वा प्रत्यक्षेणापि ग्रहणप्रसङ्गात् । न चैवं सति पारमार्थिकाधिकरणनिरूपणीयत्वमभावस्य । न च तेऽपि प्रत्यक्षसिद्धाः १ सर्वत्र ; शब्दकारणव्यवधानेऽप्युपलब्धस्य शब्दस्य नास्तिताप्रतीतेः । आनुमानिकैस्तैस्तथा व्यवहार इति चेन्न—हेतोस्तद्वत्तयानुपलभ्यमानत्वस्यानैकान्तिकत्वात् ; अभावप्रतीतिकाले सन्दिग्धाश्रयत्वाच्च । उपलभ्यमानविशेष्यत्वपक्षे चासिद्धेः; इन्द्रियव्यवधानात् , शब्दालिङ्गस्य चानुपलम्भात् ॥**

---

भेर्यादिषु शब्दास्तित्वोक्तौ गगन एव तत्सत्त्वं सिद्ध्यति । तेषु नास्तीत्युक्तावाकाशे नास्तीति सिद्ध्यति—यथा शरीरे सुखादिकं विहितं निषिद्धं च चेत्, आत्मनि तथा कृतं भवति तद्वत् । अत आकाशे तत्सिद्ध्यर्थमेव तेषु तत्साधनमिति न सिद्धसाधनमिति चेत्-न । किमत्र भेर्याद्यवच्छिन्नमाकाशं पक्षीकृत्य तत्र ध्वंसः साध्यते , भेर्यादिमात्रं वा । नाद्यः ; शरीररूपोपाध्यवच्छिन्नस्यात्मनो मनसा ग्राह्यस्येव, आकाशस्य प्रत्यक्षत्वाभावेनोपलभ्यमानत्वरूपहेतोरसिद्धेः । अथोपाधयः प्रत्यक्षा एवेति तन्मात्रपक्षकत्वपक्षोऽस्त्विति चेन्न—उपाधिभिरभावस्यानिरूप्यमाणत्वात् । प्रतियोगिनिरूप्यतामिवाधारनिरूप्यतामभावस्य स्वीकुर्वतस्तव मतेऽप्याकाशेनैव तस्य निरूप्यत्वात् । आकाशस्य स्वरूपसम्बन्धेनाधारत्वेऽपि तेषामप्यवच्छेदकत्वेनाधारत्वं स्वीकृत्य तन्निरूप्यमाणत्वेऽभिमते तु दृश्याधारकत्वविशिष्टदृश्यप्रतियोगिकत्वरूपत्वादिष्टयोग्यतासत्त्वेन ध्वंसस्य प्रत्यक्षत्वप्रसङ्गादनुमानानवकाशात् । किञ्चैतन्निरूप्यत्वाङ्गीकारे स्वरूपसम्बन्धेनाधारतया यत् मुख्यभूतमधिकरणं तन्निरूप्यत्वं त्वदिष्टं न सिद्ध्यति ॥ अपि च भेर्यादीनां कुड्यादिना व्यवधानेऽपि इदानीं श्रुतपूर्वः शब्दो नास्तीति प्रतीतिभावात् , शब्दप्रत्यक्षस्थले सर्वत्र भेर्यादिप्रत्यक्षनियमस्याभावात् तादृशपक्षे हेत्वसिद्ध्या न निरुक्तपणवादिपक्षकानुमानसम्भवः ॥ ननु पूर्वं शब्दश्रवणबलादुपाधयोऽनुमिताः । ततस्तैरानुमानिकैः , पणवादयो निःशब्दास्तद्वत्तयानुपलभ्यमानत्वादित्यनुमानेन व्यवहारनिर्वाह इति चेन्न—शब्दसत्ताकालेऽपि व्यवहितेषु तेषु हेतुसत्त्वेन व्यभिचारात् । किं च तेषां पक्षीभूतानामदृश्यमानानां नाशस्यापि सम्भावितत्तया शब्दाभावप्रतीतिकाले सद्भावसन्देहात् तत्र तदनुमानं न सम्भवति । उपलभ्यमानत्वविशिष्टभेर्यादिपक्षत्वपक्षेऽपि विशिष्टाश्रयासिद्धिरेव ; उपलभ्यमानत्वस्य हेतुदलत्वे च स्वरूपासिद्धिः , तेषामिन्द्रियव्यवहितत्वात् । न

---

१ प्रत्यक्षसिद्धाः । सर्वत्र शब्दकारण इत्येवं वाक्यच्छेदः ख. पु०

**[29] अपि च नष्टाश्रयाणां द्रव्यगुणकर्मणां नाशोपलम्भः कथम् ? न कथञ्चिदिति चेत्—आश्रयनाशात्कार्यनाश इति कुत एतत् ? अनुमानतस्तथोपलम्भादिति चेत्—न—तुल्यन्यायेनोक्तोत्तरत्वात् ॥ तन्तुषु नष्टेष्वपि यदि पटो, न नश्येत्, तद्वदेवोपलभ्येतेति चेत्—एतस्य तर्कस्यानुग्राह्यमभिधीयताम् ॥**

**[30] यदत्रोपलभ्यते न तत् कार्यपरम्परावत्, योग्यस्य तथानुपलभ्यमानत्वे सति उपलभ्यमानत्वादिति चेत्—न—तन्त्ववयवानां पटानाधारत्वे साध्ये सिद्धसाधनात्। पटप्रध्वंसवत्त्वे साध्ये बाधितत्वात् तस्य स्वप्रतियोगिकारणमात्रदेशत्वात् ॥**

**[31] ये पटध्वंसवन्तस्तन्तवः, तदभाववन्त एते अंशवः इति साध्यमिति चेन्न—तन्तुनाशोत्तरकालं पटनाशात्तद्वत्तानुपपत्तेः ॥ योग्यतामात्रसाधने च पटप्रध्वंसासिद्धेः ; तस्य नाशानाशयोः समानत्वात् ॥**

---

चेदानीं तेषां शब्देनानुमानम् ; शब्दस्य सांप्रतमनुपलम्भात् । ननु वीणादेः सन्दिग्धत्वेऽपि वीणादितो वीचीतरङ्गन्यायेन श्रोत्रदेशं यावदुत्पन्नानां शब्दानां येऽवच्छेदकदेशास्तेषूपलभ्यमानेषु निःशब्दत्वं साध्येत; एवं स्थूले वीणादिदेशेऽपीति चेत्—एवं किञ्चित् दृश्यदेशनिरूप्यत्वोक्तौ प्रत्यक्षत्वमेवाऽऽपद्यते ; मुख्याधारनिरूप्यत्वं च न सिद्धयतीति ॥ ]

[29] अपि च स्वप्रतियोगिसमवायिदेशरूपमुख्याधारनिरूपितस्यैवाभावस्य प्रत्यक्षाङ्गीकारे आश्रयनाशजन्यानां पटादिद्रव्यगुणकर्मनाशानां प्रत्यक्षमेव न स्यात् । ननु न तेषां प्रत्यक्षमिति चेत् तर्ह्याश्रयनाशात् कार्यनाश इत्येतद्वचनं किंप्रमाणकम् ? अनुमानतो नष्टत्वेन ग्रहणात्तद्वचनमिति चेन्न-शब्दध्वंसानुमानोक्तन्यायेन नाशप्रतियोगिनस्तदाश्रयस्य वा पक्षत्वे आश्रयासिद्धेः ; कालपक्षेऽपि तथैवानैकान्तिकत्वात् ॥ नन्ववश्यं पटनाशः स्वीकार्यः ; अन्यथा तन्तुनाशेऽपि तदाश्रितपटानाशे पूर्ववदेव पटोपलम्भप्रसङ्गादिति चेत् सत्यम् । एष खल्वनुकूलतर्कः । तर्कश्च प्रमाणानुग्राहको न तु स्वतन्त्रः । अत एतदनुग्राह्यं प्रमाणमुच्यताम् ।

[30] ननूपलभ्यमानानां तन्त्ववयवानामंशूनां पक्षत्वं स्वीकृत्य, 'इदमुपलभ्यमानं न स्वकार्यतन्तु-तत्कार्यपटतत्कार्यगुणकर्मयुक्तं, तत्सत्तादशायां तद्वत्त्वेनोपलब्धुं योग्यस्य स्वस्य तद्वत्त्वेनानुपलभ्यमानत्वे सत्युपलभ्यमानत्वात्' इत्यनुमानमुच्यत इति चेन्न—अत्र पटात्यन्ताभावसाधने सिद्धसाधनात् । पटध्वंससाधने च तस्य तन्तुगततयांशुषु बाधात् ।

[31] ननु पटध्वंसवत्तन्त्वभाववत्त्वं साध्यमिति चेन्न—आश्रयनाशजन्यपटनाशस्यैव प्रकृतत्वात् नष्टे तन्तौ पटध्वंसरूपसाध्यैकदेशवत्त्वाप्रसिद्धेः । पटध्वंसाधिकरणत्वार्हतन्तुप्रतियोगिकाभाववत्त्वस्य साध्यत्वे च पटे सत्यपि तन्तुसाधारत्वयोग्यतामात्रसत्त्वान्न ध्वंसस्येदानींतनत्वसिद्धिः ॥

**[32] अनन्यगतिकतया विशिष्टनिषेधे कृते विशेषणानामप्यभावः प्रतीतो भवति; गुणक्रियावत्पटाधारास्तन्तवो न सन्ति स्वावयवेष्विति हि प्रत्यय इति चेत्—तथाऽपि गुणकर्मणां पटस्य च प्रध्वंसः किमधिकरणः प्रतीयत इति वक्तव्यम् ॥ अंश्वधिकरण एवेति चेत्—भ्रान्तिस्तर्हीयम् ; तस्यातद्देशत्वात् ॥ आश्रयावच्छेदकतया तेषामप्यदूरविप्रकर्षेण तद्देशत्वम् एवंभूतेनापि देशेन तन्निरूपणम् ; योग्यताया अव्यभिचारादिति चेत्—न तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणमिति नियमः ; प्रकारान्तरेणापि निरूपणात् ॥**

**[33] तस्मात् यस्य यावती ग्रहणसामग्री, तं विहाय तस्यां सत्यां तदभावो यत्र क्वचिन्निरूप्यो देशे काले वा । इयांस्तु विशेषः—सा सती चेत्, प्रत्यक्षेण । असत्येव ज्ञाता चेत्, १ अनुमानादिनेति स्थितिः ॥**

---

[32] ननु गुणक्रियाविशिष्टपटविशिष्टतन्त्वभावस्तदवयवेष्वंशुषु साध्यते । गत्यन्तराभावादेवं विशिष्टाभावे कथिते विशिष्टाभावस्य विशेष्याभावविशेषणाभावोभयात्मकतया पटाभावोऽपि सेत्स्यतीति चेत्—एवमपि पटध्वंसस्तद्गुणक्रियाध्वंसश्च किन्निष्ठः ? विशिष्टाभावस्थले तदाधार एव विशेषणाभाववर्णनादत्रापि पटध्वंसोंऽश्वधिकरणक इति चेत्—तर्ह्यनुमितिर्भ्रमात्मिका स्यात् । तस्य ध्वंसस्य वस्तुतस्तदधिकरणकत्वाभावात् । ननु ध्वंसाश्रयतन्त्ववच्छेदकतयांशूनामपि ध्वंसाधारत्वम् , अवयवावयविभावापन्नपदार्थबहिर्भावाभावात् । एवंभूतदेशस्यापि निरूपकत्वं स्वीक्रियते, अनुभवबलेनाभावाधिकरणतार्हताया अनपायादिति चेत्— तर्ह्याकाशस्यातीन्द्रियतया शब्दध्वंसो न ग्राह्य इत्येतत् साधनार्थं स्वीकृतस्य स्वप्रतियोगिसमवायिदेशेनैव ध्वंसनिरूपणमिति नियमस्यासिद्धिः ; अमुख्याधारेणापि तन्निरूपणात् ॥

[33] तस्मात्स्वप्रतियोगिसमवायिदेशस्य दृश्यत्वमप्रयोजकम् । ध्वंसस्तावत् स्वरूपसम्बन्धेन स्वप्रतियोगिसमवायिनि, दैशिकविशेषणतासम्बन्धेन स्थूलदेशे कालिकसम्बन्धेन काले च वर्तते । तत्र ध्वंसग्राहकसामग्र्यांसत्यां स तत्र यत्र क्वापि निरूप्यते । सामग्री च यस्य भावपदार्थस्य ग्रहणे या सामग्री विषयभूतवस्तु-तद्ग्राहकेन्द्रिय-तत्सहकार्यालोकादिरूपा क्लृप्ता , सैव तद्भावपदार्थवर्जं तदभावग्रहणेऽपि भवति । प्रतियोग्यनुपलब्धिविशिष्टा प्रतियोगिग्राहकसामग्री अभावग्राहिकेति यावत् । एवं च तस्यां सामग्र्यां सत्यामभावस्य देशे काले वा कुत्रापि निरूपणं भवति ; न तु स्वप्रतियोगिसमवायिदेश एव । एवं च निरुक्तपटध्वंसाद्यनुमित्यभ्रमत्वाय स्वप्रतियोगिसमवायिदेशभिन्नस्यापि तदाधारत्वस्वीकारे तादृशदृश्याधारमादाय तत्प्रत्यक्षत्वस्यापि सम्भवात्तुल्यन्यायेन

---

१ प्र. 'आदिग्रहणात् आप्तोपदेशेनापीत्यर्थः'

**[34] एतेन 'सङ्ख्यामभावो निरूप्यते' इत्यादिशास्त्र १विरोधः परिहृतो वेदितव्यः; उभयनिरूपणीयप्रतियोगिविषयत्वात् अनुमानविषयत्वाच्च। अन्यथा आश्रयासिद्धिप्रसङ्गात्। तत्रापि न ग्रहणे नियमः, ज्ञानमात्रं तु विवक्षितम्; तावन्मात्रस्यैव तदुपयोगात्। क्वचित् ग्रहणस्य सामग्रीसम्पातायातत्वात्॥**

शब्दध्वंसस्याप्याकाशातिरिक्तदेशनिरूप्यतया प्रत्यक्षत्वमवर्जनीयम्। एवं च स्वप्रतियोगिसमवायिनिरूप्यत्वाभावात्, प्रत्यक्षस्य वर्तमानमात्रग्राहितयाऽभावप्रत्यक्षे तादात्त्विककालभानस्य तथा 'अय'मिति यत्किञ्चिद्देशभानस्य चावर्जनीयत्वात्तदधीननिरूपणकत्वस्वीकारस्य व्यर्थत्वात्, अभावग्रहणात्पूर्वमाधारग्रहणं प्रतियोगिग्रहणवत्रापेक्षितमित्युक्तचरत्वाच्च प्रतियोगिमात्रनिरूप्य एवाभावः। तथा च प्रतियोगिन ऐन्द्रियिकत्वेऽभावस्यैन्द्रियिकत्वमिति सिद्धम्। तत्र त्वयं विशेषः—यदि भावग्राहकसामग्री संप्रति वर्तमाना तदा प्रत्यक्षेणाभावो निरूप्यः। यदा त्वविद्यमाना प्राक् स्थितत्वेन ज्ञायते–यथा 'प्रातश्चत्वरे किं गजः स्थित' इति सायं केनचित् पृष्टः कश्चिन्मन्यते, 'नूनं न स्थितो गजः, मदीयचक्षुरालोकसंयोगादिसामग्रीस्थितावपि तस्य प्रातस्तत्रानुपलब्धत्वा'दिति। तत्र हि चक्षुःसंयोगादिसामग्री प्रातःकालिकी अभावग्राहिका। सा च सायमसत्येवेति–तदाऽभावोऽनुमानेन निरूप्यः। मीमांसकस्य तु सत्यामपि प्रतियोगिग्रहसामग्र्यां वर्तमाना प्रतियोग्यनुपलब्धिरनुपपद्यमाना अभावमाक्षिपतीतित्यर्थापत्त्यापि स निरूप्यः स्यात्। एवमाप्तोपदेशेनापि स निरूप्यः, यथा तत्र गजो नासीदित्युक्त्या। परं तु तत्र शब्दादेवार्थप्रत्ययात् प्रतियोगिग्राहकसामग्री असती ज्ञाता तत्रोपयुज्यत इति नास्ति। तत् सिद्धं शब्दध्वंसः प्रत्यक्ष इति॥

[34] एवमधस्तात्क्वचिदाधारस्यान्यथोपयोगस्योक्तत्वेन, अनुमानग्राह्यत्वस्येदानीं कथितत्वेन च 'सङ्ख्यामभावो निरूप्यत' इति प्रतियोग्यधिकरणोभयज्ञप्त्यधीनज्ञप्तिकत्वमभावे बोधयता शास्त्रेणास्मदुक्तार्थविरोधः परिहृतो वेदितव्यः। सर्वस्याप्यभावस्य यत्र क्वचिद्देशे काले वा निरूप्यत्वेऽपि तादृशाधारज्ञानस्य प्रतियोगिज्ञानवत् पूर्वापेक्षितत्वाभावात् प्रकृतवाक्ये प्रतियोगितुल्यतया प्रागाधारस्य ज्ञेयत्वं स्वरससिद्धं न सङ्गच्छत इति हि शास्त्रविरोधः शङ्कनीयः। स न भवति; भूतले घटो नास्तीत्यादौ प्रतियोगिभूतस्य संयोगादेरुभयनिष्ठतयोभयज्ञानाधीनमेव ज्ञानमिति तादृशप्रतियोगिविषयकत्वात्तद्वाक्यस्य। ननु तर्हि प्रतियोगिग्रहण एव तदुपयोगान्नाभावपदस्वारस्यमिति चेत्—तर्हि निरूप्यत इत्यत्र विवक्षितमभावज्ञानमनुमानरूपमस्तु। तत्र ह्यभावस्य साध्यत्वे

१ मकरन्दे, 'यद्यपि निरधिकरणाभावप्रतीत्यनभ्युपगमे विरोधशङ्कैव नास्ति, तथाऽप्यधिकरणपदस्य प्रतियोगिसमवायिपरत्वेऽपि न विरोधः, विशेषविषयत्वादित्याशयः'।

**[35] यदि चाधिकरणग्रहे शास्त्रस्य निर्भरः स्यात्, 'वह्नेर्दाह्यं विनाश्यानुविनाशवत्तद्विनाशः' इति नोदाहरेत् ; असिद्धत्वात् । न हि वह्निविनाशस्तदवयवपरम्परास्वक्ष[1]निरूप्यः तासामनिरूपणात् । नाप्यन्यत्र गमनाभावादिना पारिशेष्यादनुमेयः ; हेतोरेव निरूपयितुमशक्यत्वात् ; आश्रयानुपलब्धेः । नापि निमित्तविनाशात् सर्वमिदमेकवारेण सेत्स्यतीति युक्तम् ; तस्यानैकान्तिकत्वात् ॥ तेजसा विशेषितत्वाद्यमदोष इति चेन्न— व्याप्त्यसिद्धेः । न हीन्धनविनाशात् तेजोद्रव्यमवश्यं विनश्यतीति क्वचित्सिद्धम् ; [2] प्रत्यक्षवृत्तेरनभ्युपगमात् ॥**

---

आश्रयः पक्षो नियमेन प्राक् ग्राह्यः ; **अन्यथाऽऽश्रयासिद्धेः** । न च प्रतियोग्यनुयोग्युपरागेण विना नञोऽप्रयोगात् अस्य वाक्यस्य शब्दरूपाभावप्रमाणविषयकत्वमपि सुवचमिति वाच्यम्— अभाववाचिनञ्पदप्रयोगे तथा नियमेऽपि घटो ध्वस्त इत्येवं शब्दान्तरेणाभावबोधने उभयनिरूप्यत्वाभावात् अभावबोधकशब्दसामान्यविवक्षणायोगात् । अनुमानं तु सर्वदा दृश्यादृश्यसर्वविधाभावानुमानेऽप्याश्रयसापेक्षम् ; **अन्यथाश्रयासिद्धेः** । अतोऽनुमानविषयमिदं शास्त्रवाक्यम् । एवं द्विप्रतियोगिविषयतयाऽनुमानविषयतया च शास्त्रसमर्थनेऽपि तत्रापि भवदिष्टदृश्याधारकत्वसमर्थनं नैव भवति । प्रतियोगिज्ञानायाश्रयासिद्धिपरिहाराय चाधारज्ञानस्य सामान्यरूपेणैव शास्त्रे विवक्षितत्वात् ; दर्शनरूपज्ञाननियमाभावात् । भूतले घटो नास्तीत्यत्राधारदर्शनं तु अभावग्राहकसामग्र्या सहाधारग्राहकसामग्र्यास्सद्भावात् । न तावता तस्य पूर्वं ग्रहणमपेक्षितमित्यप्युक्तम् ।

[35] नन्वयं विरोधपरिहारप्रकारः क्लिष्ट इति चेत्—अन्यथा सूत्रविरोधः । सर्वस्याप्यभावस्याधिकरणग्रहाधीनग्रहविषयत्वे, 'तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्' (न्या ४. १-२७) इति सूत्रकारो वह्निविनाशं न दृष्टान्तयेत् । अत्र हि जगति सर्वमनित्यमिति वादी, 'सर्वगतमनित्यत्वं नित्यमनित्यं वा । नित्यत्वे न सर्वानित्यत्वम् ; अनित्यत्वे तस्यानित्यत्वस्य नाशे नित्यसर्ववस्तुसिद्धि'रिति स्वं प्रति क्रियमाणमाक्षेपं परिहर्तुं, 'यथा-वह्निः काष्ठं विनाश्य स्वयमपि विनश्यति । न च तत्र पुनः काष्ठोन्मेषः—तथा सर्वनित्यत्वं सर्वमनित्यं विधाय स्वयमप्यनित्यं भवती'त्याह । अत्र वह्निविनाशो दृष्टान्तः । वादिप्रतिवादिभ्यां दृष्ट एव धर्मी दृष्टान्तो भवति । स च न त्वन्मते ; **असिद्धत्वात्** । न हि वह्निविनाशस्य ग्रहणमाधारनिरूप्यत्वाङ्गीकारे

---

[1] **परम्परास्वनिरूप्यः** इति सर्वत्र पाठः । परम्परासु अनिरूप्यः इति छेदोऽसङ्गतः, परम्परात्मकं यत् स्वं तन्निरूप्य इति च क्लिष्टम् । उपरि अनुमेयत्वाशङ्कनात् अत्र **अक्षनिरूप्य** इति युक्तम्, अक्षेण इन्द्रियेण निरूप्य इति । **परम्परास्वस्तु निरूप्यः** इति वाऽस्तु ।

[2] प्रत्यक्षप्रवृत्तेरिति पा० । बो. 'प्रत्यक्षप्रवृत्त्यनभ्युपगमात्' ।

**[36] तस्मात् यस्यागेनान्यत्र गमनं न सम्भाव्यते, तेन निमित्तादिनापि देशेन प्रध्वंसो निरूप्यते इत्यकामेनापि स्वीकरणीयम्; गत्यन्तराभावात्। अत एव तमसः प्रत्यक्षत्वेऽप्यभावत्वमामनन्त्याचार्याः॥ एतेन शब्दप्रागभावो व्याख्यातः॥**

**[37] एवं १ व्यवस्थिते अनुमानमप्युच्यते-शब्दोऽनित्यः २ उत्पत्तिधर्मकत्वात् घटवत्।**

घटते। वह्निध्वंसस्य वह्न्यवयवपरम्परासु खल्वक्षेण निरूपणं कार्यम्। तासामेवादर्शनाच्च तन्न भवति। न च--वह्निर्नष्टः सत्ताकालिकानुपलम्भप्रयोजकरहितत्वे सत्यनुपलभ्यमानत्वादित्यनुमेयो नाशः। वह्निसत्त्वेऽपि तदनुपलम्भप्रयोजकं चान्यत्र गमनतिरोधानादि। न च तद्वह्निरस्तीति हेतुसत्त्वं--इति वाच्यम्-शब्दपक्षकध्वंसानुमानोक्तन्यायेन हेतुमूलाभावस्यैव निरूपणासम्भवात्। तस्याधारनिरूप्यत्वात्। आश्रयस्य चानुपलब्धेः॥ नापि-वह्निरन्यत्र गतो विनष्टश्च विनष्टनिमित्तकत्वादिति सर्वानुमान—मिति वाच्यम्—विनष्टदण्डादिनिमित्तकस्यापि घटादेर्नष्टत्वाद्यभावेन व्यभिचारात्॥ तेजस्त्वे सतीति विशेषणाद्धेतुर्निर्दुष्ट इति चेन्न—क्वचिदपीन्धनविनाशात्तेजोविनाशस्याधारनिरूप्यत्वाभावेन प्रत्यक्षस्य भवताऽनभ्युपगमेन व्याप्तेरग्रहणात्।

[36] अतो वह्निविनाशे दृष्टत्वस्य प्रकारान्तरेण निरूपणायोगात्, यादृशभूतलादिकं त्यक्त्वा वह्न्यादेरन्यत्र गमनप्रसक्तिर्नास्ति, तादृशभूतलादिनाऽपि तन्निरूपणम्, न तु प्रतियोगिसमवायिदेशेनैवेत्यगत्या स्वीकार्यम्। तदपि भूतलादिकं न पूर्वमवश्यं ग्राह्यम्। एवमधिकरणग्रहस्याभावग्रहात्पूर्वमनपेक्षितत्वादेव तमसस्सत्यपि प्रत्यक्षत्वेऽनुभवसिद्धेऽभावत्वमाचार्या आमनन्ति। तथा च सूत्रं, 'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भा * ऽभावस्तमः' (वै. ५. २-१७)इति। नहि प्रभाऽभावरूपान्धकारग्रहणे कस्यचिदधिकरणस्य ग्रहणमस्ति; नतरां च प्रभावयवपरम्परायाः। तस्मात्सर्वत्राभावप्रत्यक्षे आधारानिरूप्यत्वाभावात् पूर्वोक्तविषयमेव 'सङ्ख्या'मित्यादिशास्त्रमिति॥ तथा चाकाशस्यातीन्द्रियत्वेऽपि शब्दध्वंसोऽध्यक्ष्यत एव। एवं ध्वंसप्रत्यक्षोपपादनेन, 'उत्तरक्षणभावी शब्द इदानीं नास्ती'त्येवं शब्दप्रागभावोऽपि प्रत्यक्षतयोपपादित इति। अतो ध्वंसप्रागभावयोः प्रत्यक्षेण ग्रहणान्न वर्णाः नित्या इति॥

[37] एवमनन्यथासिद्धप्रत्यक्षेण वर्णानित्यत्वे व्यवस्थितेऽनुमानमप्युच्यते—शब्दोऽनित्यः भावत्वे सत्युत्पत्तिमत्त्वात् घटवदिति। न चाद्य श्रुते गकारे 'सोऽयं गकार' इति पूर्वश्रुतगकारैक्य-

१ एवं स्थिते इति क. ख. पाठः। बो. 'एवं—अनित्यत्वं प्रत्यक्षसिद्धमिति व्यवस्थिते'। प्र. एवमिति, प्रत्यक्षेणानित्यत्वे साधिते इत्यर्थः।

२ उत्पत्तिमत्वात् इति क.२. पाठः। प्र. उत्पत्तिमत्त्वाद्, स्वसमानकालीनप्रतियोगिध्वंसानाधारक्षणाधारत्वादित्यर्थः। भावत्वेन विशेषणात् न ध्वंसे व्यभिचारः इति—।

* सूत्रपाठो भाऽभावः इति, न त्वभाव इत्यस्मदीये वैशेषिकविमर्शे द्रष्टव्यम्।

**न चेदं प्रत्यभिज्ञानबाधितम् ; तस्य ज्वालादिप्रत्यभिज्ञानेनाविशेषात् ॥**

[38] **नैवम् ; अबाधितस्य तस्य स्वतःप्रमाणत्वादिति चेत्-तुल्यम् ॥ 'ज्वालायां तन्नास्ति ; विरुद्धधर्माध्यासेन १ बाधितत्वात् । अन्यथा भेदव्यवहारविलोपप्रसङ्गः । निमित्ताभावात् । आकस्मिकत्वे वाऽतिप्रसङ्ग' इति चेत्—तुल्यम्, २ शब्देऽपि तीव्रतीव्रतरत्वमन्दमन्दतरत्वादेर्भावात् ॥**

[39] **तदिह न स्वाभाविकमिति चेन्न—स्वाभाविकत्वावधारणन्यायस्य तत्र तत्र सिद्धस्यात्रापि तुल्यत्वात् । न ह्यपां शैत्यद्रवत्वे स्वाभाविके, तेजसो वा औष्ण्यभास्वरत्वे इत्यत्रान्यत्प्रमाणमस्ति प्रत्यक्षाद्विना ॥ 'तत्तथैव युज्यते ; अन्यस्योपाधेरनुपलम्भात्, नियमेन तद्गतत्वेन चोपलम्भा'दिति चेत्—तुल्यमेतत् ॥**

प्रत्यभिज्ञानेन एकस्मिन् पूर्वापरकालद्वयवर्तित्वविषयीकरणात् ध्वंसस्य मध्यकालस्थितिर्दुर्वचेति, 'तावत्कालं स्थिरश्चैनं कः पश्चान्नाशयिष्यती'ति न्यायेन ध्वंसाप्रतियोगित्वस्य सिद्धत्वात् इदं ध्वंसप्रतियोगित्वानुमानं प्रत्यभिज्ञानबाधितमिति वाच्यम्—सोऽयं गकार इति प्रत्यभिज्ञानस्य सेयं दीपज्वालेति प्रत्यभिज्ञानेन तुल्यत्वात् भ्रान्तिरूपत्वेन बाधासिद्धेः ।

[38] ननु नैवं भवति ; प्रकृतप्रत्यभिज्ञानस्य पश्चात्तनबाधादर्शनेन भ्रान्तित्वग्राहकाभावेन स्वतः प्रमात्वादिति चेत्—ज्वालाप्रत्यभिज्ञायामपि प्रामाण्यं तुल्यमस्तु ॥ ननु ज्वालायामबाधितप्रत्यभिज्ञानं नास्ति ; दीर्घत्वह्रस्वत्व-क्रमिकविभिन्नवर्तितैलभागजन्यत्वादिविरुद्धधर्मसमावेशेन पूर्वोत्तरज्वालयोर्भेदानुमानेनाभेदग्राहिप्रत्यभिज्ञानस्य तस्य बाधितत्वात् । अन्यथा विरुद्धधर्मसमावेशेऽपि बाधास्वीकारे भेदव्यवहारः कुत्रापि न स्यात् ; व्यवहारनिमित्तस्य भेदस्याभावात् । आकस्मिकत्वे तु व्यवहारस्य, सर्वत्र सर्वदा भेदव्यवहारापत्तिरिति चेत्— ज्वालायामिव शब्देऽपि तीव्रत्व-तीव्रतरत्व - मन्दत्व-मन्दतरत्व - प्रतिकण्ठवैजात्यरूपविरुद्धधर्मसमावेशेन भेदग्रहणादबाधितप्रत्यभिज्ञानासत्त्वं तुल्यम् ।

[39] ननु तीव्रत्वादिकं शब्दे न स्वाभाविकमिति चेन्न—स्वाभाविकत्वनिश्चायकस्य हेतोरन्यत्र सिद्धस्यात्रापि तुल्यरूपं सत्त्वात् । अपां शैत्यं द्रवत्वं च स्वाभाविकम् ; तेजस औष्ण्यं भास्वरत्वं च तथेत्यादौ प्रत्यक्षं विहाय हि नान्यत्प्रमाणम् । तदत्राप्यविशिष्टम् ; शब्दस्य तीव्रत्वादिमत्तायाः प्रत्यक्षत्वात् ॥ नन्वबादौ तत्र शैत्यं तथा स्वाभाविकमेव युज्यते । अन्यथा यादृशोपाधिगतं

१ अयं प्रकाशानुसारी पाठः । बोधन्यनुसारे बाधितत्वादिति पदं नास्ति विरुद्धधर्माध्यस्तत्वादिति पाठ इत्यूह्यते ।

२ तुल्यं शब्देपीति वाक्यच्छेदः, ख. पु० । शब्देऽपीत्यस्योत्तरत्रान्वयो बोधन्याम् ।

[40] तथाऽप्यतीन्द्रियान्यधर्मत्वशङ्का स्यादिति चेत्—एतदपि तादृगेव ॥ तत् किं यन्निष्ठत्वेन यदुपलभ्यते, तस्यैव स धर्मः? नन्वेवं पीतः शङ्खः, रक्तः स्फटिकः, नीलः पट इत्यपि तथा स्यात्; अविशेषात्। न; पीतत्वादीनामन्यधर्मत्वस्थितौ शङ्खादीनां च तद्विरुद्धधर्मत्वे स्थिते, जपाकुसुमाद्यन्वयव्यतिरेकानुविधानाच्च बाधेन भ्रान्तत्वावधारणात्। न चेह तार-तारतरत्वादेरन्यधर्मत्वस्थितिः; नापि शुकशारिकादिगकाराणां तद्विरुद्धधर्मत्वम्; नाप्यन्यस्य तद्धर्मिणोऽन्वयव्यतिरेकावनुविधत्ते ॥ तथाऽपि शङ्का स्यादिति चेत्—एवमियं सर्वत्र। तथा च न क्वचित् १ कस्यचित् किञ्चित्कुतश्चित् सिद्ध्येत् ॥ न चैतच्छङ्कितुमपि शक्यते; अप्रतीते संस्काराभावात्; संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात् ॥

---

शैत्यादिकमबादावारोपितमिति वक्तव्यम्, तादृशोपाधेरदर्शनात् सर्वदाऽबादिगतत्वेनैव च शैत्यादेर्दर्शनादिति चेत्—तुल्यमिदं तीव्रत्वादावपि ॥

[40] ननूपाधिदर्शनाभावेन दृश्यमानोपाधिगतत्वाभावनिश्चयेऽपि तीव्रत्वादेरतीन्द्रियोपाधिनिष्ठत्वशङ्का स्यादिति चेत्—इदमपि पूर्वोक्ततुल्यमेव; शैत्यादेरप्यतीन्द्रियोपाधिनिष्ठत्वशङ्कासम्भवात् ॥ ननु—तर्हि किं यन्निष्ठत्वेन यद् दृश्यते, तन्निष्ठत्वेनैव तत् स्वीक्रियते? एवं खलु सति पीतः शंखः, रक्तः स्फटिकः, नीलः पट इति दृश्यमानं पीतादिरूपमपि पाण्डरे शंखादौ स्वाभाविकं स्यात्; तद्गतत्वेनैवोपलभ्यमानत्वात्—इति चेन्न—वैषम्यात्। पीतरक्तनीलरूपाणां पितद्रव्य-जपाकुसुम-रञ्जकनीलद्रव्यनिष्ठत्वस्य, शंखादीनां तद्विरुद्धपाण्डररूपकत्वस्य च निश्चयात्, उक्तपितद्रव्याद्युपाध्यन्वयव्यतिरेकानुविधानदर्शनाच्च पीतःशंख इत्यादेर्बाधितार्थविषयकतया भ्रमत्वावधारणात्। तद्वदिह तारत्वादेरन्यधर्मत्वस्य, शुकशारिकादिगकारेषु तारत्वादिप्रकृतसकलधर्मविरुद्धधर्मकत्वस्य, तारत्वाद्युक्तधर्मवद्वस्त्वन्तरान्वयव्यतिरेकानुविधानस्य चाग्रहणात् ॥ ननु तथाऽप्यगृहीतमपीदं सर्वं शङ्क्यत इति चेत्—इयं निर्हेतुकशङ्का सर्वत्र सम्भाविनी। तथा च कस्मादपि मानात्किमपि वस्तु कुत्रापि न निश्चीयेत; अतश्च कस्मादपि हेतोः कुत्रापि विषये कस्यापि पुंसः प्रवृत्तिनिवृत्त्यादिकं किमपि न स्यात्; सर्वत्र सर्वस्यौपाधिकत्वशङ्कासम्भवात् उपाधित्वेनाभिमतेऽपि तदसद्भावशङ्कयाऽनवस्थाप्रसङ्गात् ॥ वस्तुतस्तारत्वादेरन्यधर्मत्वं शङ्कितुमपि न शक्यते। तथाहिसति पितद्रव्यगतं पीतरूपादिकमिवान्यगतं तारत्वादिकमत्राऽऽरोपणीयम्।

---

१ कस्यचिदिति पदं क. ख. पु० नास्ति। बो. 'क्वचिदपि.... कुतश्चित्प्रमाणात्। कस्यचिद्धर्मिणः कश्चिद्धर्म इति न स्यात्। यद्वा कस्यचित्प्रमातुः किञ्चित्प्रवृत्तिनिवृत्त्यादिकं न सिद्ध्येदिति।

**[41] न च ध्वनिधर्मा एव गृह्यन्ते ; स्पर्शाद्यनन्तर्भावेण भावेषु त्वगादीनामव्यापारात् न च श्रवणेनैव तद्ग्रहणम् ; अवायवीयत्वेन तस्य वायुधर्माग्राहकत्वात् चक्षुर्वत् । तार-तारतरत्वादयो वा न वायुधर्माः श्रावणत्वात् कादिवत् । वायुर्वा न श्रवणग्राह्यधर्मा मूर्तत्वात् पृथिवीवत् ॥ यदि च नैवम् ; कादीनामपि वायवीयत्वप्रसङ्गः ॥ ततः किम् ? अवयविगुणत्वेऽनित्यत्वम् ; परमाणुगुणत्वेऽग्रहणम् । द्वयमप्येतदनिष्टं भवतः ॥ अवश्यं च श्रवसा ग्राह्यजातीयगुणवता भवितव्यम् , बहिरिन्द्रियत्वात् घ्राणादिवत् ॥**

---

न चास्मर्यमाणमारोप्येत । न च संस्काराभावे धर्मस्योपनयः (उपस्थितिः—स्मरणम्) । न चाननुभूते संस्कारः । अतोऽस्य तारत्वादेः प्रागन्यत्र प्रतीतिरपेक्षिता । तदभावादत्रारोपो दुष्करः ।

[41] न च गकारग्रहणकाले सहैवानुभूयमानास्तारत्वादयो गकारे आरोप्यन्ते इति वाच्यम्—अन्यधर्मत्वे तारत्वादेर्ग्रहणायोगात् । तथा हि—तारत्वाद्याश्रयाः ध्वनयः किं वायवीयाः किं वा नाभसाः ? नाद्यः ; तथा सति तेषां तारत्वादीनां किं त्वगादीन्द्रियान्तरैर्ग्रहणम् उत श्रवसैव । न प्रथमः, त्वगादिग्राह्यतया ये व्यवस्थिताः स्पर्शादयस्तेष्वनन्तर्भावेणेषु स्पर्शादिसाहित्येनागृह्यमाणेषु तारत्वादिष्वर्थेषु तेषामप्रवृत्तेः । न द्वितीयः ; श्रवसो वायुप्रकृतिकत्वाभावेन वायवीयगुणजातीयगुणवत्त्वाभावेन वायुधर्मग्राहित्वाभावात् ; श्रवणं न वायुधर्मग्राहकम् अवायवीयत्वात् चक्षुर्वदिति । एवं तारत्वादयो न वायुधर्माः श्रावणत्वात् ककारादिवत् ; वायुर्न श्रवणग्राह्यधर्मको मूर्तत्वात् पृथिवीवदित्यनुमानाभ्यां तारत्वादेर्ध्वनिधर्मत्वासिद्धिश्च । यदि चानुमानयोरनयोरप्रयोजकत्वं , तर्हि ककारादीनामपि वायवीयत्वापत्तिः ॥ 'ततः किं, तावताऽपि तारत्वादेरौपाधिकत्वानिषेधा'दिति चेत्—कादेर्नित्यत्वस्य ग्राह्यत्वस्य च भवदिष्टतयाऽवयविभूतवायुगुणत्वेऽनित्यत्वापत्तिः , वायुपरमाणुगुणत्वे चाग्रहणापत्तिरिति भवदनिष्टप्रसङ्गः ॥ यदपि प्राथमिकमनुमानं तदपि नाप्रयोजकम् ; श्रवणं ग्राह्यजातीयगुणवत् बहिरिन्द्रियत्वात् ग्राह्यगन्धादिजातीयगन्धादिमद्घ्राणादिवदिति श्रवणे ग्राह्यजातीयगुणवत्त्वस्य सिद्धतया तारत्वादेर्वायवीयध्वनिधर्मत्वे श्रवणे तारादिध्वनिजातीयगुणाभावेन तारत्वादिग्रहणासम्भवात् ।

[ननु तदर्थं श्रवणस्यापि वायवीयत्वाङ्गीकारात् प्राथमिकहेतुरसिद्धः । न च तर्हि त्वगिन्द्रियवत् स्पर्शग्राहितापत्तिः ; इन्द्रियाणां ग्राह्यजातीयगुणवत्त्वस्योक्ततया त्वचि स्पर्शस्य, श्रवणे ध्वनेश्चैव स्थितिकल्पनाद्व्यवस्थोपपत्तेः—इति चेत्—न—एवं तर्हि बहिरिन्द्रियाणां स्वगतगुणजातीयतदधिकरणद्रव्य-तत्समानाधिकरणगुणक्रियादियोग्यग्राहिताया एव सत्त्वेनान्यादृशककारादिग्राहकत्वासम्भवात् । त्वन्मते वर्णानां, वायवीयत्वे अवयविशब्दस्य तात्वादिव्यापारकृतस्यावयवशब्दाजन्यत्वेन रूपादिषु विशेषगुणेषु दृष्टायाः व्यवस्थाया भङ्गेन अवयवावयविध्वनेकतव्यक्तिद्वस-

[42] सन्तु ध्वनयोऽपि नाभसाः । तथा च तद्धर्मग्रहणं श्रवसोपपत्स्यत इति चेन्न—तारस्तारतरो वाऽयं गकार इत्यत्र ध्वनीनामस्फुरणात् । न च व्यक्त्या विना सामान्यस्फुरणम् कारणाभावात् । व्यक्तिस्फुरणसामग्रीनिविष्टा हि जातिस्फुरणसामग्री ॥ कुत एतत् । अन्वयव्यतिरेकाभ्यां तथाऽवगमात् ; ऐन्द्रिकेष्वेव घटादिषु सामान्यग्रहणात् ; अतीन्द्रियेषु च मनःप्रभृतिष्वग्रहणात् ॥ स्वरूपयोग्यतैव तत्र निमित्तम् ; अकारणं व्यक्तियोग्यतेति चेत्—एवं तर्हि सत्ताद्रव्यत्वपार्थिवत्वादीनां स्वरूपयोग्यत्वे परमाण्वादिष्वपि ग्रहणप्रसङ्गः ; अयोग्यत्वे घटादिष्वपि तदनुपलम्भापत्तिरिति दुरुत्तरं व्यसनम् । तस्माद्व्यक्तिग्रहणयोग्यतान्तर्गतैव जातिग्रहणयोग्यतेति तदनुपलम्भे जातेरनुपलम्भ एव ॥

---

प्रागभावादिकल्पनागौरवेण च लाघवान्नित्यत्वस्यावायवीयत्वस्य च स्वीकृततया तेषामग्रहणप्रसङ्गात् । न च तद्वस्तुग्रहणार्थमेव श्रोत्रकल्पनान्नायं दोष इति वाच्यम्—श्रोत्रस्य वायवीयत्वे, तीव्रादिध्वनीनां च तथात्वे तद्ग्राहितयैव श्रोत्रसिद्ध्यौचित्येन नित्यवर्णग्रहणान्यथानुपपत्त्या तत्कल्पनाऽभावात् । अतो नित्यवर्णग्राहकं श्रोत्रमवायवीयमेवाभ्युपेतव्यमिति तस्य पारिशेषात् नभोगुणवर्णग्राहित्वाच्च नभोरूपस्य न वायवीयध्वनितद्गततीव्रत्वादिग्राहकता । न चावायवीयत्वेऽपि तद्ग्राहित्वम् ; बाहिरिन्द्रियत्वहेतुना ग्राह्यजातीयगुणवत्त्वावश्यकतायाः उक्तत्वात् तदभावे च तद्ग्रहणासम्भवात् ॥]

[42] अस्तु तर्हि द्वितीयः पक्षः—वर्णवत् ध्वनयोऽपि नाभसा इति । एवं च नाभसध्वनिगततीव्रत्वाद्यारोपेणैवोपपत्तौ वर्णानां लाघवेन नित्यत्वसिद्धिः । नभोगुणत्वाङ्गीकाराच्च श्रोत्रग्राह्यत्वे पर्याप्तिरिति चेत् न तारस्तारतरो गकार इति प्रतीतौ तारत्वादेर्वर्णस्य चैव ग्रहणेन ध्वनेरस्फुरणेन तारत्वादेर्ध्वनिनिष्ठत्वाभावात् । न हि ध्वनिरूपव्यक्त्यविषयीकरणे तारत्वादिधर्मविषयीकरणं सम्भवति । प्रत्यक्षे सन्निकर्षस्य कारणतया धर्मे सन्निकर्षस्य च धर्मिद्वारैव वक्तव्यत्वेन जातिस्फुरणसामग्र्याः व्यक्तिस्फुरणसामग्र्याविष्टत्वेन घटकाभावे घटितायोगेन कारणाभावात् । ननु जातिसन्निकर्षस्य व्यक्तिसन्निकर्षघटितत्वेऽपि नैतत्सामग्र्यास्तत्सामग्रीघटितत्वम्; सामग्र्यां वस्तुयोग्यताया अपि घटकत्वात् । जातौ सन्निकर्षश्श्रोत्रेन्द्रियसंयुक्तव्यक्तिसमवायादिमात्रम् ; न त्विन्द्रियसंयुक्तयोग्यव्यक्तिसमवायः ; मानाभावात् । अतोऽयोग्यव्यक्तेरपि सन्निकर्षघटकत्वसम्भवात् एतत्सामग्र्यां तत्सामग्र्याविष्टत्वं कुतोऽवगम्यत इति चेत्–अन्वयव्यतिरेकाभ्याम् । इन्द्रियग्राह्येषु घटादिष्वेव घटत्वादिग्रहणात् अतीन्द्रियमनःप्रभृतिषु च मनस्त्वादेरग्रहणात् । ननु सामान्यप्रत्यक्षे स्वस्वरूपगतयोग्यता प्रयोजिका ; न तु व्यक्तिगतयोग्यता सन्निकर्षघटिका । अतः

**[43] तथा च न तारत्वादीनामारोपसम्भव इति स्वाभाविकत्वस्थितौ विरुद्धधर्माध्यासेन भेदस्य पारमार्थिकत्वात्प्रत्यभिज्ञानमप्रमाणमिति न तेन बाधः ॥**

**[44] नापि सत्प्रतिपक्षत्वम् ; मिथो विरुद्धयोर्वास्तवतुल्यबलत्वाभावात् । एकस्यान्यतमाङ्गवैकल्यचिन्तायामस्य वैकल्ये तस्यैव १ वाच्यत्वात् । अवैकल्ये, त्वदीयेनैव विकलेन भवितव्यमिति हीनस्य न सत्प्रतिपक्षत्वम् ॥ 'तथाऽपि नित्यः शब्दः २ अद्रव्यद्रव्यत्वादित्यत्रापि साधनदशायां किञ्चिद्वाच्य'मिति चेत्--असिद्धिः ॥**

स्वयमयोग्यत्वादेव मनस्त्वाग्रह इति चेत्--तर्हि सत्ताद्रव्यत्वपृथिवीत्वादीनां परमाणुद्व्यणुकादिद्वारकसन्निकर्षबलादपि ग्रहणापत्तिः । तदर्थं सत्तादेरयोग्यत्वस्वीकारे च घटादिष्वपि न तदुपलम्भः स्यादिति सर्वथा व्यसनादुत्तीर्णो न भविष्यसि । अतो योग्यव्यक्तिसमवायादिरेव सन्निकर्ष इति व्यक्तिग्रहणसामग्रीघटितैव जातिग्रहणसामग्रीति व्यक्तेरप्रत्यक्षे धर्मस्याप्रत्यक्षमेव ॥

[43] तस्मात्तारत्वादेरन्यधर्मत्वासिद्ध्या आरोपितत्वेन निर्वाहासम्भवात् स्वारसिकं स्वाभाविकत्वमप्रकम्प्यमिति तारत्वमन्दत्वादिविरुद्धधर्मसमावेशेन गकारेषु ज्वालास्थल इव भेदस्य वास्तवत्वात् न तेन प्रत्यभिज्ञानेनानित्यत्वरूपस्य साध्यस्य शब्दे बाध इति न बाधमादायोत्पत्तिमत्त्वरूपहेतोर्दुष्टत्वमिति ।

[44] एवं सत्प्रतिपक्षमादायापि न दुष्टत्वम् ; उक्तहेतोः प्रतिपक्षहेतोश्च द्वयोरपि पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाख्यरूपत्रयवत्त्वरूपबलवत्त्वं हि तावन्न भवति ; साध्यतदभावयोरिव तद्व्याप्ययोरपि विरोधेनैकत्र समावेशासम्भवात् । एवञ्चास्मद्धेतोः पक्षसत्त्वादिवैकल्यमवैकल्यं वा । आद्ये, तदेव वैकल्यमुच्यताम् ; किं तदधीनसत्प्रतिपक्षत्ववचनेन । अन्त्ये, त्वदुक्तहेतोर्वैकल्यमावश्यकमिति दुर्बलस्य न समीचीनप्रतिपक्षत्वम् । ननु त्वदुक्तहेतुदूषणदशायां अस्माभिरन्यतमाङ्गवैकल्यस्य वाच्यत्वेऽपि यदाऽस्माभिः स्वपक्षसाधनं क्रियते, तदाऽत्र साधनदशायामपि त्वया, अस्मत्कृतसत्प्रतिपक्षोद्भावनदशायां 'अङ्गवैकल्यमुद्भाव्यता'मिति यथोक्तं तथा, किञ्चिदङ्गवैकल्यं वाच्यम् । न चेत्, अर्थसिद्धं त्वदुक्तहेतोर्वैकल्यम् । आस्माकः साधनप्रकारश्च शब्दस्य द्रव्यत्वाङ्गीकारेण, गुणत्वस्वीकारेण, तदुभयविषयौदासीन्येन वा त्रेधा भवति । तत्र प्रथम इत्थम्--शब्दो नित्यः द्रव्यानाश्रितत्वे सति द्रव्यत्वादिति । द्रव्यत्वमात्रोक्तौ घटादौ व्यभिचार इति विशेषणम् । द्रव्यानाश्रितत्वं च द्रव्यासमवेतत्वम् । अन्यथा सर्वस्य कालिक-

१ अयं क. २. पाठः । पा०. उद्भाव्यत्वात् । बो, 'अतोऽन्यतरस्य वैकल्यं तदेव दूषणं वाच्यम् उपजीव्यत्वात्' ।

२ न विद्यते द्रव्यं समवायि यस्य तदद्रव्यं, तादृशद्रव्यत्वादित्यर्थः ।

[45] द्रव्यं शब्दः साक्षात्सम्बन्धेन गृह्यमाणत्वाद्घटवदिति सिद्ध्यतीति चेन्न—एतस्याप्यसिद्धेः। न हि श्रोत्रगुणत्वे द्रव्यत्वे वाऽसिद्धे साक्षात्सम्बन्धे शब्दस्य प्रमाणमस्ति॥ 'परिशेषोऽस्ति। तथा हि—सदाद्यभेदेन सामान्यादित्रयव्यावृत्तौ मूर्तद्रव्यसमवायनिषेधेन कर्मत्वनिषेधात् द्रव्यगुणत्वपरिशेषे संयोगसमवाययोरन्यतरः सम्बन्ध' इति चेन्न—बाधकबलेन परिशेषे द्रव्यत्वस्यापि निषेधाल्लिङ्गग्राहकप्रमाणबाधापत्तेः। बाधके सत्यपि वा द्रव्यत्वाप्रतिषेधे कर्मत्वादीनामप्यप्रतिषेधप्रसक्तौ परिशेषासिद्धेः। तस्मादेकदेशपरिशेषो न प्रमाणम्। सन्देहसङ्कोचमात्रहेतुत्वात्॥ अथ द्रव्यत्वे किं बाधकम्? उच्यते- शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वाद्रूपादिवत्। इति परिशेषाद्गुणत्वेन १ समवायि(य)सिद्धौ लिङ्गग्राहकप्रमाणबाधितत्वान्नाव्यवहितसंबन्धग्राह्य-

---

सम्बन्धेन कालवृत्तितयाऽसिद्धिप्रसङ्गात्। एवं च प्रागभावे व्यभिचार इति विशेष्यदलमिति चेत् पक्षसत्त्वरूपाङ्गवैकल्यं त्वदीयहेतोरिति।

[45] ननु शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धेन गृह्यमाणत्वात् घटवदित्यनुमानेन द्रव्यत्वसिद्धिरिति चेत्—साक्षात्सम्बन्धो हि संयोगसमवायान्यतरो विवक्षितः। द्रव्यत्वश्रोत्रगुणत्वान्यतरासिद्धौ च सोऽपि न सिद्ध्यतीति हेत्वसिद्धिः स्यादिति तत्र प्रमाणमुपन्यस्यताम्॥ 'नन्वस्ति परिशेषानुमानम्। तेन द्रव्यगुणान्यतरत्वे सिद्धे उक्तपूर्वेण द्रव्यत्वमनुमीयते। एवं हि परिशेषः शब्दो न सामान्यादित्रयं, नाप्यभावः; सत्त्वशब्दत्वरूपसामान्यविशेषवदभिन्नत्वात्। न च कर्म, मूर्तद्रव्यासमवेतत्वा'दिति चेन्न—एवं युक्त्याऽन्यतरपरिशेषे द्रव्यत्वस्यापि हेत्वन्तरेण निषेधसम्भवात् साक्षात्सम्बन्धेन गृह्यमाणत्वरूपलिङ्गग्राहकप्रमाणेन परिशेषेण नित्यत्वसाधकद्रव्यत्वरूपलिङ्गग्राहकप्रमाणस्य पूर्वोक्तहेतोर्बाधितत्वरूपदुष्टत्वापत्तेः। सत्यपि हेतौ द्रव्यत्वानिषेधश्चेत्, कर्मत्वादेरप्यनिषेधात् 'द्रव्यं गुणः कर्म सामान्यादिर्वा शब्द' इति सन्देहानपायाद्धेत्वसिद्धिः। तस्मादेकांशपरिशेषो न प्रमाणम्। परं तु सन्देहे किञ्चित्कोटिमात्रव्यावर्तनं स्यात्। किं तेन? अथ द्रव्यत्वनिषेधे किं प्रमाणमिति चेत्—शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवदित्यनुमानम्। व्यवस्थाहेतुत्वं च अन्योन्येन्द्रियभेदानुमापकोपलब्धिविषयत्वम्। रूपरसगन्धस्पर्शशब्दा हि स्वग्राहिणामिन्द्रियाणां मिथो भेदं स्थापयन्तीति। एवं परिशेषात् गुणत्वस्य, तत एव किञ्चिद्धर्मिणि समवायस्य च सिद्धिः; न तु द्रव्यत्वस्य; साक्षात्सम्बन्धेन गृह्यमाणत्वरूपलिङ्गग्राहकपरिशेषप्रमाणेन शब्दे द्रव्यत्वनिषेधेन तस्य लिङ्गस्य बाधरूपदोषदूषितत्वात्। एवं च

---

१ यद्यपि द्रव्यत्वासिद्धिकथनमेव प्रकृतम्—तथाऽपि परिशेषात् गुणत्वस्य अत एव समवायेन तदाधारस्य च सिद्धिकथनं हेतुघटकस्य अद्रव्यकत्वांशस्याप्यसिद्धिसूचनार्थम्।

**त्वेन द्रव्यत्वसिद्धिः । न चासिद्धेन सत्प्रतिपक्षत्वम् ; असिद्धस्य हीनबलत्वात् ॥**

[46] **ननु शब्दस्तावद[1]श्रोत्रगुणो नैवेति त्वयैव साधितं प्रबन्धेन । न च श्रोत्रगुणः, तेन गृह्यमाणत्वात् । यद् येनेन्द्रियेण गृह्यते, नासौ तस्य गुणः ; यथा गृह्यमाणो गन्धादिः । श्रोत्रं वा न स्वगुणग्राहकम् इन्द्रियत्वात् घ्राणवत् इति न गुणत्वासिद्धिरिति चेत्—ततः किम् ? न चैतदपि ; घ्राणादिसमवेतगन्धाद्यग्रहे स्वगुणत्वस्याप्रयोजकत्वात् । [2] अयोग्यत्वं हि तत्रोपाधिः ।**

---

द्रव्यासमवेतत्वरूपविशेषणं द्रव्यत्वरूपविशेष्यं चासिद्धमिति तस्य हीनबलत्वान्न साधकत्वमिति न सत्प्रतिपक्षत्वम् ॥

[46] ननु शब्दः श्रोत्रातिरिक्तगुणो न भवतीति नैयायिकैरेव विस्तरेण साधितमस्ति । वयमत्र श्रोत्रगुणत्वमनुमानद्वयेन निषेधामः—शब्दो न श्रोत्रगुणः तद्ग्राह्यत्वात् । यत् यद्ग्राह्यं, न स तद्गुणः ; यथा घ्राणादिग्राह्यो गन्धादिः । न हि घ्राणनिष्ठो गन्धो गृह्यते ; किं तु बाह्य इति । एवं श्रोत्रं न स्वगुणग्राहकं इन्द्रियत्वात् घ्राणवदिति । एवञ्च न तस्य गुणत्वसिद्धिरिति चेत्—अस्तु तदसिद्धिः । ततः किम् ? द्रव्यत्वनिषेधः किल प्रकृतः । तत्र च हेतोर्न दुष्टत्वमिति । नन्वनेन गुणत्वासिद्धौ द्रव्यत्वनिषेधकानुमानं दुष्टं स्यादिति चेत्—न—गुणत्वासिद्ध्यभावात् । योग्यत्वमयोग्यत्वं च हि विषयनिष्ठमिन्द्रियनिष्ठं चेति द्विविधम् । तत्रायोग्यत्वं विषयनिष्ठमिन्द्रियनिष्ठं चाग्रहणे प्रयोजकमिति हेत्वोरप्रयोजकत्वमिति । तथा हि—प्रथमेऽन्वयव्यतिरेक्यनुमाने यो यद्गुणः, स न तद्ग्राह्य इति व्यतिरेकव्याप्तिस्तावन्न भवति ; तत्रायोग्यत्वस्योपाधित्वात् । न ह्यग्राह्यत्वे घ्राणादिगुणत्वं प्रयोजकम् ; अपि त्वयोग्यत्वम् । तद्गुणोऽतद्गुणो वाऽयोग्यश्चेन्न गृह्यत इति । एवं चातद्ग्राह्यत्वस्य तद्गुणत्वव्यापकत्वाभावे तद्ग्राह्यत्वस्य व्यापकाभावरूपत्वाभावेन अतद्गुणत्वस्य च व्याप्याभावरूपत्वाभावेन यत् येनेन्द्रियेण गृह्यते नासौ

---

[1] पा० **शब्दश्श्रोत्रगुणो नैवेति त्वयैव साधितं प्रबन्धेन ; न श्रोत्रगुणः** इति । बो. 'केचित्तु शब्दः श्रोत्रगुणो नेति पठन्ति । तत्रायमर्थः-महता प्रबन्धेन शब्दस्य श्रोत्रग्राह्यत्वं प्रतिपादयता त्वयैव श्रोत्रगुणो नेति साधितं भवति । कथमेतेनैतत्प्रतिपादितं भवेदित्यत्रोक्तं, **न श्रोत्रगुण** इति' । [2] प्रकाशे, 'प्रथमानुमाने श्रोत्रयोग्यगुणत्वव्याप्यजातिशून्यत्वमुपाधिः, अन्त्यानुमाने त्वयोग्यगुणकत्वमुपाधिरित्यप्रयोजकत्वमुभयत्रे'त्युक्तम् । अत्र प्रथमोपाधिर्मूलदर्शितसामान्यमुखव्याप्त्यन्तर्गतसाध्यप्रयोजको न भवति । मूले, '**गृह्यते तु योग्यो योग्येने**'ति । विषयकरणयोर्योग्यत्वकथनानुसारेण यथाश्रुतमयोग्यत्वं स्वीकृत्य **विस्तरोक्तमत्र** साधु भाव्यम् ।

[47] **अन्यथा—सुखादिर्नात्मगुणः तेन गृह्यमाणत्वात् रूपादिवत् । न वा तेन गृह्यते तत्समवेतत्वाददृष्टवत् । आत्मा वा न तद्ग्राहकः तदाश्रयत्वात् गन्धाद्याश्रयघटादिवदित्याद्यपि शङ्क्येत । तस्मात् स्वगुणः परगुणो वाऽयोग्यो न गृह्यते ; गृह्यते तु योग्यो योग्येन । तत् किमत्रानुपपन्नम् ॥**

[48] **अवश्यं च श्रोत्रेण विशेषगुणग्राहिणा भवितव्यम् इन्द्रियत्वात् । अन्यथा तन्निर्माणवैयर्थ्यात् । १ तदन्यस्येन्द्रियान्तरेणैव ग्रहणात् । न च द्रव्याविशेषग्रहणे तदुपयोगः ; २ विशेषगुणयोग्यतामाश्रित्यैवेन्द्रियस्य द्रव्यग्राहकत्वात् ; न द्रव्यस्वरूपयोग्यतामात्रेण । अन्यथा चान्द्रमसं तेजः स्वरूपेण योग्यमिति तदप्युपलभ्येत ; आत्मा वा मनो-**

तद्गुण इति व्याप्तिरपि न भवतीति तद्ग्राह्यत्वहेतुनाऽश्रोत्रगुणत्वसाधनं तावन्न भवति ; साध्याभावे हेत्वभावाप्रयोजकत्वस्योपवर्णिततया हेतौ साध्याव्याप्यत्वस्यापि सिद्धत्वात् ॥ एवं द्वितीयानुमाने इन्द्रियनिष्ठं स्वगुणग्रहणविषये अयोग्यत्वमुपाधिः ; स्वगुणग्राहकत्वाभावरूपसाध्यं यत्र, तत्र तद्विषयेऽयोग्यत्वस्य सत्त्वात् ; श्रोत्रे चेन्द्रियत्वरूपहेतुमति शब्दे प्रत्ययोग्यत्वस्याभावाच्च ।

[47] **अन्यथा** अयोग्यत्वस्यानुपाधित्वे, 'सुखादिर्नात्मगुणः तद्ग्राह्यत्वात् ; यो यद्ग्राह्यः, स न तद्गुणः यथा रूपादिः । सुखादिर्नात्मग्राह्यः आत्मसमवेतत्वाददृष्टवत् । यद्वा आत्मा न सुखादिग्राहकः तदाश्रयत्वात् ; यो यदाश्रयः स न तद्ग्राहकः ; यथा गन्धाद्याश्रया घटादि'-रित्याद्यनुमानमपि साधकतया शङ्क्येत । अत्र प्रथमानुमानीयव्यतिरेकव्याप्तिर्द्वितीयेन दर्शिता। तत्र वस्तुनिष्ठमयोग्यत्वं, उत्तरानुमाने कारणनिष्ठमयोग्यत्वं च ह्युपाधिः ; तथैव त्वदुक्तेऽपीति । तस्मात्स्वगुणः परगुण इति न विशेषः । अयोग्यत्वे न ग्रहणम् । योग्यं चेद्वस्तु, कारणं च यदि योग्यम्, तर्हि तत्तेन गृह्यत एव । अतो गुणत्वबाधकानुमानयोर्दूषितत्वात् अस्मदुक्तद्रव्यत्वनिषेधकानित्यत्वसाधकहेत्वोर्मध्ये किमनुपपन्नमस्ति ?

[48] न केवलं गुणत्वे बाधकाभावः ; साधकमप्यस्ति । श्रोत्रं विशेषगुणग्राहि इन्द्रियत्वात् इत्यनुमानेन साध्यमानं विशेषगुणग्राहित्वं क्लृप्तानां विशेषगुणानां श्रोत्राग्राह्यत्वात् परिशेषाच्छब्दमेव विशेषगुणमादाय पर्यवस्यतीति । विशेषगुणग्राहित्वानङ्गीकारे च श्रोत्रेन्द्रियवैयर्थ्यादिन्द्रियत्वमेव न स्यादिति नाप्रयोजकत्वम् । न ह्यन्यो विशेषगुणोऽनेन ग्राह्यः ; तस्य रूपादेश्चक्षुरादिग्राह्यत्वात् । न च ध्वन्यात्मकशब्दग्रहणादुक्तानुमानेऽर्थान्तरप्रसक्तिः ; वर्णात्मकशब्दन्यायेन त्वन्मते तत्रापि नित्यत्वद्रव्यत्वासिद्धौ दोषाभावात् । न च शब्दरूपद्रव्यग्राहितयैव तत्क्लृप्तिरिति

१ अत्र तदर्थस्येति प्रतीकं कृत्वा श्रोत्रविषयस्य शब्दस्येति बोधन्यां व्याख्यातम् । तदनुगुणो मूलपाठो मृग्यः । २ विशेषणयोग्यतां क. ख. पा० ।

**ग्राह्य इति सुषुप्त्यवस्थायामप्युपलभ्येत; अनुद्भूतरूपेऽपि वा चक्षुः प्रवर्तेत । तस्मात् गुणयोग्यतामेव पुरस्कृत्येन्द्रियाणि द्रव्यमुपाददते; नातोऽन्यथेति स्थितिः । अत एव नाकाशादयश्चाक्षुषाः ॥**

**[49] अस्तु तर्हि शब्दो नित्यः नित्याकाशैक[1]गुणत्वात् तद्गतपरममहत्[2]परिमाणवदिति प्रत्यनुमानमिति चेन्न—अकार्यत्वस्योपाधेर्विद्यमानत्वात् । अन्यथा—आत्मविशेष-**

---

न विशेषगुणग्राहित्वमावश्यकमिति वाच्यम्—शब्देन श्रोत्रसाधने शब्दगतद्रव्यत्वगुणत्वादेरनपेक्षितत्वेनान्येन्द्रियाग्राह्यशब्दग्राहितया श्रोत्रसिद्धौ तस्य द्रव्यत्वगुणत्वान्यतरविचिकित्सायां इन्द्रियाणां विशेषगुणयोग्यतामपेक्ष्यैव द्रव्यग्राहकत्वदर्शनात्, 'तदिन्द्रियजन्यद्रव्यप्रत्यक्षत्वं यत्र, तत्र तद्योग्यविशेषगुणविषयकत्व'मिति नियमसद्भावात् गुणयोग्यतारूपसहकार्यभावे द्रव्ययोग्यतामात्रेण द्रव्यग्राहकत्वाभावात् श्रोत्रस्य विशेषगुणग्राहित्वावश्यकतापरामर्शात् । अन्यथा द्रव्ययोग्यतामात्रस्य कार्यकरत्वे—चन्द्रकिरणानामनुद्भूतस्पर्शानामपि त्वाचप्रत्यक्षापत्तिः । आत्मनश्च मनोग्रहणयोग्यत्वात् ज्ञानादिविशेषगुणाभावकाले सुषुप्तावपि केवलतदुपलम्भापत्तिः । अनुद्भूतरूपकं कापालपावकादिकमपि चक्षुषा गृह्येत । तस्मात् गुणयोग्यतां सहकारीकृत्यैवेन्द्रियाणां द्रव्यग्राहित्वम्; न तद्भिन्नप्रकारेणेति वस्तुस्थितिः । एवं गुणयोग्यतारूपसहकार्यभावादेव नीरूपाकाशादीनां सत्यपि सन्निकर्षेऽचाक्षुषत्वम् । एवं च शब्दस्य द्रव्यत्वे श्रोत्रग्राह्यगुणान्तराभावेन न तस्य ग्राह्यत्वम् ।

[न च तीव्रत्वमन्दत्वादिरेव गुणः; तस्य वर्णनिष्ठत्वस्य त्वदनभिमतत्वात् । न च—अतन्निष्ठत्वेऽपि न दोषः; द्रव्यविषयकप्रत्यक्षस्य तद्वृत्तिगुणविषयकत्वमिति नियमाभावात्; यत्किञ्चिद्गुणविषयकत्वमित्येव नियमात् । अत एव नीलं नभः, पीतः शंखः इत्यादिप्रतीतिः—इति वाच्यम् । तीव्रत्वादेर्गन्धरसादावपि सत्त्वेनागुणत्वात्, गुणे गुणानङ्गीकारात्, यन्निष्ठं तीव्रत्वादिसामान्यं तस्याः व्यक्तेरग्रहणे तस्य सामान्यस्य ग्रहणासम्भवस्य प्रागुक्तत्वात् । अतो न तत्पुरस्कारेण वर्णग्रहणसम्भवः । एतेन ध्वनेर्विशेषगुणत्वस्वीकारेण विशेषगुणग्राहित्वसमर्थनेऽपि न निस्तारः; गुणयोग्यतारूपसहकार्यभावेन वर्णग्रहणासम्भवात् ।]

अतः सिद्धं वर्णस्य गुणत्वम् । तस्माद्द्रव्यद्रव्यत्वरूपहेतुरसिद्ध इति ॥

[49] अस्तु तर्हि शब्दस्य गुणत्वस्वीकारेण द्वितीयः प्रकारः, शब्दो नित्यः नित्याकाशैकगुणत्वात् तन्निष्ठपरममहत्त्वाख्यपरिमाणवदिति । अत्र गुणत्वं द्वित्वादावप्यस्ति एकगुणत्वमुक्तम् । तच्चैक-

---

१ ध्वंसानवच्छिन्नसत्तायोगित्वं साध्यं, विशेषवारणाय गुणपदमिति, प्र. । गुणपदमप्रधानार्थकमिति मकरन्दे । २ तद्गतं परममहतः परिमाणं तदिवेति विग्रहः ।

गुणा नित्याः तदेकगुणत्वात्तद्गतपरममहत्त्ववदित्यपि स्यात्। 'अस्य प्रत्यक्षबाधितत्वाद्-हेतुत्व'मिति चेन्न—निरुपाधेर्बाधानवकाशात्। स्वभावप्रतिबद्धस्य च तत्परित्यागे स्वभावपरित्यागप्रसङ्गात्। तस्माद्बाधेन वोपाधिरुन्नीयते, अन्यथा वेति न कश्चिद्विशेषः॥

[50] एतेन श्रावणत्वाच्छब्दत्ववदित्यपि परास्तम्; अत्रापि तस्यैवोपाधित्वात्। अन्यथा गन्धरूपरसस्पर्शा अपि नित्याः प्रसज्येरन्; घ्राणाद्येकैकेन्द्रियग्राह्यत्वात् गन्धत्वादिवदित्यपि प्रयोगसौकर्यात्॥

[51] विरोधव्यभिचारावसंभावितावेवातोऽत्यसिद्धिरेव १ शिष्यते। साऽपि नास्ति। तथा हि—शब्दस्तावत् 'पूर्वोक्त२न्यायेन स्वाभाविकतीव्रमन्दतरतमादिभावेन प्रकर्षनि-

---

मात्रवृत्तिगुणत्वम्। तत् अनित्यज्ञानादावपीति आकाशैकगुणत्वम्। तच्च आकाशमात्रवृत्तिगुणत्वम्। आकाशे नित्यत्वकथनं च शब्दस्याधारानित्यताप्रयुक्तानित्यताशङ्का नास्तीति ज्ञापनाय; न तु तस्य हेतौ प्रवेशः। आकाशमात्रवृत्तित्वादित्यलम्। गुणत्वकथनमपि प्रागुक्तद्रव्यत्वपक्षत्यागसूचनायेति चेन्न—ध्वंसाप्रतियोगित्वरूपनित्यत्वसाधनेऽनुत्पत्तिमत्त्वरूपाकार्यत्वस्योपाधित्वात्। तस्योपाधित्वाभावे आत्मविशेषगुणाः नित्याः तन्मात्रगुणत्वात् तन्निष्ठपरममहत्त्ववदित्यनुमानस्यादुष्टत्वापत्तेः। नन्वस्य हेतोर्ज्ञानाद्यनित्यत्वविषयकप्रत्यक्षेण नित्यत्वबाधाद्दुष्टत्वम्। न तूक्तोपाधिमत्त्वादिति चेन्न—पक्षे हेतुमत्त्वं स्वीकृत्य साध्यबाधे तत्रोपाधेरप्यावश्यकत्वात्। निरुपाधेर्हेतोः साध्यव्याप्यतया व्याप्यसत्त्वे साध्यबाधरूपदोषासम्भवात्। स्वाभाविकसाध्यव्याप्तिमतो हेतोः साध्यं परित्यज्य स्थितौ व्याप्यस्वभाववत्त्वहानिप्रसङ्गात्। अतोऽस्त्येव तत्रोपाधिः। स परं बाधेन वोन्नीयताम्; साध्यव्यापकत्वसाधनाव्यापकत्वग्राहकसामग्रीबलादिना वा प्रकारान्तरेण। उपाधिमत्त्वं तु सर्वथाऽविशिष्टम्। अतो नायमपि प्रतिपक्षः।

[50] अनेनैवाकार्यत्वोपाधिना शब्दो नित्यः श्रावणत्वात् शब्दत्ववदिति तृतीयप्रकारेण प्रतिपक्षवर्णनमपि परास्तम्; तस्यानुपाधित्वे, गन्धादयो नित्याः घ्राणाद्येकैकेन्द्रियग्राह्यत्वात् गन्धत्वादिवदित्यप्यनुमानप्रयोगस्य सुकरतया तेषामपि नित्यत्वापत्तिः।

[51] एवमुत्पत्तिधर्मकत्वस्याबाधितत्वमसत्प्रतिपक्षितत्वं च निरूपितम्। विरुद्धत्वव्यभिचारित्वे तु नैव सम्भवतः; अन्यत्र क्वचिदपि साध्याभावसामानाधिकरण्यादर्शनात्। अतोऽसिद्धिरेवोद्भाव्यतया शिष्यते, यदि हेत्वाभासत्वं विवक्षितम्। साऽपि किं स्वरूपासिद्धिर्व्याप्यत्वासिद्धिर्वा।

---

१ अयं क.[२] पाठः। पा० असिद्धिरवशिष्यते बो. 'असिद्धिरेव संभाव्यतया शिष्टा'।

२ प्रकाशे पूर्वोक्तेति प्रतीकधारणम्। पा० पूर्वन्यायेन, क. ख. पु०।

**कर्षवानुपलभ्यते । इयं च प्रकर्षनिकर्षवत्ता कारणभेदानुविधायिनी सर्वत्रोपलब्धा । अकारणका हि नित्याः प्रकर्षवन्त एव भवन्ति , यथाऽऽकाशादयः ; निकृष्टा एव वा, यथा परमाण्वादयः । न तु किञ्चिदतिशयानाः कुतश्चिदपकृष्यन्ते । तदियं नित्येभ्यो व्यावर्तमाना कारणवत्तु (तां) च भवन्ती जायमानतामादायैव विश्राम्यतीति प्रतिबन्धसिद्धौ प्रयुज्यते–शब्दो जायते, प्रकर्षनिकर्षाभ्यामुपेतत्वात् माधुर्यादिवत् । अन्यथा नियामकमन्तरेण भवन्ती नित्येष्वपि सा स्यात् (भवतीति नित्येऽपि स्यात्) ; नियमहेतोरभावात् ॥ शब्दादन्यत्रेयं गतिरिति चेन्न–साध्यधर्मिणं विहायेति प्रत्यवस्थानस्य सर्वानुमानसुलभत्वात् । न चेह १ व्यञ्जकतारतम्याद्व्यञ्जनीयतारतम्यम् ; अस्वाभाविकत्वप्रसङ्गात् । व्यवस्थितं च स्वाभाविकत्वम् । न च व्यञ्जकोत्पादकाभ्यामन्यस्यानुविधानमस्ति । न च स्वाभाविकत्वौपाधिकत्वाभ्यामन्यः प्रकारः सम्भवति ॥**

---

नाद्या ; प्रकर्षनिकर्षवत्तारूपहेतुनोत्पत्तिमत्त्वस्य शब्दे साधनात् । न चात्राप्यसिद्धिः ; तीव्रतीव्रतरत्व-मन्दमन्दतरत्वादेरुपलभ्यमानत्वात् । न चेदमौपाधिकम् ; उपाध्यनुपलम्भविशिष्टशब्दवृत्तित्वोपलम्भरूपहेतुना स्वाभाविकत्वस्य पूर्वोक्तत्वात् । न चात्र व्याप्त्यग्रहणम् ; यत इयं किञ्चिदवधिकप्रकर्षान्यावधिकनिकर्षोभयवत्ता कारणविशेषानुसारित्वेनैव सर्वत्र दृष्टा । अकारणकानां नित्यानां मध्ये आकाशादिषु सर्वापेक्षया प्रकर्षमात्रस्य परमाण्वादिषु च निकर्षमात्रस्य दर्शनात् । कञ्चित्पदार्थमतिशय्य कस्माच्चिदपकृष्टतयाऽवस्थित्यदर्शनात् । अतोऽन्वयवत् व्यतिरेकतोऽपि व्याप्तिरस्ति । तस्मादियं प्रकर्षनिकर्षवत्ता नित्यव्यावृत्तत्वात् कारणवदन्वयाच्चोत्पत्तिमत्त्वाविनाभूतेति व्याप्तिसिद्धिः । माधुर्यादिश्च दृष्टान्तः । अन्यथाऽप्रयोजकत्वशङ्कया व्याप्त्यस्वीकारे इयं प्रकर्षनिकर्षवत्ता कारणवैलक्षण्यमन्तरेण भवन्ती चेत्, नित्येष्वपि स्यात् ; व्यवस्थाकारणाभावात् । ननु शब्दादन्यत्रास्याः कारणवैलक्षण्यसापेक्षता ; न त्विहेति चेन्न —'पक्षं विहायान्यत्रायं नियम' इति पूर्वपक्षस्य सर्वत्रानुमाने सम्भवादनुमानोच्छेदापत्तेः । अतो नाप्रयोजकत्वमपि । न च वस्तुत इह प्रकर्षनिकर्षवत्तैव नास्ति ; किन्तु मणिकृपाणादिभेदान्मुखह्रस्वदीर्घत्वादिवत् व्यञ्जकगततारतम्याधीनव्यञ्जनीयगततारतम्यमिहापीति वाच्यम् । तर्हि तारत्वादेरत्रास्वाभाविकत्वप्रसङ्गात् । लोके तारतम्यविषये व्यञ्जकोत्पादकान्यतरातिरिक्तानुविधानस्याभावेन अन्यतरानुविधानबलेन स्वाभाविकत्वौपाधिकत्वान्यतरप्रकारस्वीकारावश्यकत्वेन तत्रौपाधिकत्वासम्भवस्योक्तत्वेन च स्वाभाविकत्वस्य प्रागेव व्यवस्थितत्वात् । अतो नोत्पत्तिमत्त्वं स्वरूपासिद्धम् ।

---

१ न चेद्व्यञ्जकेति सर्वत्र पाठः ।

[52] 'स्यादेतत्। तथाऽप्युत्पत्तेर्नित्यत्वेन को विरोधः? येन प्रतिबन्धसिद्धिः स्यात्। असिद्धे च तस्मिन्, भवतां व्यापकत्वासिद्धः, अस्माकमप्रयोजकः, सौगतानां सन्दिग्धविपक्षवृत्ति(व्यावृत्ति) रयमुपक्रान्तो हेतुः' इति चेत्-न। इदं ह्युत्पत्तिमत्त्वं विनाशकारणसन्निधिविरुद्धेभ्यो नित्येभ्यः स्वव्यापकनिवृत्तौ निवर्तमानं विनाशकसन्निधिमति विनाशिनि विश्राम्यतीति॥ 'विनाशकारणसन्निधानेनावश्यं जायमानस्य भवितव्यमिति कुतो निर्णीत'मिति चेत्— न तदसन्निधानं हि न तावदाकाशादेरिव स्वभावविरोधात्; उत्पत्तिविनाश(शक)योः संसर्गदर्शनात्। अविरुद्धयोरसन्निधिस्तु देशविप्रकर्षाद्धिमवद्विन्ध्ययोरिव स्यात्। देशयोरपि विप्रकर्षो विरोधाद्वा हेत्वभावाद्वा। पूर्वोक्तादेव न प्रथमः। द्वितीयस्तु पटकुङ्कमयोरिव स्यात्, यदि कुङ्कमसमागमादर्वागिव

[52] नन्वस्तु स्वरूपासिद्धिराहित्यम्। अथापि हेतुरस्तु, साध्यं मास्तु। न च नित्यत्वोत्पत्तिमत्त्वयोर्विरोधोऽस्ति, येन अनित्यत्वेन हेतोर्व्याप्तिसिद्धिः स्यात्। एवमसिद्धे प्रतिबन्धे तार्किकमते व्यापकत्वासिद्ध इति हेतुर्व्यवहर्तव्यः; साध्यगतेन हेतुव्यापकत्वासिद्धिरूपदोषेण हेतोर्दुष्टत्वात्। अस्माकं तु मीमांसकानां मतेऽयमप्रयोजकनामा। सौगतमते च सन्दिग्धविपक्षवृत्तिसंज्ञः; सन्दिह्यते विपक्षे नित्येऽस्य वृत्तिरिति। अतः सर्वथा हेतुर्दुष्ट इति चेन्न— यत्रोत्पत्तिमत्त्वं, तत्र विनाशकारणसान्निध्यमिति विनाशकसन्निधिस्तावदुत्पत्तिमत्त्वव्यापकः। नित्यानि विनाशकसन्निधिराहितानि। अतो व्यापकाभावादुत्पत्तिमत्त्वमपि तेभ्यो निवर्तते। विनाशकसन्निधिमत्त्वे च विनाशित्वस्यावश्यकतया उत्पत्तिमत्त्वमनित्यत्वनियतमिति॥ ननु तत्सन्निधेरुत्पत्तिमत्त्वव्यापकत्वमेव कुतो निर्णीतमिति चेत्—श्रूयताम्—उत्पत्तिमत्त्वे विनाशकासन्निधानं त्वया कुत उच्यते, किमुभयोर्विरोधमाश्रित्य किं वाऽविरोधेऽपि कारणान्तरात्? तत्र न तावत् आकाशादाविवोत्पत्तिमति तदसन्निधाने स्वभावविरोधो हेतुः; उत्पत्तिविनाशकयोः घटादिषु संसर्गदर्शनेन स्वभावविरोधासम्भवात्। न द्वितीयः; असति विरोधे विनाशकासन्निधिः हिमवद्विन्ध्यशैलयोरिव मिथो विप्रकृष्टदेशस्थत्वाद्वा विप्रकृष्टकालस्थत्वाद्वा। नाद्यः; उत्पत्तिमद्देशस्य विनाशकदेशस्य च विप्रकर्षः किं स्वभावतो विरोधात्, किं वा सन्निधापकहेत्वभावात्। न प्रथमः; उत्पत्तिविनाशकयोः क्वचिद्घटादौ सन्निधेरुक्तत्वेन स्वभावविरोधासम्भवात्। अतो द्वितीयो हेत्वभाव एव, पृथक्स्थितयोः पटकुङ्कुमयोरिव, विप्रकर्षनियामको वक्तव्यः। स च तदा स्यात्, यदि यथा कुङ्कुमसमागमात् प्रागेव पटो विनश्यति तथा विनाशकसन्निधानात् प्रागेव पटो नश्येत्। तदा किल पटदेशस्य विनाशकदेशस्य च सन्निकर्षो न भवेदिति। न च विनाशकसन्निधानात् प्राग्विनाशप्रसक्तिः; कारणाभावे कार्यासम्भवात्। कुङ्कुमसमागमं विनाऽपि तु पटविनाशः सम्भवति, तस्य तत्राहेतुत्वात्। विनाशकं विना न विनाश इतिवत् कुङ्कुमसम्बन्धं विना न विनाश इत्यपि नियमो

प्रध्वंसकसंसर्गादर्वागेव पटो विनश्येत् । यथा हि विनाशकारणं विना न विनाशः, तथा यदि कुङ्कुमसमागमं विना न विनाशः पटस्येति स्यात्, कस्तयोः संसर्गं वारयेत् । तस्मादविरुद्धयोरसंसर्गः कालविप्रकर्षनियमेन व्याप्तः । स १ चातो निवर्तमानः स्वव्याप्यमुपादाय निवर्तेत इति प्रतिबन्धसिद्धिः ॥

[53] 'स्यादेतत् । यद्येवमस्थिरश्शब्दः, कथमर्थेन सङ्गतिरस्योपलभ्यते' इति चेत्–यथैवार्थस्यास्थिरस्य २ तेन ॥ 'जातिरेव पदार्थः, न व्यक्तिरिति चेत्-शाब्दात्तदलाभप्रसङ्गात् ॥ आक्षेपत इति चेत्—कः खल्वयमाक्षेपो नाम ? न तावदनुमानम्; अनन्ताभिःसह सङ्गतिवदविनाभावस्यापि ग्रहीतुमशक्यत्वात् । शक्यत्वे वा, सङ्गतेरपि तथैव सुग्रहत्वात्

---

लोके यदि स्यात्, तदा पटकुङ्कुमयोरपि संसर्गो वारयितुमशक्य एव स्यात् । परं तु नियमस्तथा न क्लृप्तोऽस्ति । अतो विनाशकसन्निधानात् पूर्वं विनाशासम्भवात् सन्निधानहेतोः सत्त्वात् उत्पत्तिधर्मके पटादौ विनाशकसन्निधिर्देशविप्रकर्षनिरस्यो न भवति । [न च विनाशकारणसमागमात् प्राक् पटनाशासम्भवेऽपि पटसमागमात् प्राक् विनाशकारणविनाशसम्भवात् देशविप्रकर्षः सुवच इति वाच्यम्—कदाचित्तन्नाशसम्भवेऽपि सर्वदा तन्नाशे मानाभावात्कार्यनित्यत्वसिद्ध्यसम्भवात् ।] तस्मात् प्रकारान्तराभावादविरुद्धयोरुत्पन्नप्रध्वंसकयोः कालविप्रकर्षमादायासंसर्गो वाच्यः, यत्राविरुद्धासंसर्गस्तत्र नियतविप्रकृष्टकालकत्वमिति; अत एव न कृष्णेन लक्ष्मणस्य समागमः । स च कालविप्रकर्षः अतः उत्पन्नप्रध्वंसकद्वयान्निवर्तते ; विनाशकालप्राप्तेः प्राग्विनाशासम्भवात् । अतो व्यापकस्य कालविप्रकर्षस्य निवृत्तौ व्याप्योऽसंसर्गोऽपि निवर्तेत इति तत्संसर्गसिद्धावनित्यत्वव्याप्तिरुत्पत्तिमत्त्वं सिद्ध्यति । [ न चोक्तदेशविप्रकर्षकालविप्रकर्षयोर्दुर्वचतया नित्यपदार्थेषु ध्वंसे च विनाशकसन्निधानापत्तिरिति तद्विनाशापत्तिरिति वाच्यम्—नित्येषु धर्मिग्राहकप्रमाणेन, ध्वंसे च विनाशाङ्गीकारे प्रतियोगिपुनरुन्मज्जनप्रसङ्गेन ध्वंसाप्रतियोगित्वसिद्धेर्विनाशकसन्निधानासम्भवात् । अत उत्पत्तिमद्भावे विनाशकसन्निधानमपरिहार्यमिति न व्याप्यत्वासिद्धिरपीति ॥

[53] नन्वास्तामिदमुत्पत्तिमतो विनाशित्वम् । शब्दे पुनरनित्यत्वमुत्पत्तिमत्त्वं च न भवति ; शब्दो नित्यः सङ्गतिमत्त्वादित्यनेन विपरीतसिद्धेः । सङ्गतिर्वाच्यवाचकभावसम्बन्धः ।

---

१ अतः—अविरुद्धाभ्याम् ।

२ 'तेन-शब्देनेत्यर्थः' इति प्रकाशानुरोधादिदं पूर्वान्वयि । "येन हेतुनाऽस्थिरस्य व्यक्तिरूपस्यार्थस्य सङ्गतिर्दुर्ग्रहेति, तेनैवास्माकं जातिरेव पदार्थ इति सिद्धान्त इत्याह तेनेति" इति बोधन्यनुरोधे त्विदमुत्तरवाक्यगतम् ।

'व्यक्तिमात्ररूपेणाविनाभाव' इति चेन्न—व्यक्तित्वस्य सामान्यस्याभावात् । भावे वा, तदाक्षेपेऽपि विशेषानाक्षेपात् । वाच्यत्वमपि वा तथैवास्तु ? किमाक्षेपेण ; सङ्गतेरविरोधादिति ॥

[54] अर्थापत्तिराक्षेप इति चेन्न—व्यक्त्या [किं] विना किमनुपपन्नम् ? 'जाति'रिति चेन्न—तन्नाशानुत्पाददशायामपि सत्त्वात् ॥ 'तथाऽपि न व्यक्तिमात्रं विने'ति चेन्न—मात्रार्थाभावात् ॥ 'व्यक्तिज्ञानमन्तरेण जातिज्ञानमनुपपन्न'मिति चेन्न—तदभावेऽप्युत्पादात् ॥ 'व्यक्तिविषयतां(त्वं) विना जातिविषयता तस्यानुप(तानुप)पन्ने'ति चेन्न—

---

यद्येवमस्थिरः शब्दः स्यात् , तर्हि तद्व्यक्तीनामानन्त्यात् एकव्यक्तौ सङ्गतिग्रहस्यान्यत्रानुपयोगात् सकलव्यक्तीनां च दुर्ग्रहत्वात् । कथं तत्रार्थेन सङ्गतिग्रह इति चेत्-यथा गवाद्यर्थस्यास्थिरत्वेऽप्यनन्तत्वेऽपि शब्देन सङ्गतिग्रहः, तथैव शब्दस्यापि तादृशस्यार्थेनेति ॥ ननु जातिरेव पदार्थः, न व्यक्तयः । सा च स्थिरैका चेति न दोष इति चेन्न-तथा सति शब्दाद्व्यक्त्यबोधप्रसङ्गात् । अथ जातौ शक्त्या गृहीतायां व्यक्तेराक्षेपतो लाभ इति चेत्—कः पुनराक्षेपशब्दार्थः, किमनुमानमुतार्थापत्तिराहो अन्य इति । नाद्यः ; अनन्तव्यक्तिभिः सह सङ्गतेरिव व्याप्तेरपि दुर्ग्रहतया जात्या व्यक्त्यनुमानायोगात् । व्याप्तेः सुग्रहत्वे सङ्गतेरपि तुल्यन्यायेन तथात्वात् ॥ जातेः कृत्स्नव्यक्तिगतव्यक्तित्वाख्यरूपं प्रति व्याप्यत्वमिति चेन्न-जात्यतिरिक्तस्य व्यक्तित्वाख्यस्य सामान्यस्याभावात् ; तस्य प्रतिव्यक्तिभिन्नत्वात् । तादृशसामान्यसत्त्वेऽपि व्यापकीभूततदनुमितावपि व्यक्त्यनुमित्यभावाच्च । यद्वा जातिवदेव तस्यापि सामान्यस्य वाच्यत्वमेवास्तु, किमनुमित्या ? अस्थिरत्वाऽऽनन्त्यरूपदोषाभावेन सङ्गतौ बाधकाभावादिति ॥

[54] न द्वितीयः ; अर्थापत्तिस्थले उपपादकं विना किञ्चिदनुपपन्नं हि सत् स्वोपपादकमाक्षिपति । तदत्रोपपादकत्वेनाभिमतया आक्षेप्यया व्यक्त्या विना कोऽर्थोऽनुपपन्न इति पृच्छामः । अथ सङ्गतिमती जातिरेवानुपपन्नेत्युच्यते-तन्न —व्यक्तिनाशव्यक्त्यनुत्पाददशायामपि तां विना जातेः सत्त्वात् । अथ एकव्यक्तिनाशानुत्पादसमये सा स्यात् । व्यक्तिमात्रं विना तु न तिष्ठतीति चेन्न-मात्रपदार्थाभावात् । किमत्र व्यक्तिमात्रमिति व्यक्तिसामान्यं व्यक्तित्वमभिमतं उत सर्वा व्यक्तयः ; नाद्यः, व्यक्तित्वरूपसामान्यस्यैवमाक्षेपेऽपि विशेषानाक्षेपस्य प्रागुक्तत्वात् । नान्त्यः, अनन्तानां तासां दुर्ग्रहतया आक्षेपायोगात् ; गामानयेत्यादौ सर्वत्र सर्वव्यक्त्याक्षेपासम्भवाच्च । ननु न जात्या व्यक्त्याक्षेपः ; किं तु व्यक्तिज्ञानं विना जातिज्ञानमनुपपन्नमिति जातिज्ञानेन व्यक्तिज्ञानाक्षेप इति चेन्न —जातिमात्रशक्तिवादिनस्ते व्यक्तिज्ञानाभावेऽपि शब्दाज्जातिज्ञानस्योत्पादात् । अथ ज्ञानस्य जातिविषयताऽन्यथानुपपन्नेति जातिविषयतया व्यक्ति-

**एवं तर्ह्येकज्ञानगोचरतायां किमनुपपन्नं १ किं प्रतिपादयेदिति ॥ 'जातीनामन्वयानुपपत्त्या व्यक्तिरवसीयत' इति चेन्न— २ परस्पराश्रयप्रसङ्गात् ॥**

[55] **स्यादेतत्—प्रतिबन्धं विनाऽपि पक्षधर्मताबलात् यथा लिङ्गं विशेषे पर्यवस्यति, तथा सङ्गतिं विनाऽपि शब्दः शक्तिविशेषाद्विशेषे पर्यवस्यति। स एवाऽऽक्षेप इत्युच्यते इति चेत्—न तावत् प्रतीतिः क्रमेण ; अपेक्षणीयाभावेन विरम्यव्यापारायोगात् ॥ जातिप्रत्यायनमपेक्षत इति चेत्— कृतं तर्हि शब्दशक्तिक(किमेदक)ल्पनया ;**

---

विषयताया आक्षेप इति चेत्—तर्हि व्यक्त्यविषयकत्वे जातिविषयकत्वासम्भवात् शब्दतो जायमानं ज्ञानं जातिव्यक्त्युभयविषयकमेव स्वीकार्यमिति किं प्रत्याक्षेपकत्वाभावे कस्यानुपपन्नत्वमस्ति। जातेरिव व्यक्तेरपि गृहीतत्वादुभयत्र सङ्गतिसिद्धेर्न तयोराक्षेप्याक्षेपकभावः। व्यक्तिविषयताया जातिविषयतायाश्चागृहीतत्वात् ग्रहणस्यानावश्यकत्वाच्च न तत्रैकस्य अनुपपन्नत्वज्ञान, नाप्यन्यस्याः प्रतिपाद्यत्वम्। ननु व्यक्तिज्ञानं विना जातिज्ञानं भवत्येव ; किन्तु तस्याः व्यक्तिद्वारैवान्वयो वक्तव्यः ; गौः शुक्लेत्यादौ सर्वत्र व्यक्तिं विनाऽन्वयासम्भवादिति चेत्—तर्हि पदार्थान्तरान्वयोऽनुपपन्नः सन् व्यक्तिमाक्षिपतीति सिद्धम्। तथा चान्वये गृहीते तदन्यथानुपपत्त्या व्यक्त्याक्षेपः ; व्यक्त्याक्षेपे सति योग्यतादिबलादन्वयग्रहणमित्यन्योन्याश्रयः।

[ननु गङ्गायां घोष इत्यादौ प्रवाहे घोषान्वयानुपपत्त्या लक्षणाऽऽश्रीयते। न हि तत्रान्योन्याश्रयः। तद्वदिहेति चेन्न—व्यक्तिशक्तिवादिभिः गङ्गायां मत्स्य इत्यादौ सत्स्यर्थमत्स्याधिकरणत्वे प्रवाहान्वयस्य क्लृप्तत्वात् गङ्गायां घोष इत्यत्र घोषाधिकरणत्वे तदभावात्तीरलक्षणा स्वीक्रियते। जातिशक्तिवादे तु गौः शुक्लेत्यादौ गवादिशब्दस्य व्यक्तिपरत्वनिश्चय एव विभक्तेरभेदार्थकत्वनिश्चयः, अभेदार्थकत्वनिश्चये सत्येव प्रकृतेर्व्यक्तिपरत्वनिश्चय इति दोषो दुरुद्धर इत्यलम्।]

[55] अस्त्वेतत्। तृतीयः पक्षो गृह्यते। शक्तिविशेषाद्य सङ्केतग्रहणमेवाक्षेपः। शक्तिर्नाम स्वरूपसती कार्यकरी ; सङ्गतिस्तु ज्ञायमाना कार्यकरी। पूर्वा व्यक्तिविषयिणी ; परा जातिविषयिणी। तथा च—यथा धूमादिलिङ्गं सामान्यतो वह्निव्याप्यं पर्वतीयवह्निनिरूपितव्याप्त्यभावेऽपि विशेषस्यैव पक्षधर्मत्वात्तद्बलात्पर्वतीयवह्न्यनुमितिं जनयति तथा-शब्दो व्यक्तिविषये सङ्गत्यभावेऽप्युक्तशक्तिबलाद्व्यक्तिरूपविशेषमुपस्थापयतीति चेत्—उच्यते। किं जातिव्यक्तिप्रतीती क्रमेण

---

१ बो॰ 'अत्रानुपपन्नमात्रनिराकरणप्रकरणे किं प्रतिपादयेदिति प्रक्रिय(था?) या असङ्गतत्वात्प्रमादकृतः पाठ इति संप्रदायः' इति। २ प॰ 'जातिज्ञाने सति लक्षणया व्यक्तिज्ञानं व्यक्तिमादाय जातिज्ञानमित्यन्योन्याश्रयः।'

तावतैव तत्सिद्धेः ॥ ओमिति चेन्न—व्यक्त्यनालम्बनाया जातिप्रतीतेरसम्भवादित्युक्तत्वात्; प्रमाणान्तरापातप्रसङ्गाच्च ॥ स्मरणं तदित्ययमदोष इति चेन्न—अननुभूतानन्वयप्रसङ्गात् ॥ अस्त्वेकैव प्रतीतिरिति चेत्—कृतं तर्हि शक्तिभेद(द्वय)कल्पनया ॥

(56) एवं च यथा सामान्यविषया शक्तिरेकैव तद्वति पर्यवस्यति, तथा सामान्याश्रयासङ्गतिस्तद्वति पर्यवस्येदिति ॥ न च नित्या अपि वर्णाः स्वरानुपूर्व्यादिहीनाः पदार्थैः सङ्गम्यन्ते । न च तद्विशिष्टत्वमपि तेषां नित्यम् । तस्मात्तज्जातीयक्रोडनिविष्टा एव पदार्थाः पदानि च संबध्यन्ते, नातोऽन्यथेति, नैतदनुरोधेनापि शब्दस्य नित्यत्वमाशङ्कनीयमिति ॥

---

उत युगपत् । न तावत्क्रमेण, सङ्गतिज्ञानस्य स्वरूपसत्याः शक्तेश्च कारणस्य सत्त्वेन, नान्यत्किञ्चिदपेक्षणीयमिति च, शक्तिविशेषस्य क्षणं जोषं स्थित्वा पश्चात्कार्यकरत्वायोगात् । यदि जातिज्ञानमपेक्ष्यं, तर्हि शब्दे किं शक्तिकल्पनया; सङ्गतिज्ञानाज्जातिज्ञानं, जातिज्ञानाच्च व्यक्तिज्ञानमित्येव सुवचतया तन्मात्रेणैव व्यक्तिज्ञानसिद्धेः । अस्तु तथैवेति चेन्न—व्यक्त्यविषयकजातिज्ञानासंभवान्न संङ्गतेर्जातिमात्रोपस्थापकत्वमित्युक्तत्वात् । जातिसामग्र्याः व्यक्तिसामग्रीघटितत्वनियमस्य प्रत्यक्षमात्रविषयकतया शब्दाज्जातिमात्रोपस्थितिसंभवेऽपि शब्दस्य जातिज्ञानकारणत्वम् जातेश्च व्यक्तिज्ञानकरणत्वमिति त्वन्मते जातिरूपसप्तमप्रमाणकल्पनापत्तेः । नन्वाक्षेपादिपक्षस्य दूषितत्वादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति जातिज्ञानजन्यं व्यक्तिज्ञानं स्मरणात्मकमिति नानुभवरूपप्रमाकरणान्तरप्रसक्तिरिति चेत्—न—तथा सति अननुभूतव्यक्तिस्मरणासम्भवेन कविकाव्यादावननुभूतापूर्वार्थबोधासम्भवप्रसङ्गात् । अतो न क्रमिकी प्रतीतिः। अस्तु तर्हि युगपत्प्रतीतिः; तथा चैकैवोभयविषयिणीति चेत्, तर्ह्येकैव सङ्गतिर्जातिमिव व्यक्तिमप्युपस्थापयतीति सुवचमिति शक्तिभेदो व्यर्थ इति ॥

(56) एवं च शक्तेर्गोव्यक्तिविषयत्वेऽपि गोत्वपुरस्कारेण तद्विषयत्वान्नास्थिरत्वानन्त्ये दोषमावहत इत्येव वक्तव्यम् । तथा शब्दानामस्थिरानन्तत्वेऽपि तद्गतसामान्यपुरस्कारेण सङ्गतेस्तन्निष्ठत्वकथनान्न दोषः । सामान्यवद्विषयकत्ववत् सामान्यवन्निष्ठत्वसम्भवात् । नन्वर्थनिष्ठस्य गोत्वादेःसामान्यस्य स्थिरत्वेऽपि गोशब्दादिनिष्ठस्य गकारोत्तरौकारत्वाद्यानुपूर्वीरूपस्य सामान्यस्य गकारोत्तरत्वांशघटकानेकानित्यपदार्थघटिततया स्थिरत्वाभावात् कथं तुल्यत्वमिति चेत्, तर्हि वर्णनित्यत्वपक्षेऽपि केवलवर्णेषु सङ्गत्यभावादस्थिरानुपूर्वीविशिष्टेष्वेव सा वाच्येति दोषः समानः । न खलु नित्या अपि वर्णाः स्वरानुपूर्व्यादिहीनाः पदार्थैः सङ्गम्यन्ते । वर्णसाम्येऽपि स्थूलपृषती इन्द्रशत्रुरित्यादौ बहुव्रीहितत्पुरुषभेदेनान्तोदात्ताऽऽद्युदात्तस्वरभेदेनार्थभेदात्; सरः रस

**[57] यदा च वर्णा एव न नित्याः, तदा कैव कथा पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानाम्? कुतस्तरां च तत्समूहरचनाविशेषस्वभावस्य वाक्यस्य? कुतस्तमां(मां च?) तत्समूहस्य वेदस्य?**

**[58] परतन्त्रपुरुष१परम्पराधीनतया प्रवाहाविच्छेदमेव नित्यतां ब्रूम इति चेत्—एतदपि नास्ति; सर्गप्रलयसम्भवात् ॥ अहोरात्रस्याहोरात्रपूर्वकत्वानियमात्, कर्मणां**

इत्यादावानुपूर्वीभेदेनैवार्थभेदात् । न च वर्णानां स्वरूपानित्यत्ववत् स्वरादिविशिष्टत्वमपि नित्यम्—स्वरादीनां ध्वनिनिष्ठानामनित्यतयाऽऽरोपितत्द्वैशिष्ट्यस्याप्यनित्यत्वात्; तद्रहितवर्णमात्रे च सङ्गत्यभावात् । अतो गकारोत्तरत्वविशिष्टौकारत्वरूपानुपूर्वीघटकपदार्थानां तत्तद्व्यक्त्यखण्डसामान्यरूपेण ग्रहणात्प्रतिगोशब्दमानुपूर्वीभेदेऽप्यैक्यं सम्पाद्यमिति तादृशसामान्यधर्मक्रोडीकृतानुपूर्वीविशिष्टतया गोशब्दानामनेकेषामप्यैक्यं निराबाधम् । तस्माद्गोजातीयत्वेन क्रोडीकृता अर्थव्यक्तयो गोशब्दजातीयत्वेन क्रोडीकृता गोशब्दव्यक्तयश्च सङ्गतिमत्य इत्येतस्मादन्यः प्रकारो न भवति । अतश्च न सङ्गतिमत्त्वानुरोधेन शब्दनित्यत्वमाशङ्क्यमिति सिद्धमुत्पत्तिमत्त्वादनित्यः शब्द इति । तत्सिद्धं प्रत्यक्षानुमानाभ्यां शब्दध्वंसादिसिद्ध्या वर्णा अनित्या इति ।

[57] एवं च वर्णानामेवानित्यत्वे पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां नित्यत्वं कुतः? तादृशपदसमुदायात्मनो वाक्यस्य तत्कुतस्तराम्? तादृशवाक्यसमूहरूपस्य वेदस्य च तत्कुतस्तमाम्? एवं वर्णनित्यत्वेऽपि रघुवंशादिवदनित्यत्वस्यावश्यकत्वे वर्णानित्यत्वे तदनित्यत्वं दुरपह्नवम् । तस्मादनित्यत्वाद्वेदस्य न वक्तृगुणानपेक्षं प्रामाण्यं सेत्स्यतीति ।

[58] ननु मा भूत् ध्वंसप्रागभावाप्रतियोगित्वरूपं नित्यत्वं वर्णानाम् । तथापि **परतन्त्राणां** पूर्वपूर्वोच्चारणाधीनोच्चारणकर्तां पुरुषाणां परम्परयोत्पाद्यत्वेन **प्रवाहस्य** एकापगमकालिकतज्जातीयान्यसम्बन्धरूपस्याविच्छेद एव नित्यत्वमिति ब्रूमः । एवं चैकैकप्रयुक्तस्यापि वेदशब्दराशेरन्यप्रयोगाधीनतया लौकिकवाक्य इव किञ्चित्पुरुषस्वातन्त्र्यमूलकत्वाभावेन न वक्तृगतयथार्थज्ञानादिगुणापेक्षत्वप्रसक्तिरिति अनपेक्षमेव प्रामाण्यमिति चेत्—एतदपि नित्यत्वं न भवति, सर्गप्रलयसम्भवात् प्रलयसम्भवात्प्रलयकाले विच्छेदस्यावश्यकत्वात् । ननु सर्गाऽऽद्यत्वेनाभिमतोऽहोरात्रोऽप्यहोरात्रपूर्वकः अहोरात्रत्वात् अद्यतनाहोरात्रवत्, पुण्यपापात्मककर्माणि न युगपन्निरुद्धस्वकार्याणि विषमविपाककालकत्वात्, ब्राह्मणादिवर्णगवाश्वादिव्यक्तिविशेषाः तादृशव्यक्तिजन्याः ब्राह्मणादित्वात् । अन्यथा ब्राह्मणमातापितृजन्यत्वाद्यभावे आद्यस्यैव ब्राह्मणत्वाद्यसिद्ध्यापत्तेः ।

१ पुरुषपराधीनतया क. ख. पाठः । बो. 'पूर्वपूर्वोच्चारयितृपरतन्त्रोत्तरोच्चारयितृपरम्परा' इति । प्र. 'तज्जातीयानुपूर्वीज्ञानजन्यत्वव्याप्यज्ञानविषयत्वं परतन्त्रपुरुषपरम्पराधीनत्वम्' ।

विषमविपाकसमयतया युगपद्वृत्तिनिरोधानुपपत्तेः, वर्णादिव्यवस्थानुपपत्तेः, समयानुपलब्धौ(नुपपत्तौ) शाब्दव्यवहारविलोपप्रसङ्गात्, घटा(टपटा)दिसंप्रदायभङ्गप्रसङ्गाच्च कथमेवमिति चेत्—

[59] उच्यते—वर्षादिवद् भवोपाधिः वृत्तिरोधः सुषुप्तिवत्।
उद्भिद्वृश्चिकवद्वर्णाः मायावत्समयादयः॥ २॥

तत्पूर्वकत्वमात्रे सिद्धसाधनात् (नम्), अनन्तरतत्पूर्वकत्वे अप्रयोजकत्वात्; वर्षादिदिनपूर्वकतद्दिननियमभङ्गवदुपपत्तेः। राश्यादिविशेषसंसर्गरूपकालोपाधिप्रयुक्तं हि तत्;

अन्यथाऽपि ब्राह्मणत्वाद्यङ्गीकारे सर्वत्र तदापत्त्या व्यवस्थानुपपत्तिः। एवं घटादिशब्दव्यवहारविशेषः तच्छब्दव्यवहारपूर्वकः शब्दव्यवहारत्वात्। अन्यथा पूर्वव्यवहाराभावे शक्तिग्राहकाभावात्सङ्केताग्रहणात्सर्वव्यवहारविलोपप्रसङ्गः। तथा घटादिनिष्पादनक्रियाविशेषः तन्निष्पादनक्रियान्तरपूर्वकः निष्पादनक्रियात्वात्। अन्यथा कर्तव्यप्रकारपरिज्ञानाभावेन तन्निष्पादनसंप्रदायभङ्गप्रसङ्गः। तदेभिः पञ्चभिरनुमानैः न कदाचिदनीदृशं जगदिति सिद्ध्यतीति कथं सर्गप्रलयसम्भव इति चेत्—

[59] उच्यते—अत्र तावदहोरात्रे वर्षर्तुदिनादाविवोपाधिरस्ति। स चोपाधिरिह भवो ब्रह्माण्डस्थितिः। युगपत् सर्वकर्मवृत्तिविरोधश्च सुषुप्तिवत्सम्भवति। आदौ सजातीयवर्णव्यक्त्यभावेऽपि वर्णादयः प्रथमिकतण्डुलीयकाद्युद्भिद्वत् वृश्चिकादिवच्च भवितुमर्हन्ति। प्रथमं पुरुषाभावेऽपि सङ्गतिग्रहनिष्पादनप्रक्रियादिकं संप्रति मायाबलादिव आदावीश्वरव्यापारबलादवगम्यते। अतो भवदुक्तमनुमानं सर्वमप्रयोजकम्।

तथा हि—प्रथमेऽनुमानेऽहोरात्रपूर्वकत्वमात्रे साध्ये सिद्धसाधनम्। प्रलयपूर्वमहोरात्रमादायापि प्रलयोत्तराहोरात्रे तत्पूर्वकत्वस्य सुवचत्वात्। अव्यवहिताहोरात्रपूर्वकत्वे साध्ये च हेतुरप्रयोजकः। इदं वर्षर्तुदिनं वर्षर्तुदिनपूर्वकं वर्षर्तुदिनत्वादिति वर्षर्तुदिनसामान्ये वर्षर्तुदिनपूर्वकत्वानियमस्य यथा भङ्गः, तथाऽत्र भङ्गसम्भवात्। तद्धि वर्षादिनं, सूर्यस्य सिंहराश्यादिसंसर्गरूपो यः कालोपाधिस्तत्प्रयुक्तम्। तादृशराशिसंसर्गाभावे वर्षादिनत्वव्यावृत्तेः। तथाऽत्रापि सृष्ट्युत्तरोत्तरानुवृत्तिनिमित्तभूतो यो ब्रह्माण्डस्थितिरूपः कालोपाधिस्तन्मूलकत्वादहोरात्रस्य मूलाभावे व्यावृत्तिरिति। न च ब्रह्माण्डस्थितिरेव सार्वकालिकी तस्यानुत्पन्नत्वादनश्वरत्वाच्चेति मन्तव्यम्। ब्रह्माण्डमुत्पन्नं नश्वरं च सावयवत्वादित्यनुमानाद्विपर्ययसिद्धेः।

[ननु वर्षादिनपूर्वकत्वानुमाने सिंहकन्यासंसर्गः कथमुपाधिः? शरदाद्यदिने साध्याव्यापकत्वात्; वर्षाप्रथमदिनेऽप्युपाधिसत्त्वेन साधनव्यापकत्वाच्च। न च वर्षादिनत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वं विवक्षितमिति वाच्यम्—एवमपि साधनाव्यापकत्वाभावात्। एवं प्रकृते-

**तदभाव एव व्यावृत्तेः । तथेहापि सर्गानुवृत्तिनिमित्तब्रह्माण्डस्थितिरूपकालोपाधि-निबन्धन(धिप्रयुक्त)त्वात्तस्य, तदभाव एव व्यावृत्तौ को दोषः । न च तदनुत्पन्नमन-श्वरं वा ; अवयवित्वात् ॥**

**[60] वृत्तिनिरोधस्यापि सुषुप्त्यवस्थावदुपपत्तेः । न हि—'अनियतविपाकसमयानि कर्माणी'ति तदानीं कृत्स्नान्येव भोगा१विमुखानि । न ह्येतयतः कश्चिद्भोगो नाम ; विरोधात् ॥ कस्तर्हि तदानीं शरीरस्योपयोगः ? न प्रत्ते न कश्चित् । तर्हि किमर्थमनुवर्तते ? उत्तरभोगार्थं ; चक्षुरादिवत् ॥ प्राणिति किमर्थं ? श्वासप्रश्वाससन्तानेना-ऽऽयुषोऽवस्थाभेदार्थम् ; तेन भो(भेदे भो)गविशेषसिद्धेः ॥**

---

ऽहोरात्रपूर्वकत्वानुमानेऽपि ब्रह्माण्डस्थितिरूपाधिर्न भवतीति चेत्—सिंहसंसर्गी इत्यनेन सिंहप्रथमद्वितीयसंसर्गोपरितनसंसर्गमात्रविवक्षेति साधनाव्यापकत्वम् ; एवं प्रकृतेऽपीत्याहुः (प.म.)॥ एवमपि इहोपाधिशब्देन कालोपाधिरेव कालावच्छेदकरूपो विवक्ष्यते ; न तु हेतूपाधिः । तथा च वर्षादिनस्य सिंहादिसंसर्गप्रयुक्तत्वे कथिते हेत्वारप्रयोजकत्वमुचितोपाधिकल्पनेन भाव्यमित्याशय इति सुवचम ॥ यद्वा यथा साध्यव्याप्यत्वस्योपाधिनिष्ठस्य हेतावारोपादुपाधेरुपाधित्वम् , तथा साधनव्यापकत्वस्योपाधिनिष्ठस्य साध्ये आरोपादुपाधेरुपाधित्वमित्यपि सुदूरविमर्शेऽपि सुवचम् । एवं च प्रकृते वर्षादिनत्वं राशिविशेषसंसर्गप्रयुक्तम्, न तु वर्षादिनपूर्वकत्वप्रयुक्तमिति सिद्ध्यति । प्रयुक्तत्वं व्याप्यत्वम् ॥ अथ वाऽहोरात्राव्यवहितपूर्वकालोऽहोरात्ररूपः अहोरात्रपूर्वकालत्वादित्यनुमाने ब्रह्माण्डस्थितिरुपाधिः ; वर्षादिनपूर्वकालो वर्षादिनात्मकः वर्षादिनपूर्वकालत्वादित्यत्र सिंहकन्यासंसर्ग उपाधिः ; ग्रीष्मान्तर्भावेण साधनाव्यापकत्वम् । एवं च वर्षादिनपूर्वकालत्वावच्छेदेन वर्षादिनत्वासिद्धौ वर्षादिनस्य वर्षादिनपूर्वकत्वाभावस्तुल्यवित्तिवेद्य इति प्रकृतहेतोरपि दुष्टत्वम् ॥ ]

[60] एवं द्वितीयमप्यप्रयोजकम् ; कर्मणां भोगजननव्यापारनिरोधस्यापि सुषुप्त्यवस्थायामिव युगपत्संभवात् । कर्मणां विपाकसमयोऽव्यवस्थित इत्येतावता न खलु सुषुप्तिसमये कृत्स्नान्यपि कर्माणि स्वकार्यभोगनिष्पादनवैमुख्यं न बिभ्रति । विमुखान्येव हि भवन्ति ॥ अस्ति तदाऽपि भोग इति चेन्न —चेतनाहीनस्य भोगासम्भवात । भोगो हि सुखदुःखसाक्षात्कारः कथं चैत-

---

१ भोगाविमुखानि क. ख. पाठोऽशुद्धः । बो. 'कृत्स्नान्यपि भोगाविमुखानि न हि भवन्ति । किं तु भोगविमुखान्येव' । क. २ पाठस्तु 'न हि .... .... न तदानीं कृत्स्नान्येव भोगाविमुखानि' इति । वस्तुत आत्मतत्त्वविवेककारस्यदृष्टौ प्रवाहोच्छेदपदयोः सृष्टिप्रलयपरत्वमेव । तथा च **अन्यथा कृतहानप्रसङ्गादित्यस्य** पुनः सर्गानङ्गीकारे कृतहानं स्यादिति यथाश्रुत एवार्थ इति । गीताश्लोकेऽपि 'सर्गप्रलयविवक्षाऽपि भाव्ये'ति ॥

[61] **एकस्यैव तत् कथञ्चिदुपपद्यते, न तु विश्वस्येति चेत्—अनन्ततया अनियतविपाकसमयतया उपमर्द्योपमर्दकस्वभावतया च कर्मणां, विश्वस्य, एकस्य वा को विशेषः, येन तन्न भवेत् । भवति च सर्वस्यैव १ सुस्वापः ॥ क्रमेण, न तु युगपदिति चेन्न—कारणक्रमायत्तत्वात्कार्यक्रमस्य । न च स्वहेतुबलायातैः कारणैः क्रमेणैव भवितव्यम्; अनियतत्वादेव सर्वग्रासवत् । ग्रहाणां ह्यन्यदा समागमानियमेऽपि, तथा कदाचित् स्यात्, यथा कलाद्यनियमेऽपि सर्वमण्डलोपरागः स्यात्–त्रिदोषसन्निपातवद्वा । यथा हि वातपित्तश्लेष्मणां चयप्रकोपप्रशमक्रमानियमेऽपि एकदा सन्निपातः स्यात्, तदा देह-**

न्याभाव इति । शरीरस्य निद्राणं प्रत्यनुपयोगेऽपि तदा तदनुवृत्तिरुत्तरकाले भोगजननार्थम् ॥ तर्हि तदा किमर्थं प्राणवैशिष्ट्यमिति चेत्–आयुर्हि नाम पुरुषभेदेन प्रतिनियतसंख्याविशिष्टोच्छ्वासनिश्वाससन्तानः । तत्रैतत्संख्याकनिश्वासानन्तरं अयं भोग इति व्यवस्थाऽस्ति । अतस्तदुपयोग्यवस्थाभेदार्थं तत् ।

[61] नन्वेवं भोगवैमुख्यं कदाचिदेकस्य कथञ्चिदुपपद्यते; न तु सर्वस्यापि ब्रह्माण्डान्तर्गतस्य प्राणिन इति चेत्— अनन्तत्वात्, अनियतविपाकसमयत्वात्, दुर्बलान्यकर्मोपमर्देन प्रवृत्तिशीलत्वाच्चैकपुरुषीयकर्माण्येव कथं सर्वाणि विमुखानीति पृच्छामः । यद्यनन्तत्वादेव कञ्चित्कालं मिथः प्रतिबन्धककर्मसम्भावनया, 'नायं विपाकसमय' इति कृत्वा तद्वैमुख्यमेकविषये युक्तमित्युच्यते— तर्ह्येकस्य विश्वस्य वा को विशेषः, येन विशेषेण सर्वपुरुषकर्मवैमुख्यं युगपन्न भवेत् । भवति हि सर्वस्यैव सुषुप्तिः । ननु देशभेदेन रात्र्यादिभेदात्क्रमेण सुषुप्तिः सर्वस्य भवति, न तु युगपदिति चेत्-–कारणस्य क्रमिकत्वात्तत्र कार्यस्य क्रमिकता । यदा तु तत्तत्कार्योत्पादककारणयौगपद्यम् । तदा युगपदपि कार्यं भवितुमर्हति । न ह्येकस्य कारणं अन्यस्य कारणं च क्रमिकमेवेति नियमः; तस्य तस्य स्वस्वहेतुबलायत्तत्वेनाव्यवस्थितत्वात्, सर्वग्रासवत्; त्रिदोषसन्निपातवच्च । अथ दृष्टान्तौ विभज्येते । सूर्यादिग्रहाणां मिथः समागमस्तावन्न नियतः; कदाचिद्भवति, न भवति चेति । तत्रापि चन्द्रस्य राहुणा ग्रहणमेकद्व्यादिकलांशेष्वनियतम् । एवं सत्यपि तथा कदाचिद्भवति, यथा सर्वं मण्डलं ग्रस्यते । एवं वातः पित्तं श्लेष्मेति सन्ति शरीरे त्रयो दोषाः; येषां साम्यवैषम्याभ्यामारोग्यानारोग्ये । तेषां समावस्थारूपश्चयः कदाचित्, कदाचिदेकस्य **प्रकोप** आधिक्यम्, कदाचित्कस्यचित्**प्रशमो** ह्रास इत्येषां क्रमानियमेऽपि एकदा त्रयाणामपि बलवान् प्रकोपः, यः सन्निपात इत्युच्यते, यदा च देहः

१ सुष्वाप इति क. ख. पाठः । प्र. "सुस्वाप इति युक्तः पाठः; 'सुविनिदुर्भ्यः सुपि सूति समाः' इत्यनेन कृतसंप्रसारणस्यैव सुपेः षत्वविधानात्" इति ।

संहारः, तथा कालानलपवनमहार्णवानां सन्निपाते ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनास्स्युरिति को विरोधः? ॥ तथाऽपि विदेहाः कर्मिण इति दुर्घटमिति चेत्—किमत्र दुर्घटम्; भोगविरोधवत् शरीरेन्द्रियविषयनिमित्तनिरोधादेव तदुपपत्तेः॥

[62] वृश्चिकतण्डुलीय१कादिवत् वर्णादिव्यवस्थाऽप्युपपद्यते । यथा हि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य, गोमयादाद्यः; तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य, तण्डुलकणादाद्यः; वह्निपूर्वकत्वेऽपि वह्नेः, अरणेराद्यः; एवं क्षीरदधिघृततैलकदली२काण्डादयः तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां, प्राथमिकास्तत्तत्कर्मोपनिबद्धभूतभेदहेतुका एव । स एव हेतुः सर्वत्रानुगत इति सर्वेषां तत्सान्तानिकानां समान-

संहतो भवति । एवमेव ब्रह्माण्डाख्यस्य देहस्य प्रलयकालिकपावक-पवन-महार्णवाख्यानां वातपित्तश्लेष्मणां सन्निपाते ब्रह्माण्डं प्रलीयत इति युगपदेव भोगराहित्यं जीवानां नानुपपन्नम् । ननु सुषुप्तिवत् भोगराहित्यसम्भवेऽपि तृणजलूकावत्संसरतां कर्मरूपकारणवतां देहरूपकार्यराहित्यं न सङ्गच्छते । अतः कथं प्रलय इति चेत्—सङ्गच्छत एव । यथा हि सत्यपि कारणे कदाचिद्भोगनिरोधः सहकार्यभावात्, तथा कर्मसत्त्वेऽपि शरीरेन्द्रियविषयाणामुत्पत्तौ यन्निमित्तं परमाणुगतद्रव्यारम्भकसंयोगादि तन्निरोधाद्विदेहत्वोपपत्तिरिति । तस्माद्युगपन्निरुद्धवृत्तिकत्वं विषमविपाकसमयत्वेऽप्युपपन्नमिति ।

(62) एवं तृतीयहेतुरप्यप्रयोजकः; वृश्चिकतण्डुलीयकादिवत् वर्णादेर्व्यवस्थितत्वात् । वह्निवृश्चिकतण्डुलीयकादीनां स्वसजातीयोत्पन्नत्वव्यवस्थायामपि प्राथमिकोत्पत्तिरराणिगोमयतण्डुलकणादिभ्यो विजातीयेभ्यो हि दृश्यते । एवं क्षीरादावपि । अन्तत आद्यक्षीरादेरक्षीरपरमाण्वादिजन्यत्वं प्रसिद्धम् । कदलीकाण्डानां कदलीव्यक्त्यन्तरजन्यत्वेऽपि कस्यचित्काण्डस्य दग्धाद्वेत्रबीजाज्जन्म दृश्यते । यथेदं सर्वं, तथैव पशुमनुष्यरूपसामान्य ब्राह्मणवर्णादिविशेषाणां सजातीयपूर्वकत्वेऽपि प्राथमिकतत्तद्व्यक्तीनां तत्तत्पुण्यपापरूपकर्मसम्मिलितविलक्षणभूतविशेषाधीनत्वम् । प्राथमिकव्यक्तिकारणभूतविशेषस्वरूपहेतुकत्वादेव च सर्वेषां प्रथमव्यक्तिसन्तानगतानां तत्समान-

१ प्र. 'तण्डुलीयक उद्भिद्दृष्टान्तः' । म. 'उद्भित्पदेन शाकविशेष एव दृष्टान्ततयोक्त इति भावः' । अयं पत्रशाकविशेषः । वाचस्पत्ये, 'स्वादुः पाके त्वस्रपित्तविषघ्नस्तण्डुलीयकः । हन्ति वातं विड्निबन्धं मूत्रवातकफहितः ॥' इति । एवं च उद्भिद्वृश्चिकवत्, 'वृश्चिकतण्डुलीयकादिवदि' ति व्युत्क्रमपाठः पूर्वस्याल्पाच्तरत्वात् ।

२ भामत्यां (निर्णयसागरमुद्रणे पु. १५) 'यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्' ।

जातीयत्वमिति किमसङ्गतम्॥ गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना। न गतम्; योनिजेष्वेव व्यवस्थापनात्। मानसास्त्वन्यथापीति॥ गोमयवृश्चिकादिवदिदानीमपि किं[पि तथा किं] न स्यादिति चेन्न–कालविशेषनियतत्वात्कार्यविशेषाणाम्। न हि वर्षासु गोमयाच्छालूक इति हेमन्तेऽपि स्या(पि किं न स्या)त्॥

[63] समयोऽप्येकेनैव, मायाविनेव, व्युत्पाद्यव्युत्पादकभावावस्थितनानाकार्याधिष्ठानात् व्यवहारत एव सुकरः। यथा हि मायावी सूत्रसञ्चाराधिष्ठितं दारुपुत्रकं, 'इद-

---

जातीयत्वमिति न दृष्टान्तोपबृंहितेऽर्थे काचिदनुपपत्तिः। ननु तर्हि प्रथमे गवादौ व्यभिचारात्, अयं गोपूर्वकः गोत्वादित्यादेरनुमानत्वं गतमिति चेत्–न गतम्—योनिजमात्रे तथाऽनुमानात्। अतो योनिजत्वे सतीति विशेषणान्न दोष इति। ये पुनर्महतां मन सङ्कल्पमात्राधीनाः ते सजातीयजनकानपेक्षाः भवन्तीति योनिजमात्र एवेयं व्यवस्थेति। नन्वेवमिदानीमपि गोमय-वृश्चिकादिवत् सजातीयनिरपेक्षा गवाद्युत्पत्तिः सर्गादाविव स्यादिति चेन्न–तत्तत्कालस्यापि तथा तथा कार्यजनने कारणत्वेन तत्तत्कार्यस्य तदा तदा व्यवस्थितत्वात्। न खलु, गोमयाद्भेक उत्पद्यत इतीदं वर्षासु दृष्टं हेमन्तेऽपि स्यादिति युक्तं प्रष्टुम्। अत उद्भिद्वृश्चिकादिकार्यान्तर-वदेव वर्णव्यवस्थापीति।

[63] यः पुनस्तुरीयो हेतुः, तत्राप्युच्यते। एक एव सर्गादौ नरनारायणादिवत् प्रतिपाद्य पुरुषात्मना प्रतिपादकपुरुषात्मना चानेकं कार्यं मायावी वाधिष्ठाय व्यवहारं प्रतिपादकरूपः सन् वाचिकं, प्रतिपाद्यरूपः सन् कायिकं च करोति। ततश्च शब्दार्थयोः सङ्गतिः सर्वेषामादौ सुग्रहा भवति॥ मायाविनोऽपि नानाकार्याधिष्ठानं न निश्चितं दृष्टमिति चेत्--उच्यते। स खलु दारु-मयीं प्रतिमां बध्वा सूत्रं हस्ते कुर्वन् तां यथापेक्षं चालयन्नाह, 'इदमानये'ति। स च दारु-पुत्रकस्तथैव कुर्वन्निव चलति। निकटस्थो बालश्चैतनयोर्व्यवहारादिव तस्मादपि व्यवहारात् दृश्यमानात् 'दारुपुत्रकक्रियापरोऽयं मायाविव्यवहार' इति व्युत्पत्तिं लभते। एवमिहाप्यादौ शब्दार्थव्युत्पत्तिरेकाधीनैव भवति।

[न च प्रतिपादकपुरुषस्यैव प्रतिपाद्यशरीराधिष्ठातृत्वे तस्य प्रागेव ज्ञातृत्वात् तज्ज्ञानस्य प्रतिपादकवाक्याधीनत्वाभावात, अयं पुरुष एतच्छब्दाधीनैवंरूपज्ञानवान् एतच्छब्दानन्तरभावि-हेत्वन्तरानधीनप्रवृत्तिमत्त्वादित्यनुमानासम्भवात् कथं शब्दस्य ज्ञानजनकत्वनिश्चयः; कथन्तरां च शब्दार्थसङ्गतिग्रह इति वाच्यम्–अचेतने दारुपुत्रके बोधाजनकादपि मायाविव्यवहाराच्छक्ति-ग्रहदर्शनेन तद्वदुपपत्तेः। वस्तुतः सर्गादावव्युत्पन्नानां एकस्यैव प्रतिपाद्यप्रतिपादकशरीरद्वया-धिष्ठातृत्वमित्यस्या अगृहीतत्वेन तदनुमानं निष्प्रत्यूहम्। न च पश्चात्पुरुषैक्यनिश्चये सत्यनुमानस्य

**मानये'ति प्रयुङ्क्ते । स च दारुपुत्रकस्तथा करोति । तदा चेतनव्यवहारादिव [1]तद्दर्शी बालो व्युत्पाद्यते तथा-इहापि स्यात् ॥ क्रियाव्युत्पत्तिरपि तत एव कुलालकुविन्दादीनाम् ॥**

**[64] सर्गादावेव किं प्रमाणमिति चेत् विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायिभिरारब्धः सन्तानत्वात् आग्नेयसन्तानवत् । वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः नित्यत्वे सति तदारम्भकत्वात् प्रदीपपरमाणुवदित्यादि ॥**

---

बाधितत्वावगमान्न कार्यकरत्वमिति वाच्यम्—पश्चात्पुरुषैक्यनिश्चयवत् लोकव्युत्पादनार्थं शरीरद्वयपरिग्रह इत्यस्यापि ज्ञानसम्भवेन पूर्वानुमितसङ्ख्यांशस्याबाधितत्वेनादोषात् । ] एवं कुलालकुविन्दादीनामादौ क्रियाव्युत्पत्तेरपि तस्यैकस्य निर्माणकायमधितिष्ठतोऽनुष्ठानदर्शनादेव सम्भवात् पञ्चमहेतुरपि परास्त इति ।

[64] नन्वेवं सर्गप्रलयविषये बाधकाभावेऽपि साधकं किमस्तीति चेत्—विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायिभिरारब्धः सन्तानत्वात् अरणिजन्याग्निसन्तानवत् वर्तमानब्रह्माण्डसम्बन्धिनः परमाणवः प्रागुत्पादित-प्रकृतसन्तानसजातीयसन्तानाः नित्यत्वे सत्यारम्भकत्वात् प्रदीपपरमाणुवदित्येवं कार्यपक्षकं कारणपक्षकं चानुमानमागमवत् प्रमाणमिति ॥ अत्र प्रागनुत्पादितसन्ताने कपालादौ व्यभिचारवारणाय नित्यत्वे सतीति । प्रथमानुमाने आरब्धत्वस्य सन्तानशून्यत्वांशस्य च साध्यान्तर्भावात् सर्गप्रलयसिद्धिः । द्वितीये सजातीयसन्तानान्तरोत्पादकत्वसाधनात्सर्गस्यैव, मध्ये विच्छेदाभावे एकसन्तानत्वप्रसङ्गेन सन्तानान्तरत्वस्यायोगाद्विच्छेदसिद्ध्या प्रलयस्यापि सिद्धिः । नानासर्गसिद्ध्या सर्गप्रलयप्रवाहसिद्धिश्च । सन्तानो नाम कार्यकारणभावापन्नकार्यसमुदायः । तथा च द्व्यणुकमारभ्यान्त्यावयविपर्यन्तान्तर्गतपदार्थसमुदायः सन्तानः । तावच्छून्यकारणारभ्यत्वं तत्र साध्यते । यथाऽरणिदारुण्यन्तर्लीना अनलपरमाणवः प्राक् सन्तानशून्या एव सति मथने सन्तानमारभन्ते तथेति । प्रागपि सन्तानसद्भावे तूपलब्धिप्रसङ्गः । न चाग्नेर्द्व्यणुकात्मना स्थितत्वादनुपलब्धिः स्यादिति मथनात्प्राक् सर्वात्मना सन्तानशून्यत्वमारणेयेऽपि न निश्चितमिति वाच्यम्—अत एव दृश्यसन्तानशून्यारब्धत्वस्यैव साध्यत्वेनादोषात् । न च घटारम्भकपरमाणुजनितघटपर्यन्तसन्ताने व्यभिचारः ; घटोत्पादविनाशतः प्राक् चूर्णात्मना तत्सत्त्वेन सर्वात्मना सन्तानशून्यारब्धत्वाभावादिति वाच्यम्—तस्यापि विश्वसन्तान इति पक्षीभूतसर्वसन्तानान्तर्गतत्वात् ॥ अथ वा घटपटादिषु संमार्जननिर्णेजनादिनाऽल्पावयवविश्लेषात्प्रतिदिन-

---

**१ श्रीशतदूषणीव्याख्याने चण्डमारुते दृष्टोऽयमेव पाठो रम्य इत्यस्मदध्यात्मविद्यागुरवः । कारिकाव्याख्याने प्रकाशेपीदृशी रीतिर्लक्ष्यते । सर्वत्र पा० व्यवहारादिवत्तद्दर्शी ।**

[65] **अवयवानामावापोद्वापा१ दुत्पत्तिविनाशौ च स्याताम् , सन्तानाविच्छेदश्चेति को विरोध इति चेन्न—एवं हि २ प(घ)टादिसन्तानाविच्छेदोऽपि स्यात् ।' विपर्ययस्तु दृश्यते । कन्थादि३(कर्त्रादि) भोगविशेषसम्पादनप्रयुक्तोऽसाविति चेन्न—द्व्यणुकेषु तदभावात्। तथा च तत्रा(तद)वयवानामपगमाभावेऽनादित्वप्रसङ्गे द्व्यणुकत्वव्याघातः। तस्मात् यत्कार्यं यन्निबन्धनस्थिति, तदपगमे तन्निवृत्तिः । यत् यद्धेतुकम्, तदुपगमे तस्योत्पत्तिः । न च कार्यस्य स्थितिनिबन्धनं नित्यमेव ; नित्यस्थितिप्रसङ्गात् । न च**

मवयविनाशे सत्यपि स एवायमिति प्रत्यभिज्ञौपयिको योऽवशिष्टावयवाश्रितोऽविच्छेदेनानुवर्तमानोऽवयविप्रवाहः स सन्तानः । तथा च ब्रह्माण्ड-तदन्तर्गतमहीमहीधरमहार्णवाद्यन्तर्गत एकैकोऽप्यवयविसन्तानः प्रमाणसिद्धः स्वशून्यावयवारभ्य इति साध्यते । ईदृशसन्तानशून्यारभ्यत्वं च घटादावक्षतमिति सोऽपि दृष्टान्त इति ।

[65] ननु सावयवे कतिपयावयवसंयोजन-वियोजनयोः सहजत्वात्तदधीनौ अवयविन एकैकस्योत्पादो विनाशश्च स्यातां नाम । अथाऽप्येकावयविनाशसमयेऽन्यावयव्युत्पत्तिसम्भवेन सन्तानविच्छेदासिद्ध्याऽनुमानमिदमप्रयोजकमिति चेन्न—एवं सति पटादिसन्तानस्याप्यविच्छेदप्रसङ्गात्। पटपरमाणुजनितपटान्तावयविसमुदाये तूलांशवत् पटाद्यंशोऽपि सर्वदोपलभ्येत । न चोपलभ्यते। विच्छेद एव तु दृश्यते । सन्तानपदद्वितीयार्थरीत्या त्वेवम्—ब्रह्माण्डमहीमहीधराद्यवयविधाराया अविच्छेदस्वीकारे पटादिरूपावयविधाराऽप्यविच्छिन्ना स्यात् । विच्छेद एव तु दृश्यत इति ॥ ननु पटादिकर्तृप्रह्लादादः कन्थादिना यत् सुखदुःखान्यतरानुभवात्मकभोगसम्पादनं तत्प्रयुक्तः पटादिविच्छेदः, न सन्तानत्वप्रयुक्तः । तथा च विश्वसन्तानो विच्छिन्नः सन्तानत्वादित्यत्र विच्छेदप्रतियोगित्वरूपसाध्यव्यापकं भोगसम्पादकावयवकत्वमुपाधिरिति चेन्न—सन्तानविच्छेदो ह्यवयविधाराविनाशस्तत्तदवयविनाशसमुदायः । तत्रैकैकस्मिन्नपि नाशेऽवयवापगम एव कारणम्। यदि भोगसम्पादकावयवकत्वं विनाशेऽवयवापगमे वा प्रयोजकम् , तर्हि भोगसम्पादकावयवकत्वाभावात् द्व्यणुकनाशो न स्यात्। एवं च प्रयोजकाभावेनावयवापगमाभावे विनाशाभावे च सति

१ अत्र समाहारादेकत्वम् । २ पा० एवं तर्हि । बो. 'एवं तर्हीति । यदि सन्तानानुच्छेदः स्यात् तर्हि अवयवापोद्धारलक्षणो विनाशोऽपि न स्यात् ।'

३. बो. कन्थादीति न सन्तानत्वप्रयुक्तः पटादेर्विनाशः, किं तु विनष्टपटावयवारब्धकन्थादिद्वारभोगविशेषप्रयुक्त इति । कर्त्रादिभोगविशेषेति पाठे त्वयमर्थः-पटादेः कर्तॄणां कुविन्दादीनां पटाद्युत्पादनद्वारेण ये भोगास्तेषां तद्विनाशमन्तरेण विनाशानुपपत्तेस्तत्प्रयुक्तो विनाशः इति।' एतदनुसारेण पूर्वं 'घटादि' इति क. ख. पु० दृष्टमप्यत्र 'पटादि' इति शोधितम् ।

**नित्य एव हेतुः ; अकादाचित्कत्वप्रसङ्गात् । तत् अतिनिस्तरक्रमेतत् ॥ ईदृश्यां च वस्तुस्थितौ भोगोऽपि कर्मभिरेवमेव वस्तुस्वभावानतिक्रमेण सम्पादनीय इति द्व्यणुकवत् पिपीलिकाण्डादेर्ब्रह्माण्डपर्यन्तस्यापि विश्वस्येयमेव गतिरिति प्रतिबन्धसिद्धिः ॥**

**[66] तथा च ब्रह्माण्डे परमाणुसाक्षात्वितरि परमाणुषु च स्वतन्त्रेषु पृथगासीनेषु तदन्तःपातिनः प्राणिगणाः १ क्व वर्तन्ताम् , कुपितकपिकपोलान्तर्गतोदुम्बरमशकसमूहवत्, दवदहनदह्यमानदारूदरविघूर्णमानघुणसंघातवत्, प्रलयपवनोल्लासनीयौर्वानलनिपातिपोतसांयात्रिकसार्थवद्वेति ॥**

---

भावकार्यस्य विनाशनियमात् अविनाशिनां द्व्यणुकानामनादित्वमपि स्यात् । अतश्च द्व्यणुकत्वोक्तिर्न घटते ; अणुद्वयोत्पाद्यस्यैव द्व्यणुकत्वात् । तस्मादेवं स्वीकर्तव्यम्—भोगोत्पादकावयवकत्वमस्तु मा वा । कार्यस्योत्पत्तिः स्थितिश्चेति द्वे स्तः । उत्पत्तिराद्यक्षणसम्बन्धः ; स्थितिरनुवृत्तिर्द्वितीयादिक्षणसम्बन्धः । तत्र यत् यदधीनस्थितिकं, तत् तदभावे स्थितिं न लभते । यत् यत्कारणं जन्यं, तस्य तत्प्राप्तावुत्पत्तिः । तत्र स्थितिहेतोर्नित्यत्वे नित्यस्थितिप्रसङ्गात्, उत्पत्तिहेतोर्नित्यत्वे च कार्यस्य कादाचित्कत्वभङ्गप्रसङ्गात् तयोरनित्यत्वम् । तदिदमतिनिष्प्रकम्पम् । एवं चैकावयवस्थितिकारणावयवसंयोगाद्यपगमेन तन्निवृत्तौ, अवयव्यन्तरोत्पादकहेतूपगमाभावे च तदनुत्पत्तावपर्जनीयः सन्तानविच्छेदः ॥ न च विश्वसन्तानविच्छेदकालेऽपि केषांचित्कर्मणां भोगसम्पादनार्थपरिपाकसम्भवात् कथं विच्छेदः ? तदवश्यमवयव्यन्तरमुत्पद्येतैवेति वाच्यम्—कार्यं कारणाधीनं निवर्त्यं चेत्येवमुत्पत्तिनिवृत्तिभागित्वरूपवस्तुस्थितौ सत्यां कर्मणां वस्तुस्वभावभञ्जकत्वासम्भवेन तदनतिक्रमेण कारणाधीनकार्योत्पत्तिसमयप्रतीक्षयैव तैर्भोगस्य सम्पाद्यत्वात् । अतो द्व्यणुकस्येव आ पिपीलिकाण्डात् आ च ब्रह्माण्डात सर्वस्य जातु सर्वथोच्छेद एव । ततः सन्तानत्वरूपहेतोर्विच्छेदरूपसाध्येन सह प्रतिबन्धस्य (व्याप्ते) सिद्धिरिति सर्गप्रलयसिद्धिरिति ।

[66] तथा च ब्रह्माण्डस्याऽऽपरमाण्वन्तभङ्गे सति परमाणुषु च विशीर्य कार्यारम्भककर्मरहितं स्थितेषु तदन्तर्गताः प्राणिगणा अपि कुपितकपिकपोलान्तर्गतोदुम्बरफलस्थितक्रिमिसमूहवत् दवदहनदह्यमानदारूदरविघूर्णमानघुणसङ्घातवत् अत्युग्रपवनपरिकम्प्यमानवडवानलपातिपोतमध्यस्थितसांयात्रिकपुरुषसार्थवच्च प्रलयपावकपवनादिपरीताः प्रणश्यन्ति ; न पुनः कथमपि वर्तन्त इति सिद्धमुच्चारयितृपुरुषाभावाद्वेदस्य प्रवाहतोऽपि न नित्यत्वमिति ॥

---

१ प्र. 'क्व वर्तन्तामिति विनश्यन्तीत्यर्थः । महाद्रव्यान्तरेण निहन्यमानाधारत्वात । महादहनदह्यमानाश्रयत्वात्, महापवनक्षुभितसमुद्रविलीयमानाधारत्वादिति अत्र हेतुत्रये क्रमेण दृष्टान्तत्रयमाह कुपितेति ।' तृतीयोदाहरणे मूले प्रकाशानुरोधेन समुद्रवाचिपदं स्थितलुप्तं नवेति विमृश्यम् ।

[67] १ अपि च— जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम् ॥ ३ ॥

पूर्वं हि मानस्यः प्रजाः समभवन् ; ततोऽपत्यैकप्रयोजनमैथुनसम्भवाः ; ततः कामा(ला?)-वर्जनीयसान्निधिजन्मानः ; इदानीं देशकालाद्यवस्थया पशुधर्मादेव भूयिष्ठाः। पूर्वं चरु-प्रभृतिषु संस्काराः २ समाधायिषत ; ततः क्षेत्रप्रभृतिषु ; ततो गर्भादितः ; इदानीं तु जातेषु लौकिक(लोक)व्यवहारमाश्रित्य। पूर्वं सहस्रशाखो वेदोऽध्यगायि ; ततो व्यस्तः; ततः षडङ्ग एकः ; इदानीं तु क्वचिदेका शाखेति। ३ पूर्वं ऋतवृत्तयो ब्राह्मणाः प्राद्योतिषत ; ततोऽमृतवृत्तयः ; ४ ततो मृतवृत्तयः ; संप्रति प्रमृतसत्यानृतकुसीदपाशुपाल्य-श्ववृत्ति५वृत्तयो भूयांसः। पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त ; ततः क्षत्रिया-

[67] अपि च न केवलं प्रलय एव वेदस्य विच्छेदः ; सृष्टावपि प्रति चतुर्युगमध्ययनानुष्ठान-विषयकशक्तिह्रासदर्शनात्संप्रदायविच्छेदः प्रमीयते। संप्रदायो हि नाम पारम्पर्येण सम्यगनुवृत्तो वेदवेदार्थोपदेशादिः। शक्तिस्तु आयुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणशक्त्यादिरिति वक्ष्यते। प्रकृष्टबीजाधीनजन्मनां पुष्कलसंस्कारसंस्कृतानां चायुरारोग्यादिसम्पत्तिर्यथायथं लोकवेदसिद्धा। अतस्तद्धेतुत्वाज्जन्मसंस्कारविद्यावृत्त्यादेरेव स्वाध्यायाध्ययने कर्मणि च शक्तिः। अस्तु वा जन्माद्यपेक्षया शक्तिः पृथक्। तथा कारिकायां शक्तेश्चेति चकारोऽध्याहार्यः। एषां च ह्रासः सम्यगेव दृश्यते। तथा हि—पूर्वं सङ्कल्पत एव प्रजाः समभवन् ; पश्चादव्यर्थव्ययित-वीर्याणां अत एव परिपुष्टानां विशिष्टविरक्तानामपत्यैकप्रयोजनकेन कादाचित्केन सङ्गमेन ; ततः

१ अत्र फक्किकायां, 'न केवलमनुमानं, दर्शनं च प्रलयसद्भावानुगुणमित्याह अपि चेति। जन्मादिह्रासदर्शनात् स्वाध्यायाध्ययने कर्मानुष्ठाने पुरुषाणां शक्तेश्च ह्रासदर्शनात् संप्रदा-यस्य ह्रासोऽवगम्यत इति। जन्मनो ह्रासं व्याचष्टे पूर्वं हीति' इत्येतावत्येव बोधनी ॥ अत्र प्र. 'एवं सर्वस्य नाशेऽर्थाद्वेदोऽपि नश्यतीत्युपपाद्य वेदह्रासदर्शनेनापि तन्नाशोऽनुमेय इत्याह अपि चेति। वेदह्रासे दृष्टान्तार्थं जन्मादिह्रास उक्तः। श्रूयमाणा अपि वेदा उच्छेत्स्यन्ति वाक्यत्वात् उच्छिन्नशाखावदिति भावः। प्रतियुगं क्रमेण ह्रासमाह पूर्वं हीति।'

२ प्र. 'सम्यगाहिता इत्यर्थः।' ३ प्र. 'ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्। मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्। सत्यानृतं तु वाणिज्यं कुसीदं च कलान्तरम्। पाशुपाल्यं—गोरक्षादि। श्ववृत्तिः सेवा।' ४ ततो मृतवृत्तय इति पुस्तकेषु न लक्ष्यते। तथाऽपि अत्रापि तृतीयस्यापेक्षितत्वादौचित्यात् पूर्ववाक्यसमानाकारतया मुद्रणप्रमादसम्भावनाबलाच्च निवेशितम्।

५ पाशुपाल्यश्ववृत्तय इति सर्वत्र पाठः। अत्रापि बहुव्रीहिसिद्धये औचित्यादिना 'वृत्ति' इत्यधिकमादृतम्।

तिथयोऽपि संवृत्ताः ; ततो १ वेश्याऽऽवेशिनोऽपि ; संप्रति शूद्रान्नभोजिनोऽपि । २ पूर्वममृतभुजः ; ततो विघसभुजः ; ततोऽन्नभुजः ; संप्रत्यघभुज एव । पूर्वं चतुष्पाद्धर्म ३ आसीत् ; ततस्तनूयमाने तपसि त्रिपात् ; ततो म्लायति ज्ञाने द्विपात् ; संप्रति जीर्यति यज्ञे दानैकपात् । सोऽपि पादो ४ दुरागतादिविपादिकाशतदुःस्थः अश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यते ॥

[68] 'इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते' इति चेन्न—स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात् । स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्यानभ्युपगमात् ।

कामवशात्, 'ऋतौ भार्यामुपेया'दित्यादिशास्त्रश्रद्धया कालेऽववर्जनीयाऽऽपतितात्सन्निधेर्बलात् ; इदानींपुनर्देशकालव्यक्तिव्यवस्थामन्तरेणात्यन्तशास्त्रलङ्घिनां पशुधर्मादेव प्रायेण । एवं संस्कार-विद्या-वृत्ति-वर्जनीयवर्जन-चरणीयचरण-विशेषधर्मेष्वपि क्रमेण ह्रासो द्रष्टव्यः । अत एवमेषां ह्रासात् संप्रदायह्रासो दुरपह्नव इति ।

[68] ननु —'कर्तृमत्त्वे तु वेदस्य सम्यङ्निश्चयात्ववादिभिः । कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ॥ एवमादि, विना युक्त्या, कल्प्यम् ; मीमांसकैः पुनः । इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते' (श्लोकवार्तिके-१.१.२) । तथा च यथेदानीं वेदस्य शिष्याचार्यपरम्परया प्रततत्वम् , तथैव सर्वकालेऽपीति अपौरुषेयतया निर्दुष्टः स्वतःप्रमाणं च वेद इति, परतः प्रामाण्यवादिभिरिव कर्तृतद्गुणादिकं, अप्रामाण्यवादिभिरिव कर्तृतद्दोषादिकं चादृश्यमानं यथा मीमांसकैर्नेष्यते, तथा पारम्पर्येण साम्प्रतमधीयमानशाखातिरिक्तवेदभागोऽपि नेष्यत इति कथं संप्रदायह्रास इति चेत्--न —अष्टकादिस्मृतेर्वसन्तोत्सवाद्याचारस्य च शिष्टपरिगृहीततया वेदमूलकत्वस्येष्टत्वात् उपलभ्यमानशाखासु तदनुपलम्भाच्छाखान्तरानुमाने तेषां साम्प्रतमदर्शनेनोच्छेदस्य स्वीकार्यत्वात । तथा हि —तादृशस्मृत्याचारयोरप्रामाण्यपक्षस्तावदुपर्युद्धाव्य निराकरिष्यते । अतः प्रामाण्यपक्षः शिष्यते । स एव च भवदभिमतः । तत्र पौरुषेययोः स्मृत्याचारयोः स्वातन्त्र्येण प्रामाण्यं तावदसम्भावि अनिष्टं च ॥ 'स्मृतिप्रणेतृणां च मन्वादीनां साक्षादतीन्द्रियार्थदर्शनमासीत्, यत एतत्प्रवृत्तिरि'त्यत्र च न किञ्चित्प्रमाणम्, अर्थस्यातीन्द्रियतयाऽस्मच्चक्षुषामिव

१ वेश्यावेशिनः वेश्यातिथयः' प्र. । २ प्र. अमृतभुजः यज्ञशेषभुजः । विघसभुजोऽतिथिशेषभुजः । अन्नभुजो भृत्यशेषभुजः । अघभुजः स्वार्थपाचितभुजः ।

३ प्र. तपोज्ञानयज्ञदानानि चत्वारः पादाः । ४ दुरागतं दुष्टदुपायात् द्यूतादेरागतम् । तदेव विपादिका पादरोगः ।

**मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात्। आचारात् स्मृतिः, स्मृतेश्चाचार इत्यनादिताभ्युपगमे अन्धपरम्पराप्रसङ्गात्॥**

[69] **आसंसारमनाम्नातस्य च वेदत्वव्याघातेनानुमानायोगात्। उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतो वाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात्॥**

[70] **यदि च शिष्टाचारत्वादिदं हितसाधनं, कर्तव्यं वेत्यनुमितम्, किं वेदानुमानेन; तदर्थस्यानुमानत एव सिद्धेः। न च धर्मवेदनत्वात् इदमेवानुमानं अनुमेयो वेदः; प्रत्यक्षसिद्धत्वात्; अशब्दत्वाच्च॥**

[71] **अथ शिष्टाचारत्वात्प्रमाणमूलोऽयमिति चेत्—ततस्सिद्धसाधनम्; प्रत्यक्ष-**

तच्चक्षुषामपि तद्दर्शने सामर्थ्यायोगात्॥ तादृशस्मृतेस्तत्प्राक्तनाचारो मूलम्, तस्य च ततः प्राचीना स्मृतिरित्येवं प्रवाहानादित्वस्वीकारे च साक्षात्प्रमाणभूतकिञ्चिन्मूलकत्वाभावादन्धपरम्पराप्रसङ्गः। अतो जात्यन्धपरम्परामात्रकृतरूपविशेषवचनवदप्रमाणमेव स्यात्। यथोक्तम्–'यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान्। स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते' (तन्त्र॰ १-३-१) इति। अतोऽनुमातव्या एव कतिचिच्छाखाः।

[69] अथ वेदानुमानमुरीक्रियते; अथापि तदुच्छेदो नेष्यत इति चेत्—तर्ह्यस्माभिरिव मन्वादिभिरप्यनुमेयत्वान्नित्यानुमेयो वेद इति प्रभाकरपक्षो वा ग्राह्यः, प्रत्यक्ष एवात्र वा देशान्तरे वाऽनुच्छिन्न एवास्तीति कुमारिलभट्टपक्षो वा। नाद्यः—आ सृष्टेः कदाचिदप्यश्रुतस्य नित्यानुमेयस्य वेदत्वासम्भवात्। व्याहतं हीदं, यत् नित्यानुमेय इति, अथ च वेद इति। वेदो हि विलक्षणो वर्णसमुदायः। वर्णानित्यत्वपक्षे ताल्वादितस्तदुत्पत्तिः, नित्यत्वपक्षे चाभिव्यक्तिः। पक्षद्वयेऽपि ताल्वादिव्यापाराभावे मौनिश्लोकादिवदभिप्रायस्थता वर्णानाम्। ईदृशैश्चैवावानवच्छिन्नश्च न कश्चिन्नियतानुपूर्वीको वर्णसमुदायः। वर्णनित्यत्वपक्षेऽप्येतदनवच्छिन्नत्वे केवलं कादिवर्णमात्रं सम्भाव्यते, न तु काचिदानुपूर्वी। तच्च निरर्थकमिति नैवं वेद इति।

[70] अथानुमानप्रकार एव विचार्यते। यदुच्यते—अयमाचारो हितसाधनं शिष्टाचारत्वात्। एवमयमाचारः कर्तव्यः शिष्टाचारत्वादित्यनुमीयत इति—तर्हि वेदादवगन्तव्यस्येष्टसाधनत्वस्य कृतिसाध्यत्वस्य चानुमानत एव सिद्धेर्वेदानुमानमेव न स्यात्। न च वेदस्येवास्यानुमानस्यापि हितसाधनधर्मवेदकत्वादिदमेवानुमानं नित्यानुमेयवेदशब्देनोच्यत इति वाच्यम्—अस्यानुमानस्य प्रत्यक्षसिद्धत्वेन नित्यानुमेयवेदत्वासम्भवात्; धर्मवेदकशब्दविशेषस्यैव वेदशब्दवाच्यतायाः प्रामाणिकतया शब्दातिरिक्तस्यानुमानस्य वेदत्वासम्भवाच्च।

[71] अथ नैवं हितसाधनत्वाद्यनुमानम्। किं तु अयमाचारः प्रमाणमूलः शिष्टाचारत्वादिति प्रमाणमूलकत्वानुमानमेव। तच्चानुमेयं प्रमाणं वेद इति वेदानुमानसिद्धिरिति चेत्— तर्हि सिद्ध-

**मूलत्वाभ्युपगमात्; तदसम्भवेऽप्यनुमानसम्भवात्॥ नित्यमज्ञायमानत्वात्तत् अप्रत्यायकं कथमनुमानं कथं च मूलमिति चेत्—वेदः किमज्ञायमानः प्रत्यायकः, अप्रत्यायक एव वा मूलम्; येन जडतम तमाद्रियसे ॥ अनुमितत्वात् ज्ञायमान एवेति चेत्–लिङ्गमप्येवमेवास्तु ॥ अनुमेयप्रतीतेः प्राक्तनी लिङ्गप्रतीतिरपेक्षिता; कारणत्वात्; न तु पश्चात्तनीति चेत्—शब्दप्रतीतिरप्येवमेव ॥**

[72] **आचारस्वरूपेण शब्दमूलत्वमनुमीयते । तेन तु शब्देन कर्तव्यता प्रतीयत इति चेन्न–आचारस्वरूपस्य प्रत्यक्षसिद्धत्वेन मूलान्तरानपेक्षणात्॥ तस्मात्कर्तव्यतायां प्रत्यक्षाभावात्, अप्रमिततया च शब्दानुमानानवकाशात्, प्रत्यक्षश्रुतेरसम्भवात्, शिष्टाचारत्वेनैव**

---

साधनम् । आचारस्य प्रत्यक्षदृश्यत्वेन प्रमाणमूलकत्वस्य सिद्धत्वात् । आचारस्येष्टसाधनत्वकर्तव्यत्वरूपेण प्रत्यक्षमूलकत्वासम्भवेऽप्यनुमानमूलकत्वसम्भवात् सिद्धसाधनमेव । ननु परोक्षानुभवप्रमाणस्यानुमानस्य ज्ञायमानतयैवानुमितिहेतुत्वम् । न चोक्तकर्तव्यत्वादिरूपेणाचारग्राहकं किञ्चिदनुमानं विशिष्य ज्ञातमस्ति । अतो नित्यमज्ञायमानत्वादुक्तरूपाक्रान्ताचाराप्रत्यायकस्य तस्य कथमनुमानत्वं मूलत्वं चेति चेत्—तर्हि त्वदाभिमतप्रमाणस्य वेदस्यापि परोक्षानुभवप्रमाणतया ज्ञायमानतयैव हेतुत्वम्, तथा प्रत्यायकत्वे सत्येव च मूलत्वमिमि तुल्यो दोषः । ननु प्रकृतानुमानेनानुमीयमानत्वाद्वेदो ज्ञायमान एवेति कथमज्ञायमानत्वमिति चेत्–अनुमानमपि तर्हीत्थं ज्ञायमानमेव ॥ नन्वनुमेयविषयकज्ञानात् प्राग्लिङ्गज्ञानमपेक्षितम्; तत्र तस्य हेतुत्वात्; अग्निज्ञानात्प्रागिव धूमज्ञानम् । अत्र च प्रमाणमूलत्वं साध्यं न प्रमाणगम्यत्वरूपं, सिद्धसाधनादिति प्रमाणगम्यकर्तव्यताकत्वरूपं वाच्यम् । तत्र कर्तव्यतया सह प्रमाणमनुमीयते । तदनन्तरमेव तत् प्रमाणमनुमानरूपमेवम्भूतमिति विशिष्य ज्ञेयमिति अनुमेयकर्तव्यताप्रतीतेः प्रागनुमानस्य विशिष्याज्ञातत्वान्नास्य प्रमाणस्यानुमानत्वमिति चेत्–तर्हि लिङ्गप्रतीतिवच्छब्दप्रतीतिरप्यर्थप्रतीतेः प्रागपेक्षिता; तथा प्रकृतानुमित्या कर्तव्यतारूपार्थस्य ग्रहणात्पश्चादेव तत्प्रमाणं शब्दरूपमिति विशिष्य ज्ञेयमिति न प्रमाणमिदं शब्दोऽपि भवितुमर्हति ॥

[72] एतेन 'प्रमाणमूलत्वमिति सामान्यनिर्देशत्यागेन शब्दमूलत्वमेव साध्यते । न च शब्दबोध्यकर्तव्यताकत्वरूपशब्दमूलत्वान्तर्गतशब्दांशानुमानवैयर्थ्यमिति वाच्यम् । आचारस्वरूप एव शब्दगम्यत्वानुमानात्; कर्तव्यत्वांशस्यानुमितशब्दबोध्यतया प्रकृतानुमानाविषयत्वात्– इति निरस्तम् । स्वरूपस्य प्रत्यक्षसिद्धत्वेन मूलजिज्ञासाभावान्मूलान्तरानपेक्षणात् । तस्मादाचारस्वरूपेण शब्दानुमित्ययोगात् कर्तव्यतयैव तदनुमानम् । कर्तव्यताविषये च प्रत्यक्षाभावात् तस्या अप्रतीतत्वेन तया शब्दस्यानुमानानवकाशात् तद्विषये प्रत्यक्षश्रुत्यभावाच्चानुमानमेव मानम् ।

कर्तव्यतामनुमाय तया मूलशब्दानुमानम् । तथा च किं तेन ; तदर्थस्य प्रागेव सिद्धेः ॥

[73] १ 'तथाऽप्यागममूलत्वमेव तस्य ; व्याप्तेः' इति चेत्—अत एव तर्हि तस्य प्रत्यक्षानुमानमूलत्वमनुमेयम् ॥ आदिमतस्तत्त्वं स्यात् ; अयं त्वनादिरिति चेत्—आचारोऽपि २ तर्हीदम्प्रथमस्तथा स्यात्, अयं त्वनादिर्विनाऽप्यागमं भविष्यति ॥ आचारकर्तव्यतानुमानयोरेवमनादित्वमस्तु ; किं नश्छिन्नमिति चेत्—प्रथमं ताव'न्नित्यानुमेयो वेद'इति ; द्वितीयं च 'देशनैव धर्मे प्रमाण'मिति ॥

[74] ३ अथायमाशयः—वैदिका अप्याचाराः राजसूयाश्वमेधादयः समुच्छिद्यमानाः

---

तथा चायं कर्तव्यशिष्टाचारत्वादित्यनुमाय ततस्तया शब्दानुमानम्— आचारश्शब्दमूलः कर्तव्यत्वादिति, यद्वा कर्तव्यतेयं शब्दमूला शिष्टाचारकर्तव्यतात्वादिति । एवं शब्दानुमानात्प्राक् कर्तव्यतासिद्धौ च शब्दानुमानं व्यर्थम् ; शब्दफलस्य कर्तव्यताज्ञानस्य प्रागेव सिद्धत्वात् ॥

[73] ननु कर्तव्यताप्यनुमानसिद्धैव । तथाऽपि तादृशकर्तव्यतायामागममूलत्वव्याप्तिदर्शनादाचारस्य प्रकृतस्याप्यागममूलकत्वमनुमीयत इति चेत्— तर्हि तुल्यरीत्या शब्दान्तराणां प्रत्यक्षानुमानान्यतरमूलकत्वदर्शनात्तस्यागमस्यापि तन्मूलकत्वमनुमेयम् ॥ नन्वादिमतश्शब्दस्य तन्मूलकत्वमस्तु । अयं त्वनुमीयमानश्शब्दोऽनादिरिति चेत्—तत्र व्याप्त्यस्वीकारे इहाप्यादिमत एवाचारस्य शब्दमूलकत्वं, न त्वनादेरिति, विनाप्यागममयमाचारस्स्यादिति व्याप्तिभङ्गाच्छब्दमूलकत्वं न सिद्ध्येत् ॥ नन्वस्तु काममाचारस्य कर्तव्यत्वानुमानस्य चैवमनादित्वम् ; किन्नः प्राभाकराणां छिन्नमिति चेत्—उभयं छिन्नम् । किमिति चेत्— नित्यानुमेयो वेद इतीदं तावत् प्रथमं छिन्नम् ; तथानुमानस्यापि प्रमाणत्वात् देशना चोदना श्रुतिरेव धर्मे प्रमाणमितीदं द्वितीयमपि छिन्नम् ।

[यस्त्वाचारस्य कर्तव्यत्वानुमानस्य च परस्पराश्रयणेऽन्धपरम्परापत्तिर्दोषः प्रागुक्तः, सोऽपि न— यथा हि वेदस्यापौरुषेयत्वस्वीकारेणाध्ययनपारम्पर्येणोत्तरोत्तराध्ययनस्य पूर्वपूर्वाध्ययनमूलकत्वस्वीकारेऽन्धपरम्परापत्तिर्नास्ति, वेदस्य स्वतः प्रामाण्यात् ; तथा कर्तव्यत्वानुमानस्याप्यनादेस्स्वतः प्रामाण्यात्तद्दोषासम्भव इति । ]

[74] अथायमाशयः-- आचारस्यानादित्वमेवासिद्धम् ; राजसूयादिवदुच्छेदानुमानात् ।

---

१ अयं क २ पाठ । बो. 'वेदमूलैव तस्यानुमीयते ; कर्तव्यतायाः वेदमूलत्वेन ज्योतिष्टोमादौ व्याप्तयवधारणात् । ' पा० 'आगममूलत्वेनैव तस्य व्याप्तेः ।' तदा तस्येत्यस्य , आचारसामान्यस्येति आचारत्वस्येति वाऽर्थः ; व्याप्तिरित्यत्रान्वयः ॥ २ अयं क. २ पाठः । बो. 'य आचारः .... आगममुपलभ्य प्रवर्तितः तस्यैवेदम्प्रथमस्य ज्योतिष्टोमादेरागममूलत्वमुपलब्धम् ।' क. ख. पा० 'तर्हि प्रथमतस्तथा' । ३ प्र. 'आचारस्यागममूलकत्वव्याप्तौ प्रयोजकमाह अथेति । आचाराः वेदमूलाः उच्छेदानन्तरभाविप्रवाहवत्त्वात् राजसूयवदिति ।'

दृश्यन्ते ; यत इदानीं नानुष्ठीयन्ते । न चैते प्रागपि नानुष्ठिता एव ; तदर्थस्य वेदराशेरप्रामाण्यप्रसङ्गात् समुद्रतरणोपदेशवत् ॥ न चैवमेवास्तु ; दर्शाद्युपदेशेन तुल्ययोगक्षेमत्वात् ॥ एवं, पुनः स कश्चित् कालो भविता, यत्रैतेऽनुष्ठास्यन्ते । तथाऽन्ये(था चान्ये) प्याचाराः समुच्छेत्स्यन्ते अनुष्ठास्यन्ते च , इति न विच्छेदः । ततस्तद्वदागममूलता– इति चेत्—एवं तर्हि प्रवाहादौ लिङ्गाभावे कर्तव्यत्वागमयोरननुमानात् , असत्यां प्रत्यक्षश्रुतौ आचारसङ्कथाऽपि कथमिति सर्वविप्लवः ॥ तस्मात् प्रत्यक्षश्रुतिरेव मूलमाचारस्य ; सा चेदानीं नास्तीति शाखोच्छेदः ॥

[75] अधुनाऽप्यस्ति साऽन्यत्रेति चेत्—अत्र कथं नास्ति ? किमुपाध्यायवंशानामन्यत्र गमनात्, तेषामेवोच्छेदाद्वा, आहोस्वित् स्वाध्यायविच्छेदात् । न प्रथमद्वितीयौ ; सर्वेषा·

---

वेदोक्ता अपि राजसूयाश्वमेधादयो विशिष्टक्षत्रियरूपाधिकारिवैकल्येन सम्प्रति समुच्छिन्नाः अननुष्ठीयमानत्वात् । प्राक्पुनरनुष्ठिताः, न तु नानुष्ठिताः ; सर्वदैवाननुष्ठाने तदर्थकस्य 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादिवेदवाक्यस्य लौकिकसमुद्रतरणोपदेशवाक्यस्येवाप्रामाण्यप्रसङ्गात् । न चाप्रामाण्यं युक्तम् ; संप्रत्यनुष्ठीयमानदर्शपूर्णमासादि धर्मोपदेशतुल्यत्वाद्वैदिकस्य तदुपदेशस्य । एतावता राजसूयाश्वमेधादेरात्यन्तिक उच्छेदो न संमन्तव्यः, पुनरपि विशिष्टाधिकारिविशिष्टकालसम्भवात् । एवमाचारान्तरेष्वपि मध्ये मध्ये उच्छेदः पश्चादनुष्ठानं च भाव्यताम् । तस्मादाचारत्वाविशेषात् प्रकृतोऽपि शिष्टाचार उच्छेदोत्तर इति विवक्षितस्यानादित्वस्यासिद्धिरिति । अतो मानान्तरायोगात् राजसूयादिवद्वेदागममूलत्वानुमानमिति चेत्—तर्हि भवदुक्तां रीतिं भवानेव विभावयतु । यदा खल्वस्याचारस्योच्छेदात् पश्चात् पुनःप्रवाहारम्भः, तदा तदव्यवहितपूर्वमाचाररूपहेत्वभावात्कर्तव्यत्वानुमानमिव शब्दानुमानमपि नास्तीति प्रमाणाभावादाचारस्यैव नात्मलाभ इति प्रवाहस्यैवाप्रसक्तौ सम्प्रति दृश्यमानं सर्वं भ्रान्तिमूलकमेव भविष्यति । [न च प्रवाहादाव्युच्छिन्नशाखोपदेष्टृस्थाने आचरितृपुरुष एवेश्वररूपः कल्प्यताम् । अतश्चाचारकर्तव्यत्वानुमानमिति वाच्यम् -वर्णाश्रमकुलगोत्रादिभेदेनाचारभेदादनेकशरीरपरिग्रहमन्तरेण तदनुष्ठानस्य दुर्वचतया एकशरीरपरिग्रहेण सर्वांशनिर्विचिकित्सोपदेशकल्पनस्यैव युक्तत्वात् ।] अतः प्रवाहारम्भे प्रत्यक्षश्रुतित एवाचरणीयमर्थमधिगम्याचारः प्रवृत्त इति स्वीकार्यम् । अतो नित्यानुमेयत्वपक्षाभावाच्छाखोच्छेदपक्ष एव ग्राह्य इति ॥

[75] ननु प्रत्यक्षश्रुतिरेव मूलम् । अथापि न शाखोच्छेदः ; किन्त्वधुनाप्यस्ति साऽन्यत्र । अतः प्रभाकरपक्षस्य भट्टकुमारिलखण्डितस्यासंभवेऽपि तत्संमतो देशान्तरस्थशाखापक्ष एवास्त्विति चेत्—अन्यत्र स्थिता शाखाऽत्र कुतो नास्तीति पृच्छामः । तत्रोपाध्यायवंश्यानां सर्वेषामन्यत्र

न्यत्र गमने उच्छेदे वा नियमेन भारतवर्षे शिष्टाचारस्याप्युच्छेदप्रसङ्गात्; तस्याध्येतृसमानकर्तृकत्वात्। अन्यत आगतैराचारप्रवर्तने अध्ययनप्रवर्तनमपि स्यात्॥ न तृतीयः; आध्यात्मिक१शक्तिसम्पन्नानामन्तेवासिनामविच्छेदे तस्यासम्भवात्। तस्मा२दायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात् स्वाध्यायानुष्ठाने शीर्यमाणे कथञ्चिदनुवर्तते; विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति युक्तमुत्पश्यामः॥

[76] ३ गतानुगतिको लोक इत्यप्रामाणिक एवाचारः, न तु शाखोच्छेदः; अनेकशाखागतेतिकर्तव्यतापूरणीयत्वादेकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्गादिति चेत्—न—

---

गमनात् अथवा तेषामुच्छेदादिति पक्षद्वयं तावन्न युक्तम्। तथा सति भारतवर्षे शाखाया इव तत्रोक्तस्य प्रकृताचारस्याप्युच्छेदप्रसङ्गात्; अध्ययनार्थानुष्ठानयोरेककर्तृकत्वात्। देशान्तरादागत्य यदि केचिदाचारं प्रवर्तयामासुः, अध्ययनं कुतो न प्रवर्तितवन्तस्स्युः। [न च सर्वमपि स्मृत्याचारसिद्धमेतद्देशाधीयमानप्रत्यक्षश्रुतिमूलमित्येव भट्टमतमिति वाच्यम्—तर्हि स्मृतिप्रणयनवैयर्थ्यात्। न चेतस्ततो विप्रकीर्णानां मन्त्रार्थवादगतसिद्धानुवादाभ्यूहनीयानां च वैशद्यमेव स्मृतिभिराधीयत इति वाच्यम्—'धन्वन्निव प्रपा असी'ति सिद्धानुवादबलात् 'मरुप्रदेशे प्रपा निर्मातव्ये'त्यादेरसिद्धेः; यत्किञ्चित्कारुणिकजनकल्पितानुवादमात्रेणाप्युपपत्तेस्तत्र धर्मोत्पत्तौ प्रमाणाभावात्। न च स्मार्तानां कर्मणां स्मृत्युक्तकर्तृविशेषकालविशेषद्रव्यविशेषेतिकर्तव्यताविशेषादिकं सर्वं सिद्धानुवादावगम्यं विप्रकीर्णं वा। तस्मात्, पुराणादिप्रामाण्याच्चानन्तेषु वेदेषूच्छिन्नानेकशाखामूलत्वमेव युक्तम्।] अत एवोद्देशो तच्छाखाभावस्य तदध्ययनविच्छेदादेवोपपादनमिति स एव स्वाध्यायविच्छेदः करणकलेबरशक्तिसम्पन्नेष्वन्तेवासिषु दुर्घट इति सिद्धः शक्तिह्रासः। तस्मादायुरारोग्यादेरहरहरपचीयमानत्वात्स्वाध्यायाध्ययनमर्थानुष्ठानं च शीर्यमाणे सती कतिपयास्तिकजनाऽऽश्रयणेन कथञ्चिदनुवर्तते; कालतो देशतश्च विस्तृताद्विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति युक्तमुत्पश्यामः।

[76] ननु प्रत्यक्षवेदोक्तमेव प्रामाणिकम्। स्मृत्यर्थ आचारश्च, 'गतानुगतिको लोको न लोकस्तत्त्वचिन्तकः' इति न्यायेनाप्रामाणिक एव। अतो न शाखोच्छेदः। अन्यथा, 'सर्वशाखाप्रत्ययमेकं कर्मे'त्युच्छिन्नानेकशाखागतानामप्यङ्गानामुपसंहर्तव्यत्वात् अनुपलम्भेन च तत्पूरणायोगादेकस्मिन्नपि कर्मणि, 'सम्पूर्णमिदमनुष्ठित'मिति साद्गुण्यविस्रम्भो न स्यात् इति चेत्—न महाजनपरिगृहीतत्वेन वेदवत् स्मृत्यादेरपि प्रमाणत्वात्। अन्यथा महाजनपरिग्रहरूपहेतो-

---

१ बो. "आध्यात्मिकी शक्तिर्वक्ष्यमाणायुरादिकम्।' २ बो. 'आयुरादीनां ग्रहणादिशक्तेश्च प्रत्यहमपचयादेव।' ३ बो. 'गतानुगतिको लोको न लोकस्तत्त्वचिन्तकः' इति तालतलबन्धन ? न्यायेन"।

एवं हि १ महाजनपरिग्रहस्योपप्लवसम्भवे (प्लुवे) वेदा अपि गतानुगतिकतयैव लोकैः परिगृह्यन्त इति, न वेदाः प्रमाणं स्युः । तथा च वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः । २ एतमेव च कालक्रमभाविशाखोच्छेद ३ भाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः प्रतिविहितम् । अतो नोक्तदोषोऽपि ॥

[77] न चायमुच्छेदो ज्ञानक्रमेण; येन श्लाघ्यः स्यात् । अपि तु प्रमादमदमानाऽऽलस्यनास्तिक्यपरिपाकक्रमेण । ४ ततश्चोच्छेदानन्तरं पुनः प्रवाहः, तदनन्तरं च पुन-

र्व्यभिचरितत्वेन वेदा अपि न प्रमाणं स्युः । तथा च कतिपयशाखोच्छेदलक्षणवृश्चिकभिया पलायमानस्य कृत्स्नवेदात्यन्ताप्रामाण्यरूपाशीविषमुखे निपातः ॥ तर्ह्यनाश्वासप्रसङ्गपरिहारः कथमिति चेत् — एतमेवाङ्गलोपप्रयुक्तं भाविनि शाखोच्छेदकाले भाविनमनाश्वासं पूर्वमालोच्य शिष्येषु सर्वशाखाग्रहणमान्द्य अनुष्ठापनमात्रेण सर्वाङ्गानुष्ठानक्रमरक्षणासामर्थ्यं च साक्षात्कृतवद्भिर्महर्षिभिः सर्वशाखागतेतिकर्तव्यताकलापसङ्कलनेन कल्पसूत्रादिभिः प्रतीकारः कृत इति न अनाश्वासप्रसङ्ग इति ।

[77] ननूच्छेदे पुनः प्रवाह इति न नियमः, येन प्रवाहारम्भे उपदेष्टृकल्पना स्यात । न हि संशयविपर्ययादिरुच्छिन्नः पुनरुत्पद्यते । न च नास्तिकमतानामास्तिकोच्छिन्नानां पुनःप्ररोहनियमोऽस्ति । न च महाप्रलयमुच्छिन्नस्य जगतः पुनःप्ररोहो नैयायिकैरिष्यते इति चेत्— न हि तादृशोच्छेदवत् अयमवान्तरप्रळय सृष्टिमध्यादिषु सम्भवन् शाखोच्छेदः उत्कृष्टज्ञानोत्पाद-

१. पा० चेत्— एवं हि । बोधन्यनुसारेण तन्निवेशनम् । २. पा० एतमेव । प्र. 'अनेकेत्यादि दूषयति एतमिति ।' बो. 'इतश्च शाखोच्छेदोऽवगम्यत इत्याह एतमिति ।'

३. बो. 'कालक्रमवशात् भाविना शाखोच्छेदेनानुष्ठातॄणां त्वदुक्तमार्गेण भाविनमनाश्वासम् ।' क. ख. पा० कालक्रमभाविनमनाश्वासम् । ४ 'जन्मसंस्कारतिकारिकामारभ्य परिपाकक्रमेणेत्यन्तं कतिपयशाखोच्छेदपरम् । ततश्चेत्यादिकं तद्दृष्टान्तेन सर्ववेदोच्छेदपरम् । न चायमुच्छेद इति पूर्वग्रन्थश्च, नन्वप्रमाणत्वादेवोच्छिन्नशाखा प्रागुच्छेदं प्रापिता, नाध्यापितेति शङ्काशमनार्थः' इति प्रकाशाशयः । प्र. 'तदेवं वेदत्वादाचारानुमितवेदवत् वेदा उच्छेत्स्यन्तीत्युपसंहरति ततश्चेति । दिनरात्रिह्रासैश्च न व्यभिचारः तस्यापि पक्षत्वादिति भावः । ननु वर्तमानप्रवाहोच्छेदसिद्धावपि भाविप्रवाहोच्छेदसिद्धिः कुत इत्यत आह अन्यथेति । प्रागुपातादृष्टस्य देहाद्यभावेन भोगाजनकत्वादित्यर्थः । नन्वेवमपि प्राच्यविच्छेदासिद्धौ परतन्त्रपुरुषपूर्वकोऽनादिरेवायं सम्प्रदाय इत्यत्र न किञ्चिदनिष्टमित्यत आह तथा चेति । ' बोधन्यामत्र न किञ्चित्स्पष्टम् । उपरितनग्रीतादिबलात् प्रागुक्तशाखोच्छेद विषयमेव सर्वमिति प्रतीयते ॥

रुच्छेद इति सारस्वतमिव स्रोतः; अन्यथा कृतहानप्रसङ्गात्। १ तथा च भाविप्रवाहवद् भवन्नप्ययमुच्छेदपूर्वक इत्यनुमीयते॥ स्मरति च भगवान्व्यासो गीतासु भगवद्वचनम्—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥' गी॰ (४. ७. ८) इति।

[78] कः पुनरयं महाजनपरिग्रहः? २ हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिः॥ स ह्यत्र न स्यात् ऋते निमित्तम्॥

---

क्रमकृतः। तथा हि सति स श्लाघ्यः बुद्धिपूर्वं ज्ञानपरिपाककल्पितोऽनुवर्तमान एव स्यात्। अपि त्वयमुच्छेदः प्रमादमदमानालस्यनास्तिक्यपरिपाकपर्वपरिकल्पित इतीदृशप्रमादादेः कर्मवैचित्र्याधीनस्य प्रवाहोच्छेदशालितया प्रकृत उच्छेदोऽपि पुनःप्रवाहान्तरित एव यथा सरस्वतीनदीप्रवाहो मध्ये मध्येऽन्तर्हितः प्राक् पश्चाच्च बहिः प्रवहति तथेति। एवं पुनःप्रवाहानङ्गीकारे आदरेण धर्मस्थापनार्थं कृतप्रवर्तितस्य ग्रन्थराश्यादेः सर्वात्मना हानप्रसङ्गः। एवंरीत्या कालक्रमेण सर्वशास्त्रोच्छेदे विशिष्टफलहेतुविविधधर्मसाधनदेहेन्द्रियादिसम्पत्त्यर्थप्राक्कृतबहुपुण्यहानप्रसङ्गः। अतः प्रवाहः सिद्धः। तस्य च प्रकृतप्रवाहस्येवोच्छेदोऽपि सिद्ध्यतीत्युत्तरोत्तरप्रवाहसिद्धिः। न चैवमपि दृश्यमानस्य प्रवाहस्योच्छेदानन्तरभावित्वं किमिति स्वीकार्यमिति शङ्क्यम्—अयं प्रवाह उच्छेदपूर्वकः प्रवाहत्वात् भाविप्रवाहवदित्यनुमानतस्तत्सिद्धेः॥ एवं प्रतियुगमुच्छेदः प्रवाहस्तदर्थमुपदेष्टुर्भगवतोऽवतार इत्यादिकं युक्तिसिद्धं 'यदा यदा हि'त्यादिना भगवतैव गीयतेऽपि। अतः आचारप्रवाहस्योच्छेदपूर्वकत्वात् प्रवाहादौ प्रत्यक्षश्रुतिरेव शरणमिति सा संप्रत्युच्छिन्नैवेति॥

[78] ननु महाजनपरिग्रहेण स्मृत्याचारयोः प्रामाण्यनिश्चये हि शास्त्रोच्छेदकल्पना। स एव परिग्रहो यथावत् दुरुपपादः॥ शिष्टपरिग्रह एव महाजनपरिग्रह इति चेत्—'के शिष्टाः? ये सदाचाराः सदाचाराश्च तत्कृताः। इतीतरेतराधीननिर्णयत्वादनिर्णयः' (तन्त्र वा॰ १. ३. ३.)॥

---

१. अयमेव पाठो व्याख्याद्वयसम्मतः क. पु. दृष्टश्च। ख. पु. 'तथा भावि।' वस्तुत आत्मतत्त्वविवेकैकरस्यदृष्टौ प्रवाहोच्छेदपदयोः सृष्टिप्रलयपरत्वमेव। तथा च अन्यथा कृतहानप्रसङ्गादित्यस्य पुनः सर्गानङ्गीकारे कृतहानं स्यादिति यथाश्रुत एवार्थ इति। गीताश्लोकेऽपि 'सर्गप्रलयविवक्षाऽपि भाव्ये'ति॥ २ प्र. 'अनन्यथासिद्धप्रवृत्तिविषयत्वमित्यर्थः।'

[79] **न ह्यत्रालस्यादिर्निमित्तम् ; दुःखमयकर्मप्रधानत्वात् । नाप्यन्यत्र सिद्धप्रामाण्ये ऽभ्युपायेऽनधिकारेणास्मिन्ननन्यगतिकतयाऽनुप्रवेशः ; परैः पूज्यानामप्यत्र १ प्रवेशात् । नापि भक्ष्यपेयाद्यद्वैतरागः ; तद्विभागव्यवस्थापरत्वात् । नापि कुतर्काभ्यासाहितव्यामोहः ; आकुमारं प्रवृत्तेः । नापि सम्भवद्विप्रलम्भपाषण्डसंसर्गः ; पित्रादिक्रमेण प्रवर्तनात् । नापि योगाभ्यासाभिमानेनाव्यग्रताभिसन्धिः ; प्राथमिकस्य कर्मकाण्डे**

'यद्येवं प्रलीनशाखमूलता कल्प्येत — ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्येत । यस्यैव हि यदभिप्रेतं स एव तत् प्रलीनशाखामस्तके निक्षिप्य कुर्यात्' (१. ३. १)। अतः स्मृतित्वं बुद्धादिवचसामपीति तत्राप्यक्षतो महाजनपरिग्रह इति चेत्—उच्यते । प्रत्यक्षवेदाविहितधर्मक्रियां ये, विना हेतुदर्शनं, विहितत्वबुद्ध्याऽऽद्रियन्ते , ते शिष्टाः महाजनाः । तैः श्रुतीनामिव यासां स्मृतीनां ग्रहणधारणे क्रियेते , श्रुत्यर्थस्येव च यदीयार्थस्यानुष्ठानमनुष्ठापनं च तत्रैव तादृशं परिगृहीतत्वम् । 'शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् । हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥ न च तैर्वेदमूलत्वमुच्यते गौतमादिवत्' (१. ३. २)॥ 'पारतन्त्र्यं तावत् बुद्धाद्यागमानां स्मर्यमाणपुरुषविशेषप्रणीतत्वात्तैरेव प्रतिपन्नम् । शब्दकृतकत्वादिप्रतिपादनाऽऽदराच्च पार्श्वस्थैरपि ज्ञायते । वेदमूलकत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्विषिदुष्टपुत्रवन्नाभ्युपगच्छन्ति' (१. ३. २)। अत उक्तरूपग्रहणधारणानुष्ठानादिरूपः स्मृत्याचारयोर्महाजनपरिग्रहो निमित्तान्तराभावात् प्रामाण्यमेव निमित्तमाश्रयतीति निश्चीयते ॥

[79] तथा हि—न ह्यत्रालस्यं प्रमादो वा निमित्तम् , दुःखप्रचुरकर्मैकविषयकत्वात् । नापि सिद्धप्रामाण्यकशास्त्रान्तराद्यनधिकारिणा गत्यन्तराभावात्स्मृत्याचारकर्मण्यनुप्रवेशिता इति युक्तम्—बाह्यबहुमततमानामभ्यर्थ्यमानानामप्यत्र प्रवेशनस्याननुमन्यमानत्वात् । नापि सर्वेष्वपि भक्ष्यपेयानुमार्गेष्वविशेषेण निरङ्कुशप्रवृत्तः सर्वजनसम्भेदविषयकश्च राग इह निमित्तम्—भक्ष्यादिनिषेधविधिसहस्रपुरस्सरं वर्णादिभेदेन तद्विभागव्यवस्थापरत्वात् स्मृत्यादेस्तदनुकूलत्वाभावात् । नापि कुयुक्तिकल्पितो व्यामोहो निमित्तम्—युक्तिनिरूपणाक्षमत्वावस्थायामप्याकुमारं प्रवृत्तेः । नापि विप्रलम्भकस्वयंनष्टपाषण्डसंसर्गः—विप्रलम्भशङ्काविदूरपित्रादिक्रमेण प्रवर्तनात् । नापि, 'योगाभ्यासे हि वयं प्रवीणाः । तत् किमिति कर्मानुष्ठान'मित्यभिमानेन स्वात्मनि कर्मानास्थाभिसन्धिरत्र निमित्तम्—स्मृत्याचारानुरोधिनो ब्राह्मणस्य तुर्याश्रमपूर्वाश्रमस्थस्य त्रिवर्गपरस्य कर्मकाण्डेऽत्यन्तं व्यग्रत्वात्तथाभिसन्ध्ययोगात् । नापि जीवनं निमित्तम्—'दृष्टलाभफला नापी'ति

१ अत्र परैः स्वमतप्रवेशार्थं पूज्यमानानामपि प्रवेश इहास्ति , न तु निष्कासितानामित्यर्थकं पाठान्तरं प्रदर्श्योपरितनपाठ एव शुद्ध इति स्थापितं मकरन्दे ।

(काण्ड एव) सुतरां व्यग्रत्वात् । नापि जीविका ; प्रागुक्तेन न्यायेन दृष्टफलाभावात् । नापि कुहकवञ्चना ; प्रकृते तदसम्भवात् ॥

[80] सम्भवन्ति १ त्वेते हेतवो बौद्धाद्यागमपरिग्रहे । २ तथा हि, भूयस्तत्र कर्मलाघवमिति अलसाः—इतः पतितानामप्यनुप्रवेश इति अनन्यगतिकाः-भक्ष्याद्यनियम इति रागिणः—स्वेच्छया परि(यार्थपरि)ग्रह इति कुतर्काभ्यासिनः—पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः—'उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते' इत्यादिश्रवणादव्यग्रताभिमानिनः—सप्तघटिकाभोजनादिसिद्धेर्जीविकेति अयोग्याः-आदित्यस्तम्भनं, पाषाणपाटनं, शाखाभङ्गः, भूतावेशः, प्रतिमाजल्पनं, धातुवाद इत्यादिधन्धनात् (वञ्चनात्) कुहकवञ्चितास्तान् ३ परिगृह्णन्तीति सम्भाव्यते। अतो न ते महाजनपरिगृहीता इति विभागः ॥

प्रथमस्तबक एवोक्तत्वात् । नापि स्वयमप्राप्तैर्वञ्चकैः कृता वञ्चना निमित्तम्—'विप्रलम्भोऽपि नेदृश' इति तत्रैव विस्तृतत्वात्तदसम्भवात् ॥

[80] यानीमानि निमित्तानीह विकल्प्यास्माभिर्निषिद्धानि । नूनं बौद्धाद्यागमेष्वेवैते प्रवृत्तिहेतवः । तथा हि सम्भाव्यते । बहुविद्याकालवित्ताऽऽयाससाध्यानां कर्मणां तत्राभावादलसास्तान् परिगृह्णन्तीति तत्राऽऽलस्यं निमित्तम् ; इतो भ्रष्टानामेभिरनधिकारितया समुद्घोषितानामपि तत्र सुखमनुप्रवेशनमनन्यगतिकैस्तत्प्रतिग्रहे निमित्तम् ; भक्ष्याद्यव्यवस्थाऽपि रागिणाम् ; यथामतं वृत्तिरिति कुतर्काभ्यासिनाम् । पित्राद्याद्दृतक्रमनिर्बन्धं विना प्रवृत्तिरिति पाषण्डसंसर्गिणाम् ; 'अत्यन्तमलिनः कायो देही चात्यन्तनिर्मलः। उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥' इत्यादेर्विकल्प्यदूषणवैखर्याः श्रवणमव्यग्रताभिमानिनाम् ; मध्याह्नकृत्यपञ्चमहायज्ञादिप्रबलकर्माभावात् सप्तघटिकभोजनादिसिद्धेर्जीविकाप्राप्तिरयोग्यानाम् ; तथा कश्चित्कालमेकत्रैवाऽऽदित्यस्थापनाभिनयनम्, पाषाणपाटनम्, अकस्माच्छाखाभङ्गः, शरीरान्तरप्रवेशः, प्रतिमाजल्पनम्, लोहकरणविषयो धातुवाद इत्येवं वञ्चनोपायसद्भावात् तदाकर्षणं कुहकवञ्चितानां निमित्तमिति । अतस्तेषां हेतुदर्शन-

१ अयं बोधनीपाठः । पा० सम्भवन्ति चैते । २ उपपादयति तथा हीति । इति सम्भाव्यते परिगृह्णन्तीत्येतत् सम्भाव्यते। यद्वा तथा हीत्यस्य सम्भाव्यत इत्यत्रान्वयः । तत्तदभिप्रायेणालसादयस्तान् परिगृह्णन्तीति हेतोः तथा किल सम्भाव्यते, आलस्यादिर्हेतुरिति संभाव्यत इत्यर्थः । अत्र बोधन्यां यथा हीति प्रतीकधारणम् । ३ अयं क २ पाठः । तथा हीत्यारभ्य सम्भाव्यत इत्यन्तमेकं वाक्यम् । बो. 'अलसास्तान् परिगृह्णन्तीति सम्बन्धः ।' क. ख. पु. ततस्तानिति पाठः । अत्र तत इति पदमधिकं, नातीवान्वितम् ।

**[81] स्यादेतत्—यद्येवं सर्वकर्मणां वृत्तिनिरोधः, न किञ्चिदुत्पद्यते, न किञ्चिद्विनश्यतीति स्तिमिताकाशकल्पे जगति कुतो विशेषात् पुनः सर्गः? प्रकृतिपरिणतेरिति सांख्यानां शोभते। ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते। वासनापरिपाकादिति सौगतमतमनुधावति। कालविशेषादिति चोपाधिविशेषाभावादयुक्तम्। असतां चोपलक्षणानां न विशेषकत्वम्; सर्वदा तुल्यरूपत्वात्। न च ज्ञानद्वारा; अनित्यस्य तस्य तदानीमभावात; नित्यस्य च विषयतः स्वरूपतश्चाविशेषादिति चेत्—न—**

**[82] शरीरसंक्षोभश्रमजनितनिद्राणां प्राणिनामायुःपरिपाकश्रमसम्पादनैकप्रयोजन-**

शून्यत्वाभावान्न तदागमाः महाजनपरिगृहीताः। तथा चेदृशमहाजनपरिग्रहबलात् स्मृत्याचारयोरपि प्रमाणतया शास्त्रोच्छेदः स्वीकर्तव्य एवेति सिद्धं सृष्टिमध्येऽपि सम्प्रदायह्रासोऽप्रकम्प्य इति॥ सम्पूर्णोच्छेदशालिनी च प्रलयदशा प्रागेव स्थापिता। न चैषा प्रवाहारम्भे शास्त्रप्रवर्तकपुरुषकल्पनागौरवपरिहाराय शक्या निषेद्धुम्। आन्तरालिकोच्छेदानन्तरप्रवाहकल्पनक्रमेण निर्वाहादिति।

[81] ननु यद्येवं सर्वजीवधर्माधर्माणामपि कार्यक्षमत्वविरहः कदाचित, तर्हि तस्यां प्रलयदशायां 'न किञ्चिदुत्पद्यते, न किञ्चिद्विनश्यती'ति निश्चलाकाशकल्पे परमाणुमात्रशेषे जगति पुनरपि सर्गसम्भवः कुतो विशेषात्? न हि प्रलयप्रथमक्षणवर्तिपरमाणुविशेषातिरिक्तो विशेषः पश्चात् सम्भाव्यते। यत्तु मूलप्रकृतेर्महदादिरूपेण परिणामवशात् पुनः सृष्टिरिति—तदिदं सांख्यमतम्। शुद्धब्रह्मण एव परिणतिवशात्सृष्टिरिति त्रिदण्डिभास्करमतम्। चित्तवासनापरिपाकवशादिति तु बाह्यस्य बौद्धस्य मतम्। न च कालविशेष एव कारणमिति युक्तम्। महाकालस्य नित्यतया विशेषत्वाभावाज्जन्यमवच्छेदकविशेषमादायैव तस्य वाच्यत्वात्। तस्य चोपाधेरभावात्। न च तत्काले किञ्चिदभावेऽपि सृष्टिकाले स्थितानामेवोपाधित्वमिति वाच्यम्। विशेषणस्यैवोपाधित्वात्, तेषां चोपलक्षणत्वेन तदयोगात्। अन्यथा सर्वदाऽपि तदुपलक्षितकालरूपकारणसत्त्वेन कार्यविरहानापत्तेः। न च सृष्टिस्थितवस्तुज्ञानमुपाधिरिति वाच्यम्— अयोगात्। तद्धि ज्ञानमनित्यं नित्यं वा; नाद्यः, सर्गात्पूर्वमभावात्। नान्त्यः, तस्य सर्वविषयकत्वात् सार्वकालिकत्वाच्च सृष्टिस्थमात्रविषयकत्वरूपस्य सर्गप्राक्क्षणमात्रभावित्वरूपस्य च विशेषस्याभावात् 'इदानीं सर्गारम्भ' इति विशेषे नियामकत्वायोगात्। अत आनुमानिकयोः सर्गप्रलययोः सर्गसम्भवः कथमिति चेत्—

[82] न वृत्तिविरोधः सुषुप्तिवदिति ह्युक्तम्। तथा च सुषुप्तस्य पुनर्जागरः कुतो विशेषात्। तत्र श्वासविशेषरूपः कालोपाधिर्नियामकः। श्वाससन्तानश्च प्राणसमवेतः प्राणिनामायुःपरिपाक-

श्वाससन्तानानुवृत्तिवत् महाभूतसंप्लवसंक्षोभलब्धसंस्काराणां परमाणूनां मन्दतर-तमादिभावेन कालावच्छेदैकप्रयोजनस्य प्रचयाख्यसंयोगपर्यन्तस्य कर्मसन्तानस्येश्वर-निःश्वसितस्यानुवृत्तेः। कियानसावित्यत्र, अविरोधात् आगमप्रसिद्धिमनतिक्रम्य तावन्तमेव कालमित्यनुमन्यते॥ ब्रह्माण्डान्तरव्यवहारो वा कालोपाधिः। तदवच्छिन्ने काले पुनः सर्गः। यथा खल्वलाबुलतायां विततानि फलानि, तथा परमेश्वरशक्तावनु-स्यूतानि सहस्रशोऽण्डानीति श्रूयते॥

[83] १ एवं विच्छेदसम्भवे कस्य केन परिग्रहः, यतः प्रामाण्यं स्यात्॥ ज्ञापकश्चा-

---

कमसंपादनार्थं पूर्वजागरकालजातशरीरसंक्षोभजनितनिद्रादशायामप्यनुवर्तते। तथाऽवान्तरप्रलये परमाणुषु कर्मसन्तानोऽनुवर्तते। स एव परमाण्वधिष्ठातुः प्रलयरात्रौ निद्राणस्य परस्य पुंसः श्वाससन्तानो भाव्यः। प्रलयकालिकानां च तेषां कर्मणां प्रचयाख्याशिथिलसंयोगजनकत्वेन संयोगस्थैर्याभावात् द्व्यणुकादिकं प्रलयमध्ये न भवति। ईदृशशिथिलसंयोगहेतुकर्मसन्तानोत्प-त्तिश्च तदा परमाणुगतवेगाख्यसंस्कारवशात्। स च वेगः कालानलपवनमहार्णवादिमहाभूत-संक्षोभात्मकप्रबलक्रियाकलितः। तस्य च वेगस्य प्रतिपरमाणु पृथक्स्थितस्य क्षिप्तेषुगतवेगस्येव स्वकारणवैचित्र्याधीनमाप्रलयावसानभावि तावत्क्रियासन्तानजननशक्तिशालित्वम्। अतो लोके वेगेषु तैव्रयमान्द्यतारतम्यसद्भावेन एकस्यैव वेगस्य तावत् क्रियाजनकत्वमविरुद्धं काणादनयानुरो-धेन। नैयायिकनयेन वा क्रियासन्तानासमवायिकारणतया वेगसन्तानोऽपि स्वीक्रियताम्। ईदृशकर्मसन्तानस्य च प्रयोजनं महाकालस्योपाध्यवच्छेदसम्पादनमेव। तेनैतावान् प्रलयकालः एतदनन्तरं सृष्टिरिति व्यवस्थोपपद्यते। तथा च यादृशक्रियोत्पत्त्यनन्तरं पुनः क्रियारम्भको वेगो नास्ति प्राक्तनसंक्षोभवैचित्र्याधीनस्य वेगस्य तावत् कालानुवृत्तिस्वाभाव्यात्—तादृशक्रिया-जनितः संयोगोऽशिथिलो द्व्यणुकारम्भाय भवतीति। एतावत्त्वमनुमानगम्यम्। स कर्मसन्तानः प्रलयकालिकः कियानित्यत्र तु, 'रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः' इत्यादिरागम एव शरणम्; बाधादर्शनात्। अत ईदृशोपाध्यवच्छिन्नकालविशेषात् पुनः सर्गः॥ अथ वा एक-ब्रह्माण्डनाशकालेऽपि ब्रह्माण्डान्तरसद्भावस्वीकारात् कालिकसम्बन्धेन तद्व्यवहारविशेषावच्छिन्नः कालः पुनःसृष्टिकारणं भवतु। अलाबुलतायां फलानीव, भगवतः शक्तावण्डानि सहस्रशः सन्तीति हि श्रूयते। 'रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते' इति ह्यामनन्तीति।

[83] तस्मात्प्रलयाङ्गीकारे पुनःसर्गस्य दुरुपपादत्वाभावेन दृश्यमानजगदुत्पत्तेः प्रलयसत्त्वेन वेदविच्छेदध्रौव्येण परिग्राह्यस्य वेदस्य परिग्रहीतुर्महाजनस्य चाभावेन कस्य केन परिग्रहः? अतः,

---

१ एवमिति प्रकाशपाठः। बोधन्यां तस्मादिति।

यमर्थः न कारकः । ततः कारकाभावान्निवर्तमानं कार्यं ज्ञापकाभिमतः कथङ्कारमास्थापयेत् ?

[84] स्यादेतत्—१ सन्ति कापिलादय एव साक्षात्कृतधर्माणः कर्मयोगासिद्धाः । त एव संसाराङ्गारेषु पच्यमानान् प्राणिनः पश्यन्तः परमकारुणिकाः प्रियहितोपदेशेनानुग्रहीष्यन्ति ; कृतं परमेश्वरेणानपेक्षितकीटादिसंख्यापरिज्ञानवता—इति चेन्न—

तदन्य(तोऽन्य)स्मिन्ननाश्वासात् । तथा हि— अतीन्द्रियार्थदर्शनोपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कारमुत्पादयति ; यतः समाश्वसिमः ॥ प्रमा-

महाजनपरिग्रहाच्च प्रामाण्यमिति को विरोधः इति प्रथमतः पृष्टमयुक्तम् । अतः सिद्धं नित्यत्वं प्रामाण्यं चेत्युभयमप्यसिद्धमिति । अत आप्तोक्तत्वेनैव प्रामाण्यं सर्गारम्भे निश्चेयमिति । किञ्चापौरुषेयत्वं तावदधस्तादेव निरस्तम् ! अतः पौरुषेये वेदे प्रामाण्यस्योत्पादकः पुरुषगुण एव । अयं तु महाजनपरिग्रहो निष्पन्ने प्रामाण्ये तदनुमितिजनकत्वाज्ज्ञापकः ; न तु कारकः । अतः पुरुषगुणानङ्गीकारे कारकाभावात्प्रामाण्यमनुत्पन्नमिति कथमयं महाजनपरिग्रहोऽनुमापकत्वेन सम्भाव्यमानोऽपि यथावदनुमापको भविष्यतीति सिद्धं वेदप्रामाण्यमुत्पत्तितो ज्ञप्तितश्चाऽऽप्तत्वापेक्षमिति ।

[84] अस्तु काममाप्तसापेक्षत्वम् । अथापि कर्मणा योगेन च सिद्धाः धर्माधर्मसाक्षात्कारशालिनः कपिलहिरण्यगर्भादय एव सर्वाभ्युपगताः सन्ति । त एव संसाराङ्गारेषु पच्यमानान् प्राणिनः पश्यन्तः परमया करुणया प्रियहितोपदेशेनानुग्रहीष्यन्तीति त एव वेदकर्तारो भवन्तु ॥ असर्वज्ञास्त इति चेत्—अस्तु काममेतत्? किं तावता ? उपदेष्टव्यज्ञानं त्वस्त्येव । अनपेक्षितं च क्रिमिकीटादिसंख्यापरिज्ञानमिति किं तथाभूतेन परमेणेश्वरेणेति चेन्न— तदन्यस्मिन्ननाश्वासात् । कपिलादिषु विषये चित्तसमाधानं न भवति, तेषामनित्यज्ञानत्वात् यथावस्थितज्ञानसामग्र्यास्तत्र दुर्वचत्वात् ।

तथा हि—तेषामतीन्द्रियार्थदर्शने क उपायः? ध्यानरूपो भावनेति चेत्— तस्या अनुपलब्धदर्शनोपायत्वं नास्त्येव । उपायत्वाभ्युपगमेऽपि तज्जन्यः साक्षात्कारः सत्यो यथार्थ इत्यत्र न किञ्चित्प्रमाणम् ; अविद्यमानकामिन्यादिसाक्षात्कारस्यापि तदधीनत्वात् । अतो न समाश्वासः । प्रमाणान्तरसंवादात्तस्य यथार्थत्वनिश्चय इति चेन्न—अहिंसाव्रतादिधर्माणां हितरूपफलानां च साध्यसाधनभावस्य प्रमाणान्तराविषयत्वेन तत्साक्षात्कर्तव्यत्वेनाभिमते तत्र प्रमाणसंवा-

१ बौ. 'कपिलहिरण्यगर्भादय एव सन्त्युपदेष्टारः । तेषां कारुण्यनिष्ठानाम् ।' अतः सन्तीति पाठो युक्तः । सन्तु कपिलादय इति तु दृश्यते ।

णान्तरसंवादादिति चेन्न-अहिंसादि। १ हितसाधनमित्यत्र तदभावात्॥ आगमोऽस्तीति चेन्न-भावनामात्रमूलत्वेन तस्याप्यनाश्वासविषयत्वात्॥ एकदेशसंवादेनापि प्रवृत्तिरिति चेन्न—२ स्वप्नाख्यानवदन्यथाऽपि सम्भवात्॥ न चानुपलब्धे भावनाऽपि। चोर-सर्पादयो ह्युपलब्धा एव भीरुभिर्भाव्यन्ते॥

[85] न च कर्मयोगयोर्हितसाधनत्वं कुतश्चिदुपलब्धम्। न चैत(चैत)योः स्वरूपेणोपलम्भः क्वचिदुपयुज्यते, भावनासाध्यो वा। न चास्मिन्नन्वयव्यतिरेकौ सम्भवतः; देहान्तरयोग्यत्वात्फलस्य; अप्रतीततया तदनु(दननु?)ष्ठाने ३ तदभावाच्च। न च कर्तृभोक्तृरूपोभयदेहप्रतिसन्धानादेव तदुपपद्यते; तदभावात्। न ह्येतस्य पूर्वकर्मणः फलमिदमनुभवामीति कश्चित्प्रतिसन्धत्ते॥

दस्य दुर्वचत्वात्। आगमस्तु कपिलादिगतभावनाजन्यत्वेन भवदभिमत इति, भावनायाः प्रमाणान्तरसंवादप्रश्नावसरे न शक्योपादानः॥ अथ प्रमाणान्तरसंवादाभावेऽपि भावनाजन्योपदेशे एकदेशसाफल्यदर्शनात् सर्वत्र प्रवृत्तिरिति चेन्न- स्वप्नाख्यानवदेकदेशसंवादोपपत्तेरप्रामाण्यस्यापि सम्भवात्। वस्तुतो भावनायाः प्रमाणान्तरोपलब्धविषये दर्शनसाधनत्वम्; न त्वनुपलब्धविषयेऽपि; चोरसर्पादीनामुपलब्धानामेव पश्चात्कदाचिद्भीरुभिर्भाव्यमानत्वात्, सर्वथा चोरादिकमजानतस्तद्विषयकभावनाऽभावात्। तथा च धर्माधर्मयोः कपिलादिभिः पूर्वं कथमप्यगृहीतत्वात् तद्विषयकभावनैव तेषां दुर्वचेति कथं तत्प्रत्यक्षम्।

[85] किञ्च कर्मणो योगस्य च फलं प्रति साध्यसाधनभाव एव कपिलादिभिः प्रथमं न बुद्ध इति तदनुष्ठानासम्भवात् कथं सर्वधर्माधर्मसाक्षात्कारः। न च साध्यसाधनभावाज्ञानेऽपि कर्मयोगयोः स्वरूपेणोपलम्भात् तदनुष्ठानं तैः कृतमिति वाच्यम्--वस्तुत आदौ तदुपलम्भस्यापि दुर्वचत्वात्; इष्टसाधनत्वाज्ञाने प्रवृत्त्यसम्भवाच्च। एवं भावनासाध्यः साध्यसाधनभावोपलम्भः प्रवर्तक इत्यपि न भवति, भावनायामेवाप्रवृत्तेः। न चान्वयव्यतिरेकावेव सर्वकर्मफलहेतुहेतुमद्भावे

१ यद्यप्यहिंसा न धर्मः अविहितत्वात्। हिंसा तु निषिद्धा। तथापि तस्याः हितसाधनत्वं प्रत्यवायाभावप्रयोजकत्वरूपम्। अहिंसावचनं वा कश्चित्कमत्र ग्राह्यम्।

२ बो. 'स्वप्ने श्रुतस्याख्यानस्य, यद्वाऽस्य स्वप्नस्येदमिति स्वप्नफलप्रतिपादकस्य।'

३ बोधन्याम्, 'तत्साधनत्वाप्रतीतौ कथमनुष्ठानं, कथं च फलदर्शनं, कथमन्वयव्यतिरेकावित्याह-अप्रतीततयेति। तदसम्भवादिति-फलस्यान्वयव्यतिरेकयोर्वाऽसम्भवादिति' इति दर्शनात् औचित्याच्च तदननुष्ठाने इति पाठो युक्तः। तदनुष्ठान इति पाठेऽपि निर्वाहो विस्तरेऽस्ति। एवमत्र तदभावादित्यत्र तदसम्भवादिति पा०।

**[86] केचित्तथा भविष्यन्तीति सम्भावनामात्रेऽप्यनाश्वासात् । विनिगमनायां प्रमाणाभावात् ॥ प्रतिपन्निशीथनिद्राणप्रातःप्रतिबुद्धसमस्तोपाध्यायवत् अन्योन्यसंवादात् कपिलादिषु समाश्वास इति चेन्न—एकजन्मप्रतिसन्धानवत् जन्मान्तरप्रतिसन्धाने प्रमाणाभावात् । १ तथाऽपि नाधिकारिविशेषेण ब्राह्मणत्वाद्यप्रतिसन्धानेऽनुष्ठानरूपस्याश्वासस्याभावात् । न हि पूर्वजन्मनि मातापितरौ ब्राह्मण्यात्तदुत्तरत्र ब्राह्मण्य-**

निश्चायकौ सम्भवत इति युक्तम्—कर्मजन्यफलस्य देहान्तरभोग्यत्वात् कार्यकारणयोरेकस्मिन् जन्मन्यन्वयव्यतिरेकग्रहणस्यायोगात् । किं च जाते हि कर्मणि फले चान्वयव्यतिरेकग्रहणम् । साध्यसाधनभावस्यैवाप्रतीतत्वया कर्मणोऽननुष्ठाने सति, कर्मानुष्ठाने फलेन सहान्वयव्यतिरेकौ न भवत इत्यतोऽपि न तौ निश्चायकौ भवितुमर्हतः ॥ न च कृष्यादाविव योऽहं कर्ता सोऽहं भोक्तेति प्रतिसन्धानात् कार्यकारणभावनिश्चय उपपद्यत इति वाच्यम्—अत्र विभिन्नजातीयोभयदेहप्रतिसन्धानाभावात् ॥ नन्वस्त्येव प्रतिसन्धानम् अकर्तृत्वे फलं न स्यादित्यनुमानादिति चेत्—सत्यं, सामान्यतः किमपि कर्मास्तीति ज्ञायेत । एतस्य कर्मणः फलमिदमनुभवामीति विशिष्य न प्रतिसन्धीयेत । अतोऽनुष्ठानमुपदेशश्च न सम्भवतीति ॥

[86] ननु जीववैचित्र्यात्कोचिदन्यमपि देहं प्रतिसन्धास्यन्तीति चेन्न—अनाश्वासात् । किं सत्यमिदं प्रतिसन्धानं, किं वा भ्रान्तिविजृम्भितमिति शङ्कायां विनिगमकाऽलाभात् । अथ—कपिलादयस्तावदुपदेष्टारः । न चाबुध्वोपदेशो भवतीति बोधोऽपि सिद्धः । स चेह जन्मन्यलब्धकारणो जन्मान्तराधीन इति निश्चीयते । तेषां च जातिस्मराणां तज्ज्ञानं जन्मान्तरानुभूतविषयकमेव, न त्वयथायथमित्येतत्तु—यथाऽनध्यायदिने निद्राय प्रातर्द्वितीयायां प्रतिबुध्योपदेष्टुमारभमाणानामुपाध्यायानामुदितं वेदज्ञानं पूर्वानुभूतानुपूर्वीविषयकमेवेति अन्योन्यसंवादान्निश्चीयते, तथा—कपिलहिरण्यगर्भाद्यन्योन्यसंवादान्निश्चीयेतेति चेन्न—वैषम्यात् । अनुभूतस्मरणं ह्येकस्मिन् जन्मनि भवति ; न त्वन्यस्मिन् । अन्यथाऽस्माकमपि तत्प्रसङ्गादुपदेशवैयर्थ्यात् । कथञ्चित् कचित् संवाददर्शनेन केषांचिन्मरणक्लेशादेर्जन्मान्तरसंस्कारप्रतिघातकत्वमस्वीकृत्य जातिस्मरत्वोपपादनेऽपि प्रथमोत्पन्नस्य कपिलादेः स्वगतं ब्राह्मणत्वमन्यद्वेत्यग्रहणात् कीदृशवर्णानुरोध्यनुष्ठानं सम्भवेत् । न हि जन्मान्तरे स्वगतब्राह्मणत्वप्रतिसन्धानं प्रकृते तत्सत्तां साधयेत् ; जन्मभेदेन जातिभेदसम्भवात् । न चादौ ब्राह्मण्यां ब्राह्मणाज्जातः पुरुषः ॥ न चेश्वरः कथं जानातीति

१ बो. 'जन्मान्तरानुभूतं प्रति सन्दधद्भिरपि कपिलादिभिः .... .... एतन्न निश्चीयेतेत्याह **तथा चे**ति । यद्वा **तथा चे**ति जन्मान्तरीयप्रतिसन्धानाभावे इत्यर्थः । ' इति । अत्र **तथा चे**त्येव दृश्यते ।

मिति नियमः ; येन सर्गादौ वर्णादिधर्मव्यवस्था स्यात् । ईश्वरवत् अदृष्टविशेषोपनिबद्धभूतविशेषा(तभेदा)नुपलम्भात् । अतीन्द्रियार्थदर्शित्वे चानाश्वासस्योक्तत्वात् ॥

[87] एतेन ब्रह्माण्डान्तरसञ्चारिवर्णव्यवस्थया सम्प्रदायप्रवर्तनमपास्तम्—सञ्चारशक्तेरभावात् । वर्षान्तरसञ्चरणमेव हि दुष्करम् । कुतो लोकान्तरसञ्चारः ? कुतस्तरां च ब्रह्माण्डान्तरगमनम् ? ॥ 'अणिमादिसम्पत्तेरेवमपि स्या'दिति चेन्न– १ अत्रापि प्रमाणाभावात् । सम्भावनामात्रेण समाश्वासानुपपत्तेः । २ अथ महाजनपरिग्रहान्यथानुपपत्तिरेवात्र प्रमाणमिति चेन्न— ३ एवंभूतैककल्पनयैवोपपत्तौ भूयःकल्पनायां गौरवप्रसङ्गात् । विदेहनिर्माणशक्तेरणिमादिविभूतेश्चावश्याभ्युपगन्तव्यत्वात् ॥ अस्त्वेक एवेति चेत्—न तर्हीश्वरमन्तरेणान्यत्र समाश्वास इति ॥

---

शङ्क्यम्—तस्य नित्यसर्वज्ञानकत्वाददृष्टविशेषाधीनब्राह्मणादिभूतविशेषोपलम्भसंभवात्। कपिलादेश्च कर्मयोगानन्तरमपि तादृशशक्तिसन्देहे प्रथमं स्वानुष्ठानोपयोगि तदुपलम्भस्य सुतरामसम्भवात् ।

[87] एतेन स्वगतवर्णविशेषनिश्चयदौर्लभ्येनैव—स्वयमनुष्ठानाशक्ततया ब्रह्माण्डान्तरसञ्चारिवर्णव्यवस्थादर्शनरूप-भावनातिरिक्तप्रमाणमूलकं तदनुसारेण संप्रदायप्रवर्तनमित्यप्यपास्तम् । भारतवर्षादिष्वेकवर्षस्थितस्य वर्षान्तरगमनमेव दुष्करमिति स्थिते च कथन्नु ब्रह्माण्डान्तरगमनसम्भावना । अत इतस्तत्र गमनं वा तत्रत्यानामिहाऽऽगमनं वा नैव सुकरमिति ॥ ननु प्राग्जन्मकृतकर्मविशेषाधीनया अणिमाद्यैश्वर्यसम्पत्त्या स्वगतब्राह्मण्यादिसाक्षात्करणवर्षान्तरगमनादि सर्वं सम्भवतीति चेन्न-तत्सम्पत्तौ प्रमाणाभावात् । सन्देहेऽप्यनाश्वासात् ॥ महाजनपरिग्रहान्यथाऽनुपपत्त्या तेषां तत्सम्पत्तिरप्यनुमीयत इति चेत्—तर्हि तदन्यथाऽनुपपत्त्या तथाविधशक्तिसम्पन्नस्यैकस्य कल्पनमेव युक्तम् ; न तु भूयसां कल्पनं ; गौरवात् । अस्मदादिसलक्षणदेहरहितस्य कार्यनिर्माणशक्तिरणिमादिश्चावश्यं स्वीकर्तव्येति स्थितेऽनेककल्पनं हि व्यर्थमेव । न च सन्त्येव स्वयं कपिलादय इति कथं कल्पनेति वाच्यम्—कपिलाद्युक्तिषु मिथो विरोधदर्शनेनैषु तादृशशक्त्यभावात् प्रसिद्धविलक्षणकल्पनस्यावश्यकत्वात् । एवं चैकैककल्पेऽपि तादृशानेककल्पनं, प्रतिकल्पमन्यान्य एक इत्यनेककल्पनं वा व्यर्थमेव ॥ अस्त्वेक एवेति चेत्—तर्हि स एकोऽसम्भवात् विनिगमनाविरहाच्च नासर्वज्ञाविश्वसनीयकपिलादिः क्रिमिकीटादिसंख्यादेरपि सकलधर्माधर्मफलप्रदेन ज्ञातव्यत्वादिति निर्हेतुकनिखिलज्ञानसम्पन्नः सर्वेश्वर एव स इति ॥

---

१ अयं व्याख्याद्वयसम्मतः पाठः । पा० तत्रापि क. ख. पु । २ बो. 'अथेति' । आद्यमहाजन पा० क. ख. पु । प्र. आद्येति प्रतीकधारणं दृश्यते । ३ बोधन्यनुसारेण नन्निवेशः । पुस्तकेषु तु न ।

[88]　कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत्क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्त्येष्वपि * ॥ ४ ॥

इति न्यायकुसुमाञ्जलौ द्वितीयस्तबकः ॥

---

[88] यः खलु मायावशादिन्द्रजालमिवात्यद्भुतप्रचुरमशेषजीवकार्यविलक्षणं पूर्वस्तबकोक्तादृष्टरूपमायानुसारेण जगत् सृष्ट्वा संहरन् संहृत्य च सृजन् सृष्टिप्रलयपरम्परया क्रीडति—तं तत एव देवशब्दाभिधेयं नित्यस्फुरितनिश्शेषज्ञानमहिमानं सत्यसंकल्पं अत एवास्मद्विश्वासमुख्यभूमिं भगवन्तं अन्त्येष्वपि समयेषु नमन् भूयासम् । नमनरूपो महागुण एव कांक्षितः ; न पुनर्जातिविशेषः । अतो नमन् अन्त्येष्वपि जातिविशेषेषु जायेयेति ॥

इति सिंहशिखरिशेखरकृपया कुसुमाञ्जलेर्द्वितीयमिमम् ।
श्रीवीरराघवोऽयं व्यवृणुत तर्कार्णवस्तबकम् ॥

इति

द्वितीयस्तबकविस्तरः ॥

श्रीरस्तु ॥



---

* पा० अन्तेष्वपि । प्र. 'नमन्नन्तकालेष्वपि भूयासम्' । बो. 'अन्त्येष्वपि जननेषु नीचास्वपि जातिषु वर्तमानः शिवं प्रति नमन् भूयासम् । यदि शिवं प्रति नमन् भवेयं, अन्त्येष्वपि भूयासम् ।' इति ।

॥ श्रीः ॥

## न्यायकुसुमाञ्जलौ तृतीयस्तबकः ॥

**नन्वेतदपि कथम्, तत्र बाधक १ सद्भावात् । तथा हि—यदि स्यात्, उपलभ्येत ॥ अयोग्यत्वात् सन्नपि नोपलभ्यत इति चेत्—एवं तर्हि शशशृङ्गमप्ययोग्यतयानोपलभ्यत इति स्यात् ॥ नैतदेवम्, शृङ्गस्य योग्यतयैव व्याप्तत्वादिति चेत्—२ चेतनस्यापि योग्योपाधिमत्तयैव व्याप्तत्वात् तद्बाधे सोऽपि बाधित एवेति तुल्यम् ॥ व्यापकस्वार्थाद्यनुपलम्भेनाप्यनुमीयते, नास्तीति । को हि प्रयोजनमन्तरेण किञ्चित्कुर्यादिति ॥**

---

॥ श्रीः ॥

## कुसुमाञ्जलिविस्तरे तृतीयस्तबकः ॥

अयमञ्जलिरञ्जनाद्रिकूटस्थिरनिक्षिप्तपदाम्बुजाय धाम्ने ।
परितो भ्रमतः प्रसह्य येन प्रहितं मे हृदयं स्वयं प्रियेऽस्मिन् ॥

ननु विधान्तरासम्भवेऽपि परलोकसाधनावबोधिवेदप्रामाण्यं ईश्वरस्य कर्तृत्वेनेत्येतदपि कथम्; ईश्वरे बाधकप्रमाणसद्भावात् । तथा हि—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपेषु षट्सु प्रमाणेषु मीमांसकैरस्माभिः स्वीकृतेषु इन्द्रियरूपं प्रत्यक्षप्रमाणं यद्यपीश्वराभावं न ग्राहयेत्; इन्द्रियस्याभावप्रत्यक्षहेतुतया अस्माभिरनभ्युपगमात्, अथापि तत्सहकारितया भवद्भिरपि स्वीकृता अनुपलब्धिरेव स्वतन्त्रा इन्द्रियसहकृता वाऽभिमतमीश्वराभावप्रत्यक्षं जनयिष्यति । अन्यथा, यदि स्यादीश्वरः, उपलभ्येत ॥ अथ योग्यानुपलब्धिर्हि प्रत्यक्षकारणम्; न केवला । अतो वर्तमानोऽपीश्वरः प्रत्यक्षायोग्यत्वान्नोपलभ्यत इति चेत्—तर्हि शशशृङ्गमपि स्वीकृत्य, 'यदि स्यादुपलभ्येते'ति प्रश्ने, तदप्ययोग्यत्वान्नोपलभ्यत इति वक्तव्यं स्यात् ॥ ननु नैवं शशशृङ्गं सिद्ध्यति । तद्धि नायोग्यं भवितुमर्हति । यत्र शृङ्गत्वं तत्र प्रत्यक्षयोग्यत्वमिति व्याप्त्या

---

१ अयं क २ पाठः । पा० संभवात् । बो. 'तत्रेश्वरे बाधकसद्भावात्' ।

२ प्र. 'शरीराविशिष्टात्मनि कर्तृत्वेन कर्तृयोग्यतानियमात् विशेषणबाधेन विशिष्टबाध एवेत्याह **चेतनस्यापी**ति । न तु कर्तृव्यापकशरीरबाधात् व्याप्यकर्तृबाधपरोऽयं ग्रन्थः प्रत्यक्षबाधस्योपक्रान्तत्वात् ॥'

[2] उच्यते—योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्दिः ? कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥

शशशृङ्गे योग्यत्वासिद्ध्यावश्यकतया योग्यानुपलब्धेरेव सत्त्वादिति चेत्— तर्हि यथा शृङ्गसामान्यस्य योग्यत्वाद्योग्यानुपलब्ध्या शशशृङ्गं बाध्यते, तथा चेतनसामान्यस्य योग्य-शरीरात्मकोपाधिमत्त्वस्य दर्शनात् ईश्वरेऽपि तादृशोपाधिमत्त्वस्य स्वीकार्यत्वात् योग्यानुपलब्ध्या उपाधिबाधे तादृशोपाधिविशिष्टचेतनात्मक ईश्वरोऽपि बाधित एव ॥ एवं स्वरूपसत्याऽनुपलब्ध्या प्रत्यक्षित एवायमीश्वराभावो ज्ञायमानयाऽनुपलब्ध्या हेत्वन्तरेण वाऽनुमीयतेऽपि । चेतनस्य हि किञ्चिदपि कुर्वतः केनचित्प्रयोजनेन भाव्यम् । न चेश्वरः स्वार्थं परार्थं वा जगत्सृजति । स्वार्थं चेत्—अवाप्तसमस्तकामत्वभङ्गः; सुखित्वापत्त्या ज्ञानेच्छाकृतिरूपत्रिविधविशेषगुणमात्रवत्त्वसिद्धान्तविरोधश्च । परार्थं चेत्—वैषम्यनैर्घृण्यापत्तिः । किं च कायव्यापारादि विना न कश्चित् करोतीति देहित्वादिकमपि चेतनव्यापकम् । तच्चेश्वरे नोपलभ्यते । अतः कर्तृत्वव्यापकस्य स्वार्थपरार्थरूपस्वार्थितफलस्य देहित्वादेश्चानुपलब्ध्या हेतुना कर्तृत्वबाधाज्जगत्कर्त्रीश्वराभावः सिद्ध्यतीति चेत्—

[2] उच्यते—केवलमदृष्टिरनुपलब्धिरसाधिका; किं तु योग्यानुपलब्धिरेव । सा योग्येऽपि कदाचिन्न प्रसरतीति स्थिते प्रत्यक्षायोग्ये परमात्मनि प्रतिषेधाय कुतः प्रसरेत् ॥ ननु योग्योपाधिविशिष्टचेतन एव हीश्वरः; स प्रतिषिद्ध्यत इति चेत्-एवं योग्यानुपलब्ध्या गृह्यमाणो योग्योपाधिविशिष्टचेतनाभावः किं विशेषणाभावः उत विशेष्याभावादिः । नाद्यः; तावता उपाधिप्रतिषेधेऽपि ईश्वरव्यक्तेरबाधात् । नान्त्यः; अयोग्यत्वाद्विशेष्यांशस्य योग्यानुपलब्धेरनवकाशात् ॥ ईश्वरे योग्यानुपलब्धिप्रसक्तौ किल शशशृङ्गप्रतिबन्देरवकाशः । तस्या एवाप्रसक्तौ कुतस्तरां तत्प्रतिबन्दिः ? नन्वयोग्यस्यापि शशशृङ्गस्य निषेधवदयं निषेधोऽस्त्विति चेन्न—अयोग्यशृङ्गस्य योग्यानुपलब्धिबलेनास्माभिरनिषेधात् । तस्मान्नेश्वराभावप्रत्यक्षम् ॥ अनुमानं तु ईश्वरोऽविद्यमानः प्रयोजनशून्यत्वादित्यादिकमाश्रयासिद्ध्या क्व प्रभवतीति ॥

१. 'न हि शशशृङ्गमयोग्यं योग्यानुपलब्ध्या निषिद्ध्यते येन प्रतिबन्दिः स्यात् । अथ शृङ्गं योग्यमेव नायोग्यम्, तदाऽतितरां न प्रतिबन्दिः' इति । मक 'प्रतिबन्दिसामान्यनिषेधे कृते अतितरां न प्रतिबन्दिरीति युज्यत इति तदर्थपरतया प्रथमं तृतीयमेव पादं व्याख्याय द्वितीयपादं व्याचष्टे अथेति' इति । परं तु मूले कुतः कुतस्तरामिति पदश्रवणात् प्रथमद्वितीयपादयोरेव मिथः सम्बन्धो युक्तः ।

**[3] स्वात्मैव तावत् योग्यानुपलब्ध्या प्रतिषेद्धुं न शक्यते ; कुतस्त्वयोग्यः परात्मा (परमात्मा) ? तथाहि–सुषुप्तयवस्थायामात्मानमनुपलभमानः, नास्तीत्यवधारयेत् ॥ कस्यापराधेनपुनः योग्योऽप्यात्मा तदानीं नोपलभ्यते ? सामग्रीवैगुण्यात् । ज्ञानादिक्षणिकगुणोपधानो ह्यात्मा गृह्यत इति अस्य स्वभावः ॥ ज्ञानमेव कुतो न जायत इति चिन्त्यते**

---

[3] तदिदं विस्तृणीमः । प्रत्यक्षयोग्योऽपि घटादिरन्धकारादौ न निषिद्धयते । किं बाह्यार्थविषयेण ; आत्मविषयेऽपि प्रत्यक्षयोग्यः स्वात्माऽपि योग्यानुपलब्धिबलात् कदाचिन्न प्रतिषेद्धुं शक्यते इति स्थिते कथं सुतरामयोग्यः परमात्मा प्रतिषिद्धयेत । स्वात्मा हि योग्योऽपि सुषुप्तयवस्थायां नोपलभ्यते । एवं सत्यपि योग्यानुपलब्ध्या स्वात्माभावप्रत्यक्षं तदा न भवति ।

[ननु तदा स्वात्माभावप्रत्यक्षं किमाकारकमनुपलब्धिबलादापद्यते । न खलु, अहं नास्मीत्युपलम्भः सम्भाव्येत ; तदाऽहंपदार्थाभावे आश्रयाभावात् प्रकृतोपलम्भोत्पत्त्यसम्भवात्, अहंपदार्थसत्त्वे च तस्य तदातनाभावप्रतियोगित्वासम्भवात् । न च सुषुप्तिकाले अहं नास्मीत्यनुभवासम्भवेऽपि प्रबुद्धः प्राक्तनयोग्यानुपलब्धिपरामर्शेन, 'सुषुप्तिकाले नाहमासं' इति प्रातश्चत्वरन्यायेन गृह्णात्वित्यापादयाम इति वाच्यम्– यदि स्यादुपलभ्येतेत्युपपाद्या योग्यानुपलब्धिर्हि उपलब्ध्यापादकसामग्र्यां सत्यामेव भवति । तत्र च सामग्र्यामुपलब्धिं प्रति समवायिकारणतया ऽहंपदार्थोऽपि निविष्ट इति योग्यानुपलब्धिः समवायिकारणसत्ताकालिकानुपलब्धिरेव । सा कथमात्माभावं साधयेदिति । अतः कथमापाद्यते । किञ्च यदि योग्यविषयेऽपि योग्यानुपलब्धिः प्रतिषेधाक्षमा, तर्हि कथं साऽभावप्रत्यक्षकारणम्–इति चेत् — न वयं योग्यानुपलब्धिरस्तीत्युक्त्वा स्वात्माभावप्रत्यक्षमापादयामः । किं तु योग्यानुपलब्ध्या आत्मा प्रतिषेद्धुं न शक्यते । अनुपलब्धिमात्रसद्भावेऽपि अभावप्रत्यक्षहेतुर्योग्यानुपलब्धिरस्तीति वक्तुं न शक्यत इति यावत् । तथा च योग्यविषय एव योग्यानुपलब्धेर्दुर्वचत्वे, योग्यादृष्टेः कुतोऽयोग्य इत्येव ब्रूमः ।]

ननु तदा स्वात्म-तन्मनस्संयोगरूपसमवाय्यसमवायिकारणादेरक्षतत्वात्कस्य हेतोर्वैकल्यादात्मायोग्योऽपि नोपलभ्यते । आशेरते च सुषुप्तावात्मभानमध्यात्मविदः । तथा चानुपलब्धिरेव कथमिति चेत् —कारणान्तरविरहप्रयुक्तसामग्रीवैगुण्यादेव । आत्मप्रत्यक्षं प्रति हि प्रत्यक्षयोग्यज्ञानादिरूपतद्गुणवैशिष्ट्यं कारणम् । स्वसमवेतकिञ्चिद्गुणोपहित एव चात्मा गृह्यते । यथा अहं जाने सुखीत्येवम् । सुषुप्तेः प्राचीनं ज्ञानादिकं तु तदैव नष्टम् । अतो गुणाभावादनुपलब्धिरास्ते । एवमपि न तत्र योग्यानुपलब्धिः । न हि योग्यस्यानुपलब्धिर्योग्यानुपलब्धिः । तथा हि सति सुषुप्तौ अनुपलभमानो नास्तीत्यवधारयेत् ; अनुपलब्धिवत् योग्यानुपलब्धेरपि सत्त्वात् । किं त्वनुपलब्धिर्योग्यताविशिष्टा योग्यानुपलब्धिः । योग्यता च प्रतियोगियोग्यता प्रतियोगि-

**पश्चाद्वा कथमुत्पत्स्यत इति चेत्—मनसोऽनिन्द्रियप्रत्यासन्नतयाऽजननात्; तत्प्रत्यासत्तौ च पश्चाज्जननात् ॥**

**[4] मनोवैभववादिनामिदमसम्मतम् । तथा हि । मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात्, १ (सर्वदा) विशेषगुणशून्यद्रव्यत्वात् नित्यत्वे सत्यनारम्भकद्रव्यत्वात् ज्ञानासमवायिकारणसंयोगाधारत्वादित्यादे २ रिति चेत्—**

**[5] न सर्वेषामापाततः स्वरूपासिद्धत्वात् । तथा हि—यदि रू(यदा हि रू)पाद्युपलब्धीनां क्रियाभेन करणतया मनोऽनुमितिः, न तदा द्रव्यत्वासिद्धिः; अद्रव्यस्यापि**

---

ग्राहकसामग्री । अतश्च विशेषगुणस्यात्मरूपप्रतियोगिग्राहकसामग्रीघटकत्वात् सुषुप्तौ गुणाभावेन सामग्रीवैकल्यात् योग्यानुपलब्धिर्योग्यविषयेऽपि नास्तीति ॥ ननु कुतस्तदा ज्ञानं न जायत इति, तथा चेत्—प्रबोधवेलायां परं पुनः कथमुत्पत्स्यत इति च चिन्तनीयमिति चेत्—'आत्मा मनसा संयुज्यते' इतिवत् मनः इन्द्रियेणेत्यस्याप्यपेक्षितत्वादिन्द्रियमनःसंयोगाभावात् सुषुप्तौ ज्ञानाभावः; प्रबोधे च तत्सत्त्वाद्‌ज्ञानोत्पत्तिरिति ।

[4] ननु मनसो विभुत्वं वदतां मीमांसकानां नेदं सम्मतम्; तस्य विभुत इन्द्रियसंयोगस्यावर्जनीयत्वात् । तदुक्तप्रकारेण हि मनो विभु स्पर्शप्रतियोगिकसार्वकालिकाभाववत्त्वे सति द्रव्यत्वात् । पृथिव्यादौ गुणादौ च व्यभिचारवारणाय दलद्वयम् । एवं विशेषगुणीयसार्वकालिकाभाववत्त्वे सति द्रव्यत्वादिति द्वितीयो हेतुः । दलकृत्यं पूर्ववत् । मनस्यपि गुणसत्त्वाद्विशेषेति । सार्वकालिकत्वविवक्षयोत्पत्तिक्षणे गुणशून्यपृथिव्यादिव्यावृत्तिः । नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वादिति तृतीयो हेतुः । अन्त्यावयविवारणाय विशेषणम् । परमाणुवारणायानारम्भकेति । मनसोऽपि संयोगाद्यारम्भकत्वात् द्रव्यारम्भकेति । गुणविशेषवारणाय द्रव्यत्वनिवेशः । त्रिष्वपि कालादिर्दृष्टान्तः । ज्ञानासमवायिकारणसंयोगाधारत्वादिति चतुर्थः । आत्मा दृष्टान्तः । इन्द्रियान्तरव्यावृत्तयेऽसमवायीति । एवमनित्यावृत्तिद्रव्यविभाजकधर्मवत्त्वात्, संयोगसमवायान्यतरसम्बन्धेन द्रव्यानाधारद्रव्यत्वादित्यपि हेतुरिति चेत्-

[5] उच्यते । अत्र यथाभूतं मनः, तथाभूततत्साधकसर्वयुक्त्यपरिशीलनेन धर्मिसिद्धिमालोचयेत्यनुमानमात्र धीप्रवृत्तौ द्रव्यत्वासिद्ध्या स्वरूपासिद्धिः । तद्ध्यनुमानं सुखाद्युपलब्धिः

---

१ आवश्यकमपि सर्वदेति पदं व्याख्यानुसारे न मूलेऽस्ति; किं तु लभ्यम् । बो. 'अत्रापि सर्वदेत्यनुषज्यते' इति । २ बो. 'सर्वत्रोपलभ्यमानकार्यत्वादित्यादिशब्दार्थः' इति । परं तु हेतुर्द्रव्यत्वघटित एव युक्तः, परिहारानुसारात् ।

करणत्वात् ॥ अथासामेव साक्षात्कारितयेन्द्रियत्वेन तदनुमातव्यम्, तथाऽपि व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र–यदि(तद्यदि) कर्णशष्कुलीवत् विषतशरीरावयवस्योपाधित्वम्, तदा तावन्मात्रे वृत्तिलाभः तद्दोषे च वृत्तिनिरोधः श्रोत्रवत् प्रसज्येत। ततः शरीरमात्रमुपाधिरभिधेयः(रवसेयः]। तथा च तदवच्छेदेन वृत्तिलाभे, 'शिरसि मे वेदना, पादे मे सुख'मित्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः; असमवायिकारणानुरोधेन विभुकार्याणां प्रादेशिकत्वनियमात्। शरीरतदवयवादिपरमाणुपर्यन्तोपाधिकल्पनायां कल्पनागौरवप्रसङ्गः, १ नियमानुपपत्तिश्चेति—ततोऽन्यदेवैकं सूक्ष्ममुपाधित्वेनातीन्द्रियं कल्पनीयम्। तथा च तस्यैवेन्द्रियत्वे स्वाभाविकेऽधिककल्पनायां प्रमाणाभावात् धर्मिग्राहकप्रमाणबाधः।

---

सकरणिका क्रियात्वाच्छिदादिक्रियावत् रूपाद्युपलब्धिवच्चेत्येवम्। तेन च, धात्वर्थः क्रियेति सुखाद्युपलब्धेरपि क्रियात्वेनमनःसिद्धावपि करणत्वहेतुना वास्यादिवत् द्रव्यत्वसिद्धिर्न वक्तुं शक्यते, व्याप्तिज्ञानादौ व्यभिचारात्।

अथापातगतिं परित्यज्योपलब्धीनां साक्षात्काराख्यविलक्षणविषयताशालित्वात् सुखाद्युपलब्धिरिन्द्रियजन्या उपलब्धित्वात् रूपोपलब्धिवदिति मनःसाधकयुक्तिपरिशीलनादिन्द्रियलक्षणाऽन्यथानुपपत्त्या द्रव्यत्वसिद्धिरित्युच्यते–तर्हि विभुत्वमसिद्धम्। तथा हि—तदा मनसो विभुत्वे विभुनो गगनस्य कर्णशष्कुलीरूपोपाध्यवच्छिन्नस्यैव श्रोत्रेन्द्रियत्ववत् सोपाधेरवेन्द्रियत्वं, न तु निरुपाधेः; अन्यथा वक्ष्यमाणदोषापरिहारादिति कश्चिदुपाधिर्वक्तव्यः। तथा च सति किं कश्चिदेव देहावयव उपाधिः, किं वा देहरूपावयविमात्रम्, उत सर्वावयवावयविसङ्घ इति विचार्यम्। आद्ये श्रोत्रस्य तदुपाध्यवच्छेदेनैव शब्दोपलम्भकत्ववत् तदेकावयवावच्छेदेनैव सुखाद्युपलम्भकत्वं स्यात्; तदुपघाते च बधिरश्रोत्रस्येव मनसः कार्यकरत्वं न स्यात्। अतोऽनुभवविरोधः। तदर्थं द्वितीयपक्षाभिधाने अवयव्यवच्छेदेनैव सुखाद्युपलब्धिः स्यादिति, शिरसि मे वेदना, पादे मे सुखमित्येकदेशावच्छिन्नत्वप्रतीतिविरोधः। विभुकार्यत्वेऽपि शब्दादीनां यत् अव्याप्यवृत्तित्वं तस्य, यदवच्छेदेनासमवायिकारणं संयोगस्तदवच्छेदेन कार्यमित्यसमवायिकारणानुरोधेनैव व्यवस्थाविधानात् प्रकृते शरीरस्योपाधित्वे शरीरावच्छिन्नमनःसंयोग आत्मनि पादावच्छेदेनैवास्तीत्यस्य दुर्वचतया, पादे मे सुखमिति प्रतीत्ययोगात्। तदर्थं तृतीयपक्षग्रहे शरीरादिपरमाणुपर्यन्तावयवधाराया उपाधित्वकल्पने गौरवम्, तथा तत्तदवयवावच्छिन्नमनःसंयोगदेहावच्छिन्नमनःसंयोगानां

---

१ सर्वेषामेव शरीरादीनामुपाधित्वे कुतो नियतदेशसुखाद्युत्पत्तिरित्यर्थः।

**[6] अथ ज्ञानक्रमेणेन्द्रियसहकारितया तदनुमानम्; ततः सुतरां प्रागुक्तदोषः। यदि च मनसो वैभवेऽप्यदृष्टवशात् क्रम उपपाद्येत, तदा मनसोऽसिद्धेराश्रयासिद्धिरेव वैभवहेतूनामिति ॥**

**[7] अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव अन्यथा अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत; जातोऽपि वा कदाचिन्निर्गुणः स्यात्; बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत। यत्र तु दृष्टानुपहारेणादृष्टव्यापारः, तत्र तद्वैगुण्यात् कार्यानुदयः; यथा परमाणुकर्मणः। तदिहापि यदि विषयेन्द्रियात्मनां समवधानमेव ज्ञानहेतुः, तदा तत्सद्भावे सदैव कार्यं स्यात्। न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति। न च सदैव ज्ञानोदयः। ततोऽतिरिक्त-**

---

समुच्चित्यासमवायिकारणत्वे पादावच्छिन्नत्वनियमानुपपत्तिः; विकल्पेन कारणत्वे व्यभिचारात् कारणत्वघटकनियमानुपपत्तिः; एकेन्द्रियजन्यज्ञानेनान्येन्द्रियजन्यज्ञानस्य युगपदनुत्पत्तिनियमानुपपत्तिश्च। अत ईदृशशरीरतदवयवभिन्नं अवच्छेदकत्वादेव विभुत्वायोगात् सूक्ष्मं, अप्रत्यक्षत्वाच्चातीन्द्रियं किञ्चित् उपाधित्वेन कल्प्यम्। तथा च तस्यैव मनस्त्वं युक्तम्, लाघवादिति मनस इन्द्रियत्वेन सिद्धिदशायामविभुत्वेनापि सिद्धिरिति मनःसाधकप्रमाणबाधितत्वाद्विभुत्वहेतवो दुष्टा इति ॥

[6] अथैतदनुमानापरिशीलनेऽपि यदि, 'युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (न्या. १. १)मिति सौत्रहेतुना, ऐन्द्रियिकज्ञानानि क्लृप्तकारणातिरिक्तेन्द्रियसहकारिसापेक्षाणि क्रमिकत्वात् (युगपदनुत्पद्यमानत्वात्) इति प्रयोगेण, यत्संयोगे इन्द्रियं प्रत्यक्षजनकं यदसंयोगे चाजनकं तादृशसहकारित्वेन बाह्यप्रत्यक्षार्थमेव मनोऽनुमीयते—तदा सुतरां धर्मिग्राहकप्रमाणबाधो विभुत्वहेतूनाम्। प्रागिन्द्रियत्वेन मनःसाधने तस्याविभुत्वमुपाधिशोधनेन लाघवबलेनोपपाद्यमासीत्। इदानीं तु हेतोरेव साक्षादविभुत्वसाधकत्वमिति ॥ यदि तु मनसो विभुत्वमेव स्वीकृत्य युगपद्ज्ञानानुत्पत्तिमदृष्टवशान्निर्वोढुमिच्छसि, तर्ह्यन्यथा निरूढत्वाद्धेतुः सहकार्यन्तरसाधक एव न भवतीति मनस एवासिद्धत्वात्कुत्र विभुत्वं साध्येत; आश्रयासिद्धत्वादुक्तानुमानानाम्।

[7] अथादृष्टस्य द्वेधा कार्यहेतुत्वम्; क्वचित् दृष्टकारणसङ्घटनं विना साक्षात्; यथा सर्गादौ परमाणुषु कर्मजनकत्वम्। तथा च सूत्रम्—'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि' इति (वै. द. 5. 2.); अन्यत्र परम्परया दृष्टकारणसङ्घटनेन। तस्मिंश्चोपहरणरूपे व्यापारे सिद्धे पुनरदृष्टापेक्षा न विद्यते। एवं च प्रकृते मनोऽनङ्गीकारे विषयेन्द्रियात्मसमवधानमात्रस्यैव ज्ञानहेतुतयाऽदृष्टेन तदुपहारे सति तदतिरिक्तस्यादृष्टोपहरणीयस्याभा-

मपेक्षितव्यम् । तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथाऽपि करणधर्मत्वेन क्रियाक्रमः सङ्गच्छते । अकल्पिते तु तस्मिन्नायं न्यायः ; प्रतिपत्तुरकरणत्वात् ; चक्षुरादीनामनेकत्वात् इति चेत्—

[8] नन्वेवमपि युगपद्ज्ञानानि मा भूवन् युगपद्ज्ञानं तु केन वार्यते ॥ भवत्येव समूहालम्बनमेकं ज्ञानमिति चेन्न—एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात् ॥ १ तेष्वपि भवत्येवेति चेन्न—आत्मङ्गकाले ज्ञानक्रमेण विवादविषये क्रमानुमानात् ।

---

वायुगपद्ज्ञानोत्पत्तिः स्यादेव । तस्मान्मनोऽपेक्षितमेव । एवं सिद्ध्यतश्च तस्य विभुत्वस्वीकारे तस्य सर्वेन्द्रियव्यापित्वादनुपपत्तिर्यद्यपि तदवस्थैव ; अथापि तस्यैकदा एकज्ञानजनकत्वमेव स्वभाव इति स्वीकारान्न दोषः । लोके च करणस्यैकदा एकत्रैकक्रियाजनकत्वमेव दृष्टमिति क्रियाक्रम एव करणधर्मः । अकल्पने तु मनसो नैषकरणधर्मन्यायः प्रवर्तेत ; ज्ञातुरात्मनः कर्तृत्वेन करणत्वाभावात्तत्र करणस्वभावाक्लृप्त्यसम्भवात् ; इन्द्रियाणां करणत्वेऽप्येकैकेन्द्रियस्यैकैकक्रियाजनकत्वक्लृप्तकरणस्वभावबलेन युगपदनुत्पत्तिनिर्वाहाभावाच्च । अतः सहकारित्वेन मनःसाधने विभुत्वमविकलमिति चेत्—

[8] ननु तर्ह्येवमतिरिक्तकरणस्वीकारेऽपि युगपद् ज्ञानोत्पत्तिवारणं कथमिति पृच्छामः । यद्यपि मनस एकदा एकज्ञानजनकत्वमेवेत्युक्तत्वात् चाक्षुषोत्पत्तिकाले त्वाचादिज्ञानान्तरमपीत्येवमनेकं ज्ञानं युगपन्नापादयितुं शक्यते ; अथापि युगपत् रूपस्पर्शादिसर्वविषयकं सर्वेन्द्रियजन्यमेकं ज्ञानं कथं वार्यताम् ; एकज्ञानजनकत्वस्वभावस्यैतदबाधकत्वात् ॥ ननु भवत्येव समूहालम्बनमेकं ज्ञानमिति चेत्—सत्यं इमौ घटपटौ, इमौ ध्वनिवर्णावित्येवमेकैकेन्द्रियग्राह्यानेकविषयकं भवति ? एवं विभिन्नेन्द्रियग्राह्यविषयकमपि, इमौ रूपरसावित्यादिकमापाद्येत ॥ ननु तेष्वपि नानेन्द्रियग्राह्येषु समूहालम्बनं ज्ञानं भवत्येव । यथा दीर्घशष्कुलीं सुरभिलां सकटात्कारं खादतो युगपदेतद्रूपरसगन्धस्पर्शशब्दविज्ञानमिति चेन्न-तत्रैव तत्तदिन्द्रियग्राह्यमात्रव्यासक्तचेतस इन्द्रियान्तरग्राह्यविषयकज्ञानादर्शनात पश्चादेव तदुत्पत्तिदर्शनात्, प्रकृतविवादविषयशष्कुलीभक्षणकालिकरूपादिज्ञानं रसादिज्ञानेन सह नोत्पन्नम् , किं तु क्रमिकं चाक्षुषादिज्ञानत्वाद्यासङ्गकालिकज्ञानवदित्यनुमानेन क्रमिकत्वसिद्ध्या समूहालम्बनत्वासम्भवात् । क्षणभेदसूक्ष्मेक्षणवैधुर्यात् पुनः समूहालम्बनत्वभ्रम इति ।

---

१ इदं सांख्यमतमिति बोधन्याम् ।

**[9] बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेत्—मै(नै)वम् नह्येष बुभुत्साया महिमा, यत् अबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न ज्ञानम्। अपि तु न तत्र संस्कारातिशयाधायकः प्रत्ययः स्यात्। यदि त्वबुभुत्सिते विषये सामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत्। तस्माद्बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपद्ज्ञानानुत्पत्तावुपयुज्यते; न तु स्वरूपतः॥**

**[10] विभुनोऽपि मनसो व्यापारक्रमात् क्रम इति चेन्न-तस्य संयोगातिरिक्तस्य कर्मरूपत्वे वैभवविरोधात्, गुणरूपत्वे नित्यस्य क्रमानुपपत्तेः; अनित्यस्य च नित्यैक-**

---

[9] ननु क्रमिकत्वे चाक्षुषज्ञानत्वादिकमप्रयोजकम्। तावता व्यासङ्गकालेऽपि यौगपद्यं तु नाऽऽपाद्यम्; तदा ज्ञानक्रमस्य बुभुत्साविशेषाधीनत्वात्; यत् बुभुत्सितं तद्गृह्यते—इति चेन्नैवम् बुभुत्साकाले ज्ञानक्रम एव कुत इति हि विमृश्यमस्ति। न ह्यबुभुत्सितविषये सत्यामपि सामग्र्यां ज्ञानप्रतिबन्धकत्वं वस्त्वन्तरबुभुत्सायाः प्रभावः; किं तु सामग्रीबलाज्जायमानस्यैव प्रत्ययस्य दृढतरकालान्तरभाविस्मरणोपयोगिसंस्कारानाधायकत्वं बुभुत्साधीनम्। अन्यथा ज्ञानप्रतिबन्धकत्वाङ्गीकारे घटदिदृक्षया चक्षुरुन्मीलने पटो न दृश्येत। अतो बुभुत्साया ज्ञानाप्रतिबन्धकत्वाद्व्यासङ्गकाले सर्वसम्मतः क्रियाक्रमोऽपि दुर्निरूपः स्यात्। तस्मादन्यथोपपादनासम्भवाद्व्यासङ्गकाले बुभुत्सा मनसोऽन्येन्द्रियसंयोगविघटनेन बुभुत्सितवस्तुग्राहकेन्द्रियसंयोगं सम्पादयति; अतोऽन्येन्द्रियमनःसन्निकर्षरूपकारणाभावादन्येन्द्रियजं ज्ञानं न भवतीत्येवमेव वक्तव्यम्। न तु बुभुत्सायाः स्वरूपतः प्रतिबन्धकता; एकेन्द्रियग्राह्यघटपटादिविषये घटायोन्मीलितेनापि चक्षुषा पटदर्शनात्। अतो व्यासङ्गकालिकक्रियाक्रमोऽपि मनसो विभुत्ववारकः। तथा च मनसोऽणुत्वसिद्धौ दीर्घशष्कुलीभक्षणादौ समूहालम्बनोपयोगिसर्वसामग्रीसमावेशासम्भवादन्यदेव तदाऽपि ज्ञानक्रम एव सम्मन्तव्य इति।

[10] ननु मनसो विभुत्वेऽपि न दोषः। तस्य हि व्यापारमन्तरेण करणत्वायोगात्तदावश्यकतया, यदा यद्ज्ञानानुगुणो व्यापारस्तदा तद् ज्ञानमिति व्यापारक्रमेणैव क्रियाक्रमः सम्पद्यत इति चेत्—स तावत् व्यापारः संयोगातिरिक्त एव त्वया वाच्यः; संयोगरूपत्वे मनसो विभुत्वेन सर्वेन्द्रियसंयोगस्य सदातनत्वेन क्रमासम्भवात्। अतः संयोगातिरिक्तस्स क इति विचार्यम्। किं कर्म किं वा गुणः? उभयोरेव लोके व्यापारत्वात्। तत्र नाद्यः; कर्मणो विभुत्वविरुद्धत्वात्। अन्त्ये-स किं नित्योऽनित्यो वा। आद्ये, सर्वेन्द्रियापेक्षितसर्वव्यापारनित्यतया क्रमानुपपत्तिरेव। अन्त्ये चानित्योऽयं गुणो नित्यैकमात्रसमवेतत्वादविभुद्रव्यसंयोगासमवायिकारणको

**गुणस्याविभुद्रव्यसंयोगासमवायिकारणकत्वेन तदन्तरेणानुपपत्तेः॥ तदपि कल्पयिष्यत इति चेत्—तदेव तर्हि मनस्स्थाने निवेश्यतां लाघवाय॥ तस्मादण्वेव मन इति॥**

(11) **तथा च तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः। एतदेव मनसः शीलमिति कुतो निश्चि(र्णी)तमिति चेत्—अन्वयव्यतिरेकाभ्याम्। न केवलं तस्य, किं तु सर्वेषामेवेन्द्रियाणाम्। न हि विशेषगुणमनपेक्ष्य चक्षुराद्यपि**

---

वाच्यः; नित्यवृत्तिद्वित्वसंयोगादेः एकमात्रवृत्तिरूपरसादेश्च तथात्वाभावेऽपि नित्यैकमात्रवृत्तेः शब्दपृथिवीपरमाणुरूपादेरविभुद्रव्यमेरीवह्न्यादिसंयोगसापेक्षत्वात्। तच्चाविभुद्रव्यं विलक्षणं न लक्ष्यते। अथ तदपि कल्प्यत इति चेत्—विभुद्रव्यस्य मनसः, तदर्थमविभुद्रव्यस्यान्यस्य च कल्पनामपेक्ष्य एकमविभुद्रव्यमेव मनस्त्वेन कल्प्यताम्, लाघवात्। अतो मनसोविभुत्वासम्भवात् मध्यमपरिमाणत्वे चानित्यत्वापत्तेरण्वेव मन इति।

(11) तथा च मनसो विभुत्वस्य निरस्तत्वादणुनस्तस्य सुषुप्त्यवस्थायामिन्द्रियप्रत्यासत्त्यभावात् ज्ञानानुदयादात्मनो विशेषगुणाधीहितत्वाभावान्न प्रत्यक्षम्॥ विशेषगुणे सत्येव मनसः प्रत्यक्षजनकत्वमिति कुतः प्रमाणादिति चेत्–अन्वयव्यतिरेकाभ्यामेव। नेदं मनस एव शीलम्; किं तु इन्द्रियसामान्यस्य। न हि चक्षुस्त्वगिन्द्रियं वोद्भूतरूपस्पर्शाभावे द्रव्यप्रत्यक्षं जनयति। तदिदं द्वितीयस्तबक एवावोचाम। अत एव हि तत्र तारत्वादेर्वर्णधर्मत्वविचारावसरे, **स्पर्शाद्यनन्तर्भावेण भावेषु त्वगादीनामव्यापारादित्युक्तम्।** तच्चेन्द्रियव्यवस्थाहेतुस्पर्शादिगुणमविषयीकृत्य त्वगादीन्द्रियं भावपदार्थं न गृह्णाति। स्पर्शाभावादिमभावपदार्थं तु स्पर्शादेस्तत्र प्रत्यक्षतया भानाभावेऽपि गृह्णीयात्। अतः स्पर्शाभानात्तारत्वं न त्वग्ग्राह्यमिति हि तदर्थः॥ नन्विन्द्रियप्रत्यासत्तेर्ज्ञानहेतुत्वे स्वप्नावस्थायामिन्द्रियाणामव्यापृतत्वात् कथं ज्ञानमिति चेत्–तदा न किञ्चित्प्रत्यक्षम्। केवलं पूर्वानुभवनिवहाधीनतत्तत्संस्कारोद्बोधबलात्तत्तद्विषयस्मृतिसन्ततिर्भवति। ततो दोषवशात्साक्षात्कारात्मकरजतभ्रम इव तदा दोषाददृष्टाद्वा स्मृतिविषयपदार्थानां परस्परोपरागेण स्वप्नविभ्रमा उत्पद्यन्ते। ननु सदृशवस्तुप्रत्यक्षादिकारणाभावात् संस्कारोद्बोध एव तदा कथमिति चेत्-इन्द्रियाणां बाह्यशब्दादिभिः प्रकृष्टसन्निकर्षाभावेऽपि प्रकृष्टशब्दादिविषयाभावेऽपि च कथञ्चिन्मन्दतरतमादिभावापन्नहेतुसम्पत्तिचिन्तनया बाह्यशब्दस्पर्शादेरुपलम्भस्य कथनीयत्वात्। सर्वात्मना तदसम्भवसमयेऽपि शरीरान्तरौष्ण्याद्प्रतिपत्तिबलात् संस्कारोद्बोधोऽस्तु। **कथञ्चिदेवं** प्राथमिकोद्बोधस्मरणसम्पत्तौ पूर्वपूर्वस्मरणवशादुत्तरोत्तरोद्बोधोऽपि शक्यवचनः॥ नचैवमिन्द्रियसन्निकर्षाभावात्सुषुप्तौ बाह्यप्रत्यक्षनिरासेऽपि स्वप्न इव विभ्रमा एव किं न भवेयुः, कुतश्च सुषुप्तिप्राक्कालिकव्याप्तिज्ञानादिसामग्रीबलादनुमित्यादि नोत्पद्यते, कुतश्च नेच्छायत्नसुखदुःखादय

द्रव्ये प्रवर्तते ॥ १ स्वप्नावस्थायां कथं ज्ञानमिति चेत्— तत्तत्संस्कारोद्बोधे विषयस्मरणेन स्वप्नविभ्रमाणामुत्पत्तेः ॥ उद्बोध एव कथमिति चेत्—मन्दतरतमादिन्यायेन बाह्यानामिव शब्दादीनामुपलम्भात् । अन्ततः शरीरस्यैवोष्मादेः प्रतिपत्तेः । यदा च मनस्त्वचमपि परिहृत्य पुरीतति वर्तते, तदा सुषुप्तिः।

(12) स्यादेतत्— परात्मा तु कथं परस्यायोग्यः । न हि साक्षात्कारिज्ञानविषयतामेवायं न प्राप्नोति; स्वयमप्यदर्शनप्रसङ्गात् । नापि ग्रहीतुरेवायमपराधः, तस्यापि

---

इति वाच्यम्—यदा हि शरीरौष्ण्यादिप्रतिपत्त्युपयोगित्वगिन्द्रियसम्बन्धमपि विहाय पुरीतति हार्दमांसपिण्डविशेषे मनो वर्तते तदा सुषुप्तिः । फलबलाच्च पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोग एव विशेषगुणोत्पादे कारणमिति कल्पनाददोषात् ॥ [नन्वेवं पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगरूपकारणाभावत एव सुषुप्तावात्मज्ञानानुदयस्य सुवचत्वे कुत एतावान् विस्तर इति चेत्—उच्यते—मीमांसकेन मनसो विभुत्वस्वीकारात् तन्मते, पुरीतति मनो वर्तत इत्येवं सुषुप्तिनिर्वाहायोगात् उभयसम्मतरीत्याऽऽत्मज्ञानाभावोपपादनाय विशेषगुणाभाव एव सर्वसंप्रतिपन्नः प्रथमतो दर्शितः । तदुपरि त्वया विशेषगुण एव कुतो न जायत इति पृष्टत्वादनिन्द्रियप्रत्यासत्त्यादिकं तत्त्वं वक्तव्यमासीत् । एवं च पुरीतत्प्रवेशकथनार्थं सर्वथोपपादनीयमविभुत्वमपि मनसो निरूपितमभूदिति ।] तथा च योग्यस्यापि स्वात्मनः सुषुप्तिकालेऽनुपलम्भे सत्यपि अभावसमर्थकयोग्यानुपलब्धिवर्णनासम्भवे सति आत्मान्तरस्यायोग्यस्य योग्यानुपलब्ध्या बाधनं सुतरामशक्यम् । योग्यानुपलब्धिरित्यस्य योग्या चासावनुपलब्धिश्चेति वा योग्यस्यानुपलब्धिरिति वार्थोऽस्तु । द्विविधाऽपि सा परात्मविषये दुर्वचैवेति सुतरां तन्निषेधासम्भव एवेति ।

[12] स्यादेतत्—स्वात्मवत् परात्मानोऽपि कथं न गृह्यन्ते । न च तेषां लौकिकप्रत्यक्षविषयत्वस्यैवाभावः; तथा सति तेन तेन स्वयं स्वस्वदर्शनस्याप्यसम्भवप्रसङ्गात् । न च तेषां ग्रहणविषयत्वयोग्यत्वेऽप्यस्य ग्रहीतुः परात्मग्रहणे योग्यताराहित्यम्; परात्मनां प्रत्यक्षविषयतारूपयोग्यतावत् अस्यापि ज्ञानसमवायिकारणतारूपैव हि योग्यता । सा चास्तीति । न च मनसः करणस्यायमपराधः; एकैकमनःसंयोगस्यापि स्वात्मनीव परात्मन्यप्यक्षतत्वात्; विषयतासम्बन्धेनात्मप्रत्यक्षं प्रति आत्ममनःसंयोगस्य समवायेन कारणत्वात् । नन्वेकस्य मनस एकात्मग्राहकत्वमेवेत्यनादिरयं नियम इति चेत्–किं मनः किमात्मग्राहकम् ? तत्र किं नियामकम् ?

---

१ अयं बोधनीपाठः । पा० स्वापावस्थायां । प्र. 'स्वप्नप्रत्यया अपि न स्युरित्याह स्वापेति' । 'स्वापमुक्त्वा सुषुप्तिमाह यदा चेति' इति । निद्रासामान्यं स्वापः । तदातनज्ञानं स्वप्नः । गाढनिद्रा सुषुप्तिः ।

**हि ज्ञानसमवायिकारणतैव१ तद्योग्यता । नापि करणस्य ; साधारणत्वात् । न ह्यासंसारमेकमेव मन एकमेवात्मानं गृह्णातीत्यत्र नियामकमस्ति । स्वभाव इति चेत्— तर्हि २ मुक्तौ निःस्वभावत्वप्रसङ्गः ; तदेकार्थतायाः अपायादिति-न ; भोजकादृष्टोपग्रहस्य नियामकत्वात् । यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाकृष्टानि, तानि तस्यैवेति नियमः । तदुक्तं प्राक्—'प्रत्यात्मनियमात् भुक्ते'रिति ॥ एतेन परबुद्ध्यादयो व्याख्याताः ॥**

---

तन्मनसि तदात्मनिरूपितस्वत्वरूपस्वभावः, तस्मिन्नात्मनि तदेकमनःप्रतियोगिकस्वामित्वरूपः स्वभावो वा नियामक इति चेत्— तर्हि मुक्तिकाले स्वभावहानिः स्यात् ; स्वस्वामिभावस्यापायात् । न चेष्टापत्तिः ; अपयतः स्वभावत्वायोगात् । न च भाट्टैर्मुक्तौ नित्यसुखाभिव्यक्तिस्वीकारात्तत्र मनसोऽपेक्षितत्वान्न स्वभावहानिरिति वाच्यम्—'तदत्यन्तविमोक्षोऽपवर्ग' (न्या. १. १) इति सूत्रे तन्मतस्य भाष्य एव निराकृतत्वात् । तत्मतत्वेऽपि देहादेरिव मनसोऽपि तदा तदर्थमनपेक्षितत्वसम्भवाच्च । न च मुक्तौ सहकार्यभावेन कार्यानुत्पादेऽपि स्वभावस्य हानिर्न स्वीकार्येति वाच्यम्–तदा मनसां मुक्तात्मनः प्रत्यनुपयोगात्, योगिनां च सौभरिवत् कायव्यूहं गृह्णतां प्रतिकायं मनसोऽपेक्षितत्वात्, 'धर्मिकल्पनातो वरं धर्मकल्पन'मिति न्यायेन मुक्तात्ममनसामिव तदायत्तत्वकल्पनस्य युक्तत्वात् तद्विरोधेन मुक्तात्मस्वामिकत्वस्य तदा तत्रायोगात् । तथा च तदेकार्थतायाः अपायात् तदसाधारण्यनियामकस्य स्वभावस्य तदा हानिरवश्याभ्युपेयेति ॥ अतः स्वभावस्य दुर्वचत्वात् प्रतिनियतग्राह्यग्राहकभावे नियामकाभावात् सामग्रीसद्भावात् परात्माऽपि मानसप्रत्यक्षविषयः स्यादिति चेत्–न —भोगसाधनीभूतादृष्टपरिगृहीतस्यैवैकात्ममात्रग्रहे नियामकत्वात् ; एकसङ्घातभावापन्नयन्मनश्शरीरेन्द्रियव्यापाराः सर्वेऽपि यदात्मसम्बन्ध्यदृष्टाधीना भवन्ति, तस्मिन् मनसि शरीरे इन्द्रिये च तन्निरूपितस्वत्वं तदानन्यमस्तीति तेन मनसा स एवात्मा तदा गृह्यत इत्यनुभवबलाद्व्यवस्थेति । तथा च स्वस्वामितत्समवेतगुणप्रत्यक्ष एव मनसः करणत्वमिति । उक्तश्चादृष्टबलात् भुक्तिनियमः प्रथम एव स्तबके, 'प्रत्या-

१ अयं क २ पाठः । पा० कारणतयैव ।

२ बो. 'यदि तदेकात्मसम्बन्धित्वमस्य स्वभावः, तर्हि मुक्तात्मनो मनःसम्बन्धाभावात् स्वभावहानिः स्यादित्याह मुक्ताविति' । प्र. 'भट्टानां तु....स्वाभाविक एव सम्बन्धः, यतो मुक्तावप्यात्मनो नित्यनिरतिशयानन्दसन्दोहाभिव्यक्तिः । एकात्ममात्रज्ञानजनकत्वं मनसः स्वभाव इत्याह स्वभाव इतीति । ....मुक्तौ जीवन्मुक्तौ ।' 'तत्र कायव्यूहे बहुतरमनस्स्वीकारात् योगिनामप्यात्मसाक्षात्कारजननात् ।'

**(13) तदेवं योग्यानुपलब्धिः परात्मादौ नास्ति । तदितरा तु न बाधिकेति तवापि सम्मतम् । अतः किमधिकृत्य प्रतिबन्दिः। न हि शशशृङ्गमयोग्यानुपलब्ध्या कश्चिन्निषेधति । न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते॥ अथायमाशयः—अयोग्यशशशृङ्गादावनुपलब्धिर्न बाधिका स्यात्–इति। ततः किम्॥ तत्सिद्ध्येदिति चेत्—**

त्मनियमात् भुक्ते'रिति । तस्मात्परात्मा नान्यस्य योग्यः, एवं परात्मसमवेताः ज्ञानादयोऽप्यन्यस्यायोग्या इति ।

[13] तदेवं सिद्धं बाधकत्वेनाभिमता योग्यानुपलब्धिः परात्मतद्गुणेषु नास्ति, योग्यादृष्टिः कुतोऽयोग्य इति । केवलानुपलब्धिस्तु न बाधिकेति पिशाचादृष्टपरलोकादिकमभ्युपगच्छतस्तवापि सम्मतम् । अतः प्रतिबन्दिप्रसङ्गकस्य योग्यानुपलब्धिरूपहेतोरेवाभावे प्रतिबन्दिः कुतस्तराम्? शशशृङ्गविषये योग्यानुपलब्धिः, प्रकृते परात्मादौ चायोग्यानुपलब्धिर्वस्तु सतीति उभयत्रैकस्याभावात् । न ह्ययोग्यानुपलब्ध्या शशशृङ्गनिरासः; न वा योग्यानुपलब्ध्या परात्मादिनिरासः; येन सारूप्यात् प्रतिबन्देरवतारः स्यादिति ।

अथ प्रतिबन्दिं प्रवर्तयतोऽयमाशयः–योग्यं शशशृङ्गं योग्यानुपलब्ध्या कामं निषिद्ध्यताम्। परात्मादिवत् अयोग्यं शशशृङ्गमनुपलब्धिबलेन न बाध्येतेति इति चेत्– ततः किम्? कायोग्यं बाध्यते शृङ्गम्? तर्हि तदपि सिद्ध्येदिति चेत्–न हि बाधकाभावमात्राद्वस्तुसिद्धिः, किं तु सति प्रमाणे । यदि प्रमाणं स्यात्—कामं सिद्ध्येदयोग्यं शृङ्गमिति । नन्वयं शृङ्गी पशुत्वात् प्राणित्वात् तिर्यक्त्वादिति पशुत्वादिकमनुमापकमस्तीति चेत्—तर्हि परसाधने प्रतिबन्दिः न तु तद्बाधने । अनया प्रतिबन्द्या हि शशशृङ्गमपि किञ्चित्साधितं भवति; न तु बाधितं भवति । एवं घटपटक्षित्यादिकं कर्तृमत् कार्यत्वान्मदीयकार्यवदिति परात्मसाधकानुमाने इयं प्रतिबन्दिर्भवेत्; न तु परात्मबाधने त्वया क्रियमाणे, मया च तदसम्भवे निरूप्यमाणे इयं प्रतिबन्दिर्युक्तेति । ननु परात्मसाधकानुमाने भवन्तीयं प्रतिबन्दिः शृङ्गनिषेधे तथा परात्मादिनिषेधे च पर्यवस्यतीति चेत्–तर्हि निरूप्यताम्, किं प्रतिबन्दिः साक्षादेव प्रकृतबाधिका उत समानन्यायसमर्पणद्वारा । आद्ये शशश्रृङ्गी पशुत्वादिति स्यादिति प्रतिबन्दिं प्रयुञ्जानेन पशुत्वे शृङ्गित्वासाधकत्वस्य सम्मतत्वादेव वक्तव्यम्—कार्यत्वं कर्तृमत्त्वासाधकं पशुत्वस्य शृङ्गित्वासाधकत्वादिति । तत्र यदि कार्यत्वगतकर्तृमत्त्वसाधकत्वं प्रति पशुत्वगतशृङ्गित्वसाधकत्वं व्यापकं स्यात्, तर्हि व्यापकाभावाद्व्याप्याभावानुमानं युज्यते । अतो येन व्याप्यव्यापकभावेन पशुत्वस्य शृङ्गित्वसाधकत्वे सति कार्यत्वस्य कर्तृमत्त्वसाधकत्वं प्रतिषिद्ध्येत, तस्याभावात्कथं कर्तुः परात्मनो बाधः? द्वितीये त्वेवं वाच्यम्— यथा शृङ्गी पशुत्वादित्यनुमाने योग्यानुपलब्ध्या शृङ्गरूप-

**एवमस्तु, यदि प्रमाणमस्ति ॥ पशुत्वादिकमिति चेत्—परसाधने प्रतिबन्दिस्तर्हि ; न तद्बाधने ॥ तत्रैव भविष्यतीति चेत्—तत् किं तत्र प्रतिबन्दिरेव दूषणम्, अथ कथञ्चित्तुल्यन्यायतया योग्या एव परात्मबुद्ध्यादयः ते च बाधिता एवेत्यपहृतविषयत्वम्? न प्रथमः अव्याप्तेः। न हि पशुत्वादेः शशशृङ्गसाधकत्वेन कार्यत्वादेः कर्तृमत्त्वसाधकत्वं व्याप्तं, येन तस्मिन्नसति तत् प्रतिषिद्ध्येत । न द्वितीयः ; मिथोऽनुपलभ्यमानत्वस्य वादिप्रतिवादिस्वीकारात् ॥ तथाऽपि पशुत्वादौ को दोष इति चेत्— न जानीमस्तावत् ; तद्विचारावसरे चिन्तयिष्यामः ॥**

[14] **स्यादेतत्—यत्प्रमाणगम्यं हि यत्, तदभाव एव तस्याभावमावेदयति । यथा रूपादिप्रतिपत्तेरभावश्चक्षुरादेरभावम्। कायवाग्व्यापारैकप्रमाणकश्च परात्मा ; तदभाव**

---

विषयापहाराद्विषयापहारलक्षणबाधसत्त्वाद्धेतोर्बाधितत्वम्, तद्वत् कर्तृमत्त्वसाधकानुमानेऽपि योग्यानुपलब्ध्या कर्तुः साध्यस्यापहारादपहृतविषयकत्वरूपं बाधितत्वं हेतोरिति। इदं तु न शक्यते ; परात्मनामयोग्यत्वेन योग्यानुपलब्ध्यभावात् । न चायोग्यत्वमसिद्धम् ; वादिप्रतिवादिनोरावयोः, मया तवेव, त्वयाऽपि ममानुपलम्भस्य सम्मतत्वात् ॥ नन्वस्तु तावत् प्रकृतप्रतिबन्दिः परात्माद्यबाधकत्वम् । तथाऽपि तुल्यन्यायेन शृङ्गसाधकतया प्रयुक्ते पशुत्वादौ को दोषः ; अयोग्यशृङ्गसम्भावनया व्याप्तिरक्षतत्वादिति चेत्—न जानीमस्तावदिह समाधिम् । ईश्वरसाधने तदबाधने चैव युक्तीर्जानीमः । ईश्वरविचारार्थमेव च ग्रन्थं निबध्नीमः, न शशशृङ्गविचारार्थम् । तस्याप्यवसरेऽवश्यापतिते पुनस्तत्त्वं चिन्तयिष्यामः—अस्तु पशुत्वं, शृङ्गित्वं मास्त्वित्यप्रयोजकशङ्कायामनुकूलतर्को हि दुर्लभः, येन कथञ्चिदयोग्यं वा शशशृङ्गमङ्गीकार्यं स्यादिति ।

[14] ननु माभूत् योग्यानुपलब्ध्यभावात् परात्मनां बाधः । एवं परमात्मातिरिक्तपरात्मसत्त्वेऽपि परमात्मा न सिद्ध्यति । यथा हि शशशृङ्गसत्तायामापादितायां, **'एवमस्तु यदि प्रमाणमस्ती'**त्युच्यते, तथा परात्मनामनुपलब्ध्या निरासासम्भवेऽपि सद्भावविषये विचार्यमाणे, 'सन्तु यदि प्रमाणमस्ती'त्येव हि वक्तव्यम् । एवञ्च तत्साधकप्रमाणान्वेषणे चेष्टादिनैव परात्मानुमानस्य लोके दर्शनात् कायिकवाचिकव्यापाररूपप्रमाणानुमेयत्वमेव परात्मसु स्वीकार्यम्। तथा च योऽर्थो येन प्रमाणेन गम्यते तस्य प्रमाणस्याभावात्तस्यार्थस्याभावोऽनुमातुं शक्यते। रूपरूप्यादिसाक्षात्कारबलाद्धि अतीन्द्रियमपि चक्षुरादिकमिन्द्रियमस्तीत्यनुमीयते । यस्य रूपादिप्रतिपत्त्यभावः, तस्य पुंसश्चक्षुराद्यभावं स एव प्रतिपत्त्यभाव आवेदयति । अत एव हि पशुत्वादेरप्रमाणत्वात् प्रमाणान्तराभावाच्च शशशृङ्गाभावो भवताऽपि चिरव्यापयिषितः । अतः कायवाग्व्यापारैकप्रमाणकत्वात् परात्मनां, अङ्कुरादिकर्तृत्वेनाभिमते च तददर्शनादनुमीयते—अङ्कुरा-

**एवं तस्याभावे प्रमाणमङ्कुरादिषु—तन्न—तदेकप्रमाणकत्वासिद्धेः । अन्यथा सुषुप्तोऽपि न स्यात् ॥ श्वाससन्तानोऽपि तत्र प्रमाणमिति चेन्न—निरुद्धपवनोऽपि न स्यात् ॥ कायसंस्थानविशेषोऽपि तत्र प्रमाणमिति चेन्न–विषमूर्च्छितोऽपि न स्यात् ॥ शरीरोष्माऽपि तत्र प्रमाणमिति चेन्न— जलावसिक्तविषमू(सिक्तमू)र्छितोऽपि न स्यात् । तस्मात् यद्यत् कार्यमुपलभ्यते, तत्तदनुगुणश्चेतनस्तत्र तत्र सिद्धयति । न च कार्यमात्रस्य क्वचिद्व्यावृत्तिरिति । न च, त्वदभ्युपगतेनैव प्रमाणेन भवितव्यम्, नान्येनेति नियमोऽस्ति ॥**

**(15) न च प्रमेयस्य प्रमाणेन व्याप्तिः । सा हि कात्स्र्न्येन वा स्यात्, एकदेशेन वा स्यात् । न प्रथमः; प्रत्यक्षाद्यन्यतमा(म) सद्भावेऽपि तत्प्रमेयावस्थितेः ॥ न द्वितीयः;**

---

दयः कर्तृरहिताः कर्तृसाधकप्रमाणरहितत्वात् , यो यत्साधकप्रमाणरहितः स तद्रहितः, यथाऽन्य इतीति चेत्—

तन्न—तन्मात्रप्रमाणकस्य हि तदभावादभावः स्यात् । कर्तुः कायवाग्व्यापारैकप्रमाणकत्वं चासिद्धम् ; तदभावेऽपि सुषुप्तौ परात्मानुमानात् । तावन्मात्रप्रमाणकत्वे च सुषुप्तो न सिद्धयेत् । अथ कायवाग्व्यापारवत् प्राणवायुव्यापारोऽपि प्रमाणम् , स सुषुप्तेऽस्ति ; अङ्कुरादिकर्तरि च नास्तीति चेन्न–प्राणायामेन श्वासनिरोधे कायवाग्व्यापारयोश्चासतोः सोऽनुमीयते, स न सिद्धयेदिति । अथैतदर्थमुक्तत्रयातिरिक्तः श्वासबन्धकालिको विलक्षणः शरीरसन्निवेशोऽपि परात्मनि प्रमाणमिति चेत् —ईदृशसंस्थानेनापि रहितो विषवशापन्नमूर्च्छ आत्माऽनुमीयमानो न सिद्धयेत् । अथ तत्र पञ्चमः शरीरोष्मा तदा लक्ष्यमाणः प्रमाणमिति चेत्—एवमपि विषमूर्च्छिते जलावसिक्ते सति ऊष्मणोऽप्यभावात् स न स्यात् । तस्मादेवं तत्र तत्रान्यान्यसमुचितहेत्वन्वेषणस्यावश्यकत्वात कायवाग्व्यापारादिनियमानादरेण, यत्र यादृशकार्योपलम्भस्तत्र तादृशकार्यबलेन तद्धेतुश्चेतनोऽनुमीयते । तथा चैकपरात्मसाधकतया त्वदभ्युपगतस्यैवाऽन्यपरात्मसाधकत्वमिति निर्बन्धाभावात् कायव्यापारादिकतिपयव्यावृत्तावप्यन्येन तदनुमानसम्भवात् परमात्मसाधकप्रमाणं पञ्चमस्तबके वक्ष्यमाणमस्तीति प्रमाणाभावरूपहेतुरसिद्ध इति ।

[15] किं च प्रमाणाभावस्य कुत्रापि हेतुत्वं न सम्भवति । प्रमाणाभावाद्वस्त्वभावं ब्रुवता हि व्यतिरेकव्याप्तिप्रदर्शनाय प्रमाणस्य वस्तुव्यापकत्वं वाच्यम्–तथा च यत्र वस्तुत्वं तत्र प्रमाणगम्यत्वमिति । तत्र च प्रमाणगम्यत्वं किं कृत्स्नप्रमाणगम्यत्वं उत यत्किञ्चित्प्रमाणगम्यत्वम् । नाद्यः ; स्वर्गापूर्वप्रभृतेः प्रत्यक्षादिकतिपयप्रमाणाभावेऽपि वस्तुत्वात्तत्र कृत्स्नग्राह्यत्वाभावात् । नान्त्यः ; यत्र वस्तुत्वं तत्र किञ्चित्प्रमाणगम्यत्वमिति व्याप्तिसत्त्वेऽपि तन्मूलकप्रयोगे, यत्र किञ्चित्प्रमाणग्राह्यत्वस्याप्यभावः तत्र वस्तु इत्येव नियमस्य वाच्यतया प्रमाणग्राह्य-

**पुरुषनियमेन सर्वप्रमाणव्यावृत्तावपि प्रमेयावस्थितेः । अनियमेन असिद्धेः ; न हि सर्वस्य सर्वदा सर्वथाऽत्र प्रमाणं नास्तीति निश्चयः शक्य इति ॥**

(16) **कथं तर्हि चक्षुरादेरभावो निश्चयः ? व्यापकानुपलब्धेः । १ चरमसामग्रीनिवेशिनो हि कार्यमेव व्यापकम् ; तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः । २ योग्यतामात्रस्य कदाचित् कार्यम्, ३ तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः । अन्यथा तत्रापि ४ सन्देहः ॥**

त्वसामान्याभावो हेतुरिति सिद्ध्यति । तत्र विकल्प्यते । किं पुरुषव्यवस्थां कृत्वा तत्पुरुषसम्बन्धिप्रमाणग्राह्यत्वसामान्याभावेन वस्तुत्वाभावानुमानम् , किं वा पुरुषनियमानादरेण प्रमाणग्राह्यतात्वावच्छिन्नप्रतियोगिताकाभावेन । नाद्यः ; केनचित्पुंसा सर्वथैवागृह्यमाणस्याप्यन्यपुरुषगोचरतया प्रमेयस्य सत्त्वाद्व्यभिचारात् । नान्यः ; कोऽपि कदाऽपि कथमपीमं न गृह्णातीति निश्चयस्याशक्यतया हेत्वसिद्धेः ।

[16] नन्वेवं प्रमाणाभावस्य क्वचिदपि हेतुत्वासम्भवेऽन्धादौ चक्षुराद्यभावः कथं निश्चेयः । रूपादिप्रतिपत्तिरूपप्रमाणाभावेन हि सोऽनुमातव्य इति चेत्–उच्यते । सत्यं रूपादिप्रतिपत्तिः

१ बो. 'चरमसामग्रीत्वेन निविशमानस्ये'ति एतदपेक्षया चरमे यस्य निवेशिन इत्यत्र क्रियाविशेषणतया वस्तुविशेषणतया वाऽन्वय उचितः । २ अयं व्याख्याद्वयसम्मतः पाठः । क. ख. पु. **योग्यमात्रस्य** । ३ पा० **न तन्निवृत्तौ** ।

४ प्र. 'कार्यविशेषस्य कारणविशेषव्यापकत्वमाह **चरमे**ति । **कार्यं** रूपज्ञानादि । **योग्यतामात्रस्ये**ति । व्यापकमित्यनुषज्यते । न च भक्षितविनष्टबीजे व्यभिचारः ; यत् सामान्यं यत्कारणतावच्छेदकं तदवश्यं तज्जातीयकृदित्यर्थात् । निश्चयेत्याभिप्रायकत्वाद्वा । **अन्यथे**ति । कदाचित् कार्यव्यतिरेके योग्यतायामपि सन्देहः । बो. 'चरमसामग्रीत्वेन निविशमानस्य कार्यं व्यापकम् । किञ्चित्तु कारणं योग्यतया निविशते । तस्य कदाचिद्भवत्कार्यं व्यापकम् । तस्य कादाचित्कस्यापि कार्यस्य निवृत्तौ **तथाभूतस्य** योग्यताविशिष्टस्यापि निवृत्तिः । **अन्यथे**ति । यदि विभाद्वयमपि चक्षुरादौ नास्ति , तदा रूपादिज्ञानाभावान्न तत्राप्यभावनिश्चयः , किं तु सन्देह एव । यद्वा योग्यतामात्रस्य कदाचित् कार्यम् ; न तु व्यापकम् । तेन कारणनिवृत्तौ कादाचित्कस्यापि कार्यस्य निवृत्तिः । **अन्यथा** कार्यनिवृत्तौ **तत्रापि** कारणेऽपि **सन्देहः** नाभावनिश्चयः ॥ केचित्तु **न तन्निवृत्तौ तथाभूतस्यापि निवृत्ति**रिति नञ्प्रश्लेषेण पठन्ति । तत्रायमर्थः–चरमसामग्रीनिवेशिन इति विशेषणं कुतः ? योग्यत्वेनैवोच्यतामित्यत्राह **योग्यतामात्रस्ये**ति । तस्य कार्यं न व्यापकम् । तस्मात् कार्यनिवृत्तौ योग्यतामात्रस्य (न?) निवृत्तिः । **अन्यथे**ति । चक्षुरादेश्चरमसामग्रीनिवेशाभावे तत्रापि नाभावनिश्चयः , सन्देह एवेति ।

[17] **प्रकृतेऽपि व्यापकानुपलब्ध्या तत्प्रतिषेधोऽस्तु-न, आश्रयासिद्धत्वात्। न हीश्वरस्तद्ज्ञानं वा क्वचित् सिद्धम्॥ आभासप्रतिपन्नमिति चेन्न-तस्याश्रयत्वानुपपत्तेः; प्रतिषेध्यत्वानुपपत्तेश्च।**

---

प्रमाणम्। अथापि न प्रमाणत्वेन तद्ग्रहणेन तदभावेन तदनुमानम्। किं तु तस्या एव प्रतिपत्तेर्व्यापकत्वाकारस्यापि सत्त्वात् व्यापकानुपलब्ध्या व्याप्यस्य चक्षुरादेरभावानुमानमिति। ननु कारणस्य कथं कार्यं व्यापकम्। वैपरीत्यात्। दण्डसत्त्वेऽपि घटाभावादिति चेत्-ब्रूमः। कारणकलापरूपसामग्र्यां चरमं यन्निविशते कपालद्वयसंयोगादि, तस्य तावत् कार्यं व्यापकमेव; तदव्यवहितोत्तरक्षणे कार्यध्रौव्यात्। तथा च कार्याभावे तस्य सामग्रीनिवेशिनश्चरमकारणस्यापि निवृत्तिर्निश्चेया भवति। यत्तु कारणं फलाव्यवहितप्राक्क्षणावच्छिन्नत्वरूपफलोपधायकत्वनियमरहितं स्वरूपयोग्यमात्रम्, तन्निष्ठयोग्यतायाः कदाचित् कार्यं व्यापकम्—कदाचित् भाविकार्यकत्वं कार्यात्यन्तायोगव्यवच्छेदरूपं व्यापकमिति यावत्। ननु नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमस्य कथञ्चित्स्वीकारेऽपि अरण्यस्थदण्डाद्यनित्यविषये कदाचित्कार्यमपि दुर्वचमिति चेत्—तर्ह्येवमस्तु। योग्यतां प्रति कार्यं न सर्वदा व्यापकम्; किं तु **कदाचित्** कारणान्तरसमवधाने। तथा च स्वेतरयावत्कारणावच्छिन्नस्वरूपयोग्यता यत्र तत्र कार्यमिति। तथा च कार्यनिवृत्तौ तादृशविशिष्टयोग्यताया निवृत्तिः। एवं च प्रकृते चक्षुषश्चरमकारणत्वे रूपादिप्रतिपत्तिरूपव्यापकानुपलब्ध्या तदभावनिश्चयः सुकरः। तद्भिन्नकारणात्मत्वे च व्यापकानुपलब्ध्या कारणान्तरसमवधानविशिष्टस्वरूपयोग्यताशालिचक्षुरभावानुमाने विशेषणसमवधानकाले विशिष्टनिवृत्तेर्विशेष्यनिवृत्तौ पर्यवसानाच्चक्षुरभावनिश्चयः सिद्ध्यति। अन्यथा व्यापकानुपलब्ध्यादेरनिश्चये चक्षुरभावविषयेऽपि सन्देहः; प्रमाणाभावस्यासाधकत्वात्।

[17] ननु—तर्हीश्वराभावानुमानेऽपि प्रमाणाभावरूपहेतुर्मा भैत्सीत्। व्यापकवत्त्वेनानुपलभ्यमानत्वादेव ईश्वरो नास्तीत्यनुमीयते। उक्तं हि, '**व्यापकस्वार्थाद्यनुपलम्भेनाप्यनुमीयते नास्तीति**' इति। न हि कर्तृत्वव्यापकं स्वार्थवत्त्वदेहित्वेन्द्रियवत्त्वादिकमीश्वरे उपलभ्यते इति चेन्न—आश्रयासिद्धत्वात्। **क्वानुमानमनाश्रयम्?** तथा हि—अस्माभिः क्षित्यङ्कुरादिकं सकर्तृकं ज्ञानचिकीर्षाप्रयत्नजन्यं कार्यत्वादिति द्वेधा—साक्षादीश्वरसाधकं तद्गतज्ञानादिसाधकं च अनुमानं प्रयुज्यते। तत्र यत् साध्यं तत् त्वया त्रेधा निषिद्ध्यते ईश्वरो नास्ति, जगद्धेतुत्वेनाभिमतं ज्ञानादि नास्ति, ईश्वरो जगद्धेतुभूतज्ञानादिशून्यः स्वार्थादिरूपव्यापकाभावादिति। सर्वत्राश्रयासिद्धिः। अस्मदनुमानासम्मतौ पक्षस्याप्रसिद्धत्वात्॥ अथास्मदुक्ताभासहेतुना प्रतिपन्नो भ्रान्तिविषयीकृत एवाश्रय इति चेन्न—तस्याप्रामाणिकस्याश्रयत्वानुपपत्तेः। न केवलं

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥

**न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वं निषेध्यता च (वे)ति ॥**

अनुमाने तस्य पक्षत्वं न भवतीत्येतावत् ; किं तूपक्रान्तानुपलब्ध्यादिप्रमाणमध्ये केनापि प्रमाणेन तस्याभासप्रतिपन्नस्येश्वरस्य तद्ज्ञानादेश्च प्रतिषेद्धव्यत्वमप्यनुपपन्नम् । न चासतोऽपि ज्ञाने भानादनुमितिविशेष्यत्वसम्भवे कथमाश्रयत्वानुपपत्तिर्नाम । एवं प्रतिषेध्यत्वमप्याभासप्रतिपन्नस्य युक्तम् ; सदपेक्षयाऽसत एव प्रतिषेधौचित्यात् इति शङ्क्यम्—अयोगात् । उभयकोटिकसंदेहे वस्तुनः प्रकृतानुमित्या व्यावर्त्या या कोटिस्तदभावरूपकोट्यन्तराधिकरणैव हि **भाविकी** भाव्यमाना भावनाशयेन विषयीकृता विशेष्यता भवति । वास्तवेन कोट्यन्तराधिकरणत्वेन ग्रहणं विशेष्यतेति यावत् । यद्वा भाविकी पारमार्थिकी यथार्थज्ञानीया विशेष्यता व्यावर्त्याभाववत्तारूपा । विशेष्यस्य प्रकाराश्रयत्वाभावे सा विशेष्यता प्रमीया न स्यादिति निषेधानुमितिरप्रमा स्यादिति । अथ वा विशेष्यता विशेषणवत्त्वार्हता । तथा च भावानां पदार्थानां सम्बन्धिनी विशेष्यता हि व्यावर्तनीयैककोट्यभावरूपकोट्यन्तरात्मकविशेषणवत्त्वैवेति । यद्वा **भाविकी** भावपदार्थनिष्ठा । अभावनिष्ठा तु विशेष्यता अभावाधिकरणकाभावस्याधिकरणरूपत्वान्न व्यावर्त्याभाववत्तारूपा स्यादपीति । एवं प्रतिषेध्यता प्रतिषेधप्रतियोगिता हि प्रमाणसिद्धस्य वस्तुनो यत् स्वाभावाभावरूपत्वं सैव । यस्य ह्यभावः क्वचिन्नास्तीत्यविद्यमानत्वेन प्रतीयते, स एव प्रथमाभावप्रतियोगीति ।

[ननु कपिसंयोगाभावस्य केवलान्वयित्वात्तदभावायोगात्कथं कपिसयोगस्तत्प्रतियोगी । अग्रावच्छेदेन कपिसंयोगाभावस्याभावो वृक्षेऽस्तीति कथञ्चित्कपिसंयोगस्य प्रतियोगित्वोपपादनेऽपि आकाशाभावं प्रत्याकाशो न प्रतियोगी स्यात्—आकाशाभावो नास्तीति प्रतीत्यभावादिति चेत्—उच्यते । आकाशे, अस्तीति प्रतीतिसिद्धसत्ताजातेरङ्गीकार्यतया आकाशोऽस्तीति प्रतीतेरिष्टतया कथं, 'स नास्ती'ति प्रतीतिः । संयोगेन समवायेन वा आकाशो नास्तीति प्रतीतिरप्ययुक्ता ; आकाशप्रतियोगिकसंयोगसमवाययोरप्रसिद्ध्या तयोर्व्यधिकरणसम्बन्धत्वात् । व्यधिकरणस्य च, अप्रसक्तप्रतिषेधायोगेन सम्बन्धत्वानङ्गीकारात् । यद्याकाशानुयोगिकसंयोग एव सम्बन्ध इहेत्युच्यते—तर्हि तेन सम्बन्धेन गुणादावाकाशाभावः, घटादौ तु द्रव्ये तदभावस्यैवाभाव इति सिद्धमाकाशस्याभावाभावत्वम् । आकाशो न वर्तत इति प्रतीतौ चाधेयत्वाभाव एव प्रतीयते, न त्वाकाशाभाव इत्यलम् ।]

न चैतत्कोट्यन्तराधिकरणत्वमभावविरहात्मत्वं चासतोऽस्ति ; शशशृङ्गे इदमस्ति, 'शशशृङ्गं न नास्ति इति प्रतीत्यभावात् । अतः कुतस्तस्य प्रकृतनिषेधरूपसाध्यं प्रति तत्साधकहेतुं प्रति चाश्रयत्वम्, निषेधप्रतियोगित्वं चेति ॥

[18] **कथं तर्हि शशशृङ्गस्य निषेधः? न कथञ्चित्। स ह्यभावप्रत्यय एव। न चायमपारमार्थिकप्रतियोगिकः परमार्थाभावो नाम, १ तथापा(न चापा)रमार्थिकविषयं प्रमाणं नामेति ॥**

**अपि च—**

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।**
**न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥**

[18] ननु तर्ह्यसतः प्रतियोगित्वासम्भवे शशशृङ्गं नास्तीति निषेधः कथं क्रियत इति चेत्—न कथमपि शशशृङ्गं निषिद्ध्यते । प्रसक्तं हि प्रतिषेध्यम् । प्रसक्तिश्च यत्र क्वचित् प्रसिद्धस्य, न त्वलीकस्य । सोऽपि खलु शशशृङ्गनिषेधोऽभावप्रत्यय एव । अभावप्रत्यये च प्रतियोगिनः प्राक्तनं ज्ञानं कारणम् । न च शशशृङ्गं क्वचित् ज्ञातमस्ति । यद्यपारमार्थिकस्य प्रतियोगित्वं तर्हि तदभावोऽपि तादृश एव स्यात् । न ह्यपारमार्थिकप्रतियोगिकः पारमार्थिकोऽभावो नाम । विशेषणापारमार्थ्ये विशिष्टस्य पारमार्थ्यायोगात् । तथा चापारमार्थिकतादृशाभावविषयकं ज्ञानं न प्रमेति ॥

न केवलं प्रमेयाभावाच्छशशृङ्गं नास्तीति निषेधासम्भवः, किन्तु प्रमाणाभावादपि ॥ योग्यस्यानुपलब्धिर्योग्यानुपलब्धिरिति पक्षेऽपि निषेधप्रयोजकं प्रतियोगिनिष्ठं योग्यत्वमभावग्राहिपुरुषगतस्वोपलम्भसामग्रीकत्वरूपम् । स्वं प्रतियोगि । तत्र शशशृङ्गादिप्रतियोगिगता योग्यता तु दुष्टा दोषरूपसहकारिसहितैवोपलम्भसामग्री; न तु शुद्धा; शशशृङ्गादेराभासप्रतिपन्नत्वस्य त्वयैवोक्तत्वात् । तथा च दोषसहितोपलम्भसामग्र्यां सत्यामनुपलब्धिर्नास्ति; अनुपलम्भे च सति योग्यता नास्तीति ।

एतदुक्तं भवति—केन प्रमाणेन केन पुंसा शशशृङ्गनिषेधः क्रियते । न तावत् प्रत्यक्षानुमानाभ्याम्; योग्यानुपलब्धिरूपहेत्वसिद्धेः । तथा हि—किं निर्दुष्टेन्द्रियेण पुंसा निषेधः क्रियते, उत दुष्टेन । नाद्यः; स्वभावतो वा, ब्राह्मणत्वादाविव सहकारिसम्पत्त्या वा सर्वप्रकारेणानुपलब्धत्वात् योग्यतारूपविशेषणासिद्धेः । न हीन्द्रियदोषो भवति चेत्—दृश्येतेत्येतावन्मात्रमिह योग्यत्वम् । तथा सत्यन्धकारेऽपि घटस्य योग्यानुपलब्ध्यापत्तेः; आलोकसत्त्वे स दृश्येतेति । अतः प्रतियोगितरप्रतियोगिग्राहककारणकलापसाहित्यमेव योग्यत्वम् । तच्च दुष्टोपलम्भसामग्रीरूपं निर्दुष्टे दुर्वचम् ॥ नन्वाभासोपलब्धं तदिति ह्युक्तम् । अतो दुष्टेन्द्रियेण तन्निषेध

१ बो. 'ततोऽपि किमित्यत आह तथेति । न चेत्यनुषञ्जनीयम् ।' तथेति स्थाने न चेत्येव क. ख. पाठः ।

केन च शशशृङ्गं प्रतिषिद्ध्यते, सर्वथानुपलब्धस्य योग्यत्वासिद्धेः। तदितरसामग्रीसाकल्यं हि तत्॥ ननूक्तमाभासोपलब्धं हि तत्॥ अत एवाशक्यनिषेधमित्युक्तम्। अनुपलम्भकाले आभासोपलम्भसामग्र्याः अभावात्; तत्काले चानुपलम्भाभावादिति॥ कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थः? शशेऽधिकरणे विषाणाभावोऽस्तीति॥

[19] स्यादेतत्—यद्यपीश्वरो नावगतः; यद्यपि च नाभाससिद्धेन प्रमाणव्यवहारः शक्यसम्पादनः; तथाऽपि, आत्मानः सिद्धाः, तेषां सार्वज्ञ्यं निषिद्ध्यते, क्षित्यादिकर्तृत्वं चेति। तथा हि—मदितरे न सर्वज्ञाः चेतनत्वादहमिव। न च ते क्षित्यादिकर्तारः पुरुषत्वादहमिव। एवं वस्तुत्वादेरपि—इति। तदेतदपि प्रागेव परिहृतम्। तथा हि—

[20] इष्टसिद्धिः प्रसिद्धांशे हेत्वसिद्धिरगोचरे।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा॥ ४॥

---

इत्यन्यः पक्षोऽस्त्विति चेत्-यत एव तस्योपलब्धिरस्ति, अत एवानुपलब्धिरूपविशेष्यासिद्धेर्निषेधो दुष्कर इत्युक्तमेव; अनुपलम्भरूपविशेष्यसत्त्वे योग्यतारूपविशेषणाभावात् योग्यतासत्त्वे चानुपलब्धिरूपविशेष्याभावाद्योग्यताविशिष्टानुपलब्धेरसिद्धिरिति कारिकोत्तरार्धेन दर्शितत्वात्। एवं च योग्यानुपलब्धिरूपहेत्वभावाच्छशशृङ्गाभावो न प्रत्यक्षानुमानगम्यः॥ शब्दस्य तन्मूलकत्वाच्च तयोरभावादेव सोऽपि न प्रमाणम्। तर्हि शशशृङ्गाभावार्थकत्वासम्भवात् शशशृङ्गं नास्तीत्याप्तवाक्यस्य कोऽर्थ इति चेत्-शशे शृङ्गाभावोऽस्तीत्यर्थः। अत्र शृङ्गमात्रं प्रतियोगि; शशश्चानुयोगी। [तर्हि शशशृङ्गमिति समासो न युज्यत इति चेत्—शशशृङ्गमित्यस्य शशावृत्तिशृङ्गमित्यर्थः। शशस्यावृत्तित्वसम्बन्धेन शृङ्गान्वय इत्येतत्तात्पर्यग्राहकमेव नास्तीति पदम्। यद्वा—शृङ्गपदं शृङ्गाभावे लाक्षणिकम्। शशवृत्तिः शृङ्गाभाव इत्यर्थः। नास्तिपदं लक्षणातात्पर्यग्राहकम्। अथ वा शशशृङ्गमानं प्रमितौ नास्तीति वाक्यार्थः। अपि वा शशपदं शशवृत्तित्वभ्रमविषयार्थकं तादृशं शृङ्गं नास्तीत्यर्थः। शशस्यानुयोगित्वलाभायैव च शशेति प्रयोगः। एतन्निर्वाहप्रकाराश्च तत्सिद्धितन्त्रवार्तिकान्ते द्रष्टव्या इति।]

[19] नन्वप्रसिद्ध्या विशिष्येश्वरत्वेन रूपेण पक्षीकारायोगेऽपि सामान्यरूपेण पक्षीकारः स्यात् यथा मदितरे आत्मानः न सर्वज्ञाः न च क्षित्यादिकर्तारः पुरुषत्वाच्चेतनत्वादहमिवेत्येवम्। एवं वस्तुत्वादिकमपि हेतुः। तदा आत्मसामान्यं पक्षीकृत्य घटादिकमपि दृष्टान्तीकर्तुं शक्यम्। अत्र चात्मनां सिद्धत्वान्नाश्रयासिद्धिः। सामान्यरूपेण पक्षीकारादीश्वरेऽपि सार्वज्ञ्यादिनिषेधादपेक्षितसिद्धिश्चेति चेत्-एतदप्युक्तयुक्त्यैव निरस्तम्।

[20] तथा हि-आत्मत्वेन पक्षीकारः किं प्रमाणप्रसिद्धजीवमात्रस्य, किं वा प्रसिद्ध्यगोचरा-

प्रमाण(णेन) प्रतीतानां चेतनानां पक्षीकरणे सिद्धसाधनम्। ततोऽन्येषा१मसिद्धौ हेतो-राश्रयासिद्धत्वम्॥ आत्मत्वमात्रेण सोऽपि सिद्ध इति चेत्—कोऽस्यार्थः? किमात्मत्वे-नोपलक्षिता सैव वस्तुगत्या सर्वज्ञविश्वकर्तृव्यक्तिः, अथ तदन्या, आत्ममात्रं आत्मत्व-मात्र २ मेव वा पक्षः; सर्वत्र पूर्वदोषानतिवृत्तेः (त्तिः?) अथाययाशयः—आत्मत्वं न सर्वज्ञ-सर्वकर्तृव्यक्तिसमवेतम् जातित्वात् गोत्ववत्—इति—तदसत्—निषेध्यासिद्धेर्निषेधस्या-शक्त्यत्वात्। तथा चाप्रसिद्धविशेषणः पक्ष इत्याश्रयासिद्धिरिति स एव दोषः॥ त्व-दुपगतागमलोकप्रसिद्धस्यैवेश्वरस्यासर्वज्ञत्वमकर्तृत्वं च साध्यत इति चेन्न—

स्मदभिमतेश्वरव्यक्तेः। नाद्यः, साधयितुमिष्टस्यासार्वज्ञ्यादेस्तत्र प्रागेव हि सिद्धिरस्ति। अतः सिद्धसाधनात् पक्षत्वासिद्धयाऽऽश्रयासिद्धिरेव। अन्त्येत्वाश्रयासिद्धया हेतोस्तत्र पूर्वमग्रहण-मित्यनुमित्यसम्भवः। नन्वात्मत्वरूपेणेश्वरसिद्ध एवेति चेत्—यावद्धि ईश्वरव्यक्तिरसिद्धा, तावत् सा-मान्यधर्माक्रान्तत्वमपि तस्याः दुर्वचम्। एवं च सामान्यधर्मग्रहणेऽपि पक्षः कः? किमीश्वर-व्यक्तिमात्रम्, किं वा जीवमात्रं उभयम्। प्रथमे आश्रयासिद्धिः; द्वितीये सिद्धसाधनम्, तृतीये च तत्तदंशे तत्तद्दोषसत्त्वाद्दोषद्वयमपि। यदि त्वात्मत्वमेव पक्षः, तद्धसार्वज्ञ्यादिकं तत्र सुतरामिति सिद्धसाधनमेव। एवं साध्यं किञ्चिदन्यथयित्वा आत्मत्वं असर्वज्ञाक्षित्यादिकर्तृजीव-समवेतमिति साधनेऽपि तद्दोषतादवस्थ्यम्। अथ आत्मत्वं न सर्वज्ञसर्वकर्तृव्यक्तिसमवेतं जाति-त्वात् गोत्ववदिति तत्समवेतभिन्नत्वं यदि साध्यते—तर्हि प्रतियोग्यप्रसिद्धया भेदरूपसाध्याप्रसि-द्धौ पक्षस्याप्रसिद्धविशेषणत्वात्तथैवाश्रयासिद्धिः। सन्दिग्धसाध्यधर्माधर्मी हि पक्षः। तत्र सन्देहा भावे, साध्याप्रसिद्धौ साध्यतावच्छेदकाप्रसिद्धौ, पक्षाप्रसिद्धौ, पक्षतावच्छेदकाप्रसिद्धौ, सर्वत्रा-श्रयासिद्धिरेव। तत्र प्रथमे सिद्धसाधनाद्वादिनाऽर्थान्तरेण निगृहीतत्वमपि। [ननु मदितेर न सर्वज्ञाः न क्षित्यादिकर्तारः इत्यत्र तावत् किञ्चिदनभिज्ञत्वं किञ्चित्कार्याकर्तृत्वं च साध्यमिति न साध्याप्रसिद्धिः। तावतैव सर्वज्ञसर्वकर्तृव्यक्त्यभावसिद्धिः। एवमन्तिमानुमानेऽपि, आत्मत्वं किञ्चिद्विषयकज्ञान-किञ्चिद्विषयककृतिशून्यत्वव्याप्यं जातित्वादिति निष्कर्षः। यत्र जातित्वं गोत्वघटत्वादौ तत्र किञ्चिद्विषयकज्ञानादिशून्यत्वव्याप्यत्वमस्ति; यत्र गोत्वादि तत्र तच्छून्यत्वमिति। तथा चात्मत्वं किञ्चिदनभिज्ञमात्रवृत्ति सिद्धयतीतीश्वरनिषेधः फलित इति चेन्न—अप्रयोजकत्वात्

१ बहुवचनं तत्तत्प्रतीतातिरिक्तजीवसंग्रहाभिप्रायेण। आस्तिकाभिमतविष्णुशिवादिव्यक्तिसूचनाय वा। ईश्वरज्ञानचिकीर्षाद्युपलक्षणाय वा। २ आत्ममात्रमिति क॰ पा॰ आत्मत्वमात्रमिति अन्यत्र पा॰। आत्मत्वमात्रमिति पाठो व्याख्याद्वयेऽपि दृष्टः। एवमपि प्रत्येकपक्षीकारवत् समुदाय-पक्षीकारस्यापि दर्शयितव्यत्वात् पक्षचतुष्टयस्य पदचतुष्टयार्थौचित्याच्च पाठद्वयसमुच्चयः कृतः।

आगमादेः प्रमाणत्वे बाधनादनिषेधनम्।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता १* ॥ ५ ॥

निगदव्याख्यातमेतत् २ ॥

[21] चार्वाकस्त्वाह—किं ३योग्यताविशेषा(षणा ?) ग्रहेण। यन्नोपलभ्यते, तन्नास्ति। विपरीतमस्ति। न चेश्वरादयस्तथा, ततो न सन्तीत्येतदेव उपायः॥ एवमनुमानादिविलोप इति चेत्—नेदमनिष्टम्॥ तथा च लोकव्यवहारोच्छेद इति चेन्न—सम्भावनामात्रेण तत्सिद्धेः। संवादेन च प्रामाण्याभिमानात्—इति—अत्रोच्यते—

[22] दृष्ट्यदृष्ट्योः क्व सन्देहो भावाभावविनिश्चयात्।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्॥ ६ ॥

तथा चोक्तसर्वानुमानसाधारणोऽव्याप्यत्वासिद्धिरिह दुरुद्धरा। अन्यथा मदितरे मदज्ञानानभिज्ञाः अहमिव; आत्मत्वं ज्ञानसामान्यतद्विशेषशून्यत्वव्याप्यं घटत्वादिवदित्याद्यपि साध्येतेति]

ननु त्वदभ्युपगतागमप्रसिद्धं प्रामाणिकत्वेन त्वदभिमतलोकप्रसिद्धं वेश्वरं विशिष्यैव पक्षीकृत्यासार्वज्ञादि साध्यत इति चेत्—तन्मते ईदृशागमलोकयोः प्रमाणत्वमाभासत्वं वा। आद्ये ततः सर्वज्ञत्वादेरपि सिद्ध्या निषेधासम्भवः। अन्त्ये, आभासप्रतिपन्नस्याश्रयत्वासम्भवस्योक्तत्वादुक्ताश्रयासिद्ध्यौद्धत्यमवार्यम्।

[21] एवमीश्वरानुपलब्ध्या ईश्वराभावप्रत्यक्षे, व्यापकानुपलब्ध्यादिना तदभावानुमानं च न सम्भवतीति मीमांसकः प्रत्यबोधि। अत्रेश्वराभावप्रत्यक्षवादी अनुपलब्धौ योग्यतारूपविशेषणमसहमानश्चार्वाको निराक्रियते। स खल्वेवमाह— किमिति योग्यतारूपविशेषणे आग्रहः? अनुपलब्धिमात्रेणाभावसाक्षात्कारात्। न चेश्वरादय उपलभ्यन्ते; तस्मान्न सन्तीति अभावस्य केवलानुपलब्धिगम्यत्वमतमेव उपायः। एवं तर्ह्यदृश्यमानस्याभावादनुमानादिप्रमाणविलोप इति चेत् इष्टापत्तिः। तर्हि तत्तत्प्रमाणमूलकः सर्वो लोकव्यवहार उच्छिद्येतेति चेन्न—व्यवहारस्य प्रमितिमूलकत्वाभावात्। सम्भावनयैव व्यवहारसिद्धेः। अनिश्चित एवाग्नौ धूमदर्शनेनाग्निसम्भावनया वाचिकः कायिकश्च व्यवहारः। सम्भावनात्मकज्ञाने प्रमात्वाभिमानस्तु प्रत्यक्ष इव सफलप्रवृत्तिदर्शनरूपसंवादमात्रेण—इति।

[22] अत्रोच्यते—वस्तुनो दृष्टौ सत्यां भावस्य सत्तायाः निश्चयात् तस्यादृष्टौ चाभावनिश्चयात्

१* उद्धता उद्भूतेति वा। आश्रयासिद्ध्यारुद्धत्वं निरुद्धत्वमिति वा। २ बो. 'निगदः पाठः। स एव व्याख्यानमस्येति।' ३ योग्यताविशेषणेति युक्तम्। विशेषेति पाठानुसारेण तु योग्यताविशेषः सामान्यतः प्रत्यक्षविषयत्वरूपयोग्यताविलक्षणः प्रतियोगिग्राहकसामग्रीवैशिष्ट्यरूपः। अयोग्यानङ्गीकारात् योग्यताया एव व्यर्थत्वे किमिति तद्विशेषे आग्रह इति भावः।

**सम्भावना हि सन्देह एव । तस्माच्च व्यवहारस्तस्मिन् सति स्यात्। स एव तु कुतः? दर्शनदशायां भावनिश्चयात्; अदर्शनदशायामभावावधारणात्। तथा च गृहाद्बहिर्ग-(न्निर्ग)तश्चार्वाको वराको न निवर्तेत; प्रत्युत पुत्रदारधनाद्यभावावधारणात् सोरस्ताडं शोकविकलो १ विक्रोशेत् ॥ स्मरणानुभवान्नैवमिति चेन्न—प्रतियोगिस्मरण एवाभाव-परिच्छेदात् ॥ परावृत्तोऽपि कथं पुनरासादयिष्यति? सत्त्वादिति चेत्—अनुपलम्भ-**

दृष्ट्यदृष्टिदेशाव्यतिरिक्तदशाभावात् कुत्र विषये सन्देहरूपा सम्भावना त्वया वर्णयितुं पार्यते। एवमदर्शनमात्रेणार्थमपलपतस्ते प्रमाभूतं प्रत्यक्षमपि न सेत्स्यति; तद्धेतोश्चक्षुरादेरतीन्द्रियत्वा-ददर्शनतो बाधितत्वात्।

तथा च यत् यदा नोपलभ्यते तत्तदा नास्तीति ब्रुवंश्चार्वाको गृहान्निर्गतो गृहस्थितपुत्र-दारादिभिरनुपलभ्यत्वादभवन् कथं निवर्तेत। कथञ्चिद्भवन्नपि पुत्रदारगृहादिकमनुपलभमानः नास्तीति निश्चिन्वन् न निवृत्तिप्रयत्नवान् स्यात्। प्रत्युत समयान्तर इव सोरस्ताडनं शोकविह्वलो विक्रोशेत। ननु साक्षादनुपलम्भेऽपि पुत्रादेः स्मरणसत्त्वान्नाभावनिश्चयः। स्मरण एव किं प्रमाणमिति चेत्—तदनुभवरूपं प्रत्यक्षमेव—इति चेन्न—प्रतियोगिस्मरणस्य तदनुकूलत्वात्। अभावज्ञानं प्रति प्रतियोगिस्मरणस्य हेतुत्वात्। अथ काममविक्रोशं निवर्तताम्; अथापि न गृहादि प्राप्स्यति; सर्वस्यानुपलम्भकाले नष्टत्वात्। अथ तस्य नष्टत्वबुद्धावपि वस्तुतः सत्त्वा-दासादयिष्यतीति चेत्—तर्ह्यनुपलम्भमात्रेणाभावावधारणं कथमुक्तम्। अथ नष्टा एव ते; प्रति-निवृत्तेन दर्शनं तु तदात्व एवोत्पन्नानां तज्जातीयानामिति चेन्न-उत्पादकाभावादुत्पत्तेरसम्भवात्। उत्पादकाभावश्च तेषामनुपलभ्यमानत्वात्। अनुपलम्भेऽपि तत्सत्त्वस्वीकारे तु अनुपलब्धिमात्र-मभावसाधकमित्येतदसम्भवरूप उक्त एव दोषः।

[ननु पुत्रदारादेस्तेनानुपलभ्यमानत्वेऽपि मिथ उपलभ्यमानत्वात्कथं तदभाव इति चेत्-तर्हि सर्वैरनुपलभ्यमानत्वेनैवाभावोऽवधारणीयः स्यात्। तथा चेश्वराभावोऽपि दुर्निश्चयः; यत् भूतयोनिं परिपश्यन्ति धीराः। केन साधनेन पश्यन्तीति चेत्—रूपमस्तीति कुत इति पृच्छतो जात्यन्धस्येवात्र समाधिः। अथोपलम्भसामग्र्यां सत्यामेकेनाप्यनुपलम्भोऽभावग्राहक एव। पुत्रा-

१ पा० शोकविकलो बहु विक्रोशेत्। प्र. 'ननु .... अनुपलब्धिः प्रत्यक्षसहकारिणी। न च गृहाद्बहिर्गमनेऽधिकरणेन सहेन्द्रियसन्निकर्षोऽस्तीति न पुत्राद्यभावनिश्चयः स्यात्। सन्निकृष्टे देशे चाभावनिश्चयेऽपि ध्वंसानिश्चयान्न शोकः स्यात् .... अत्राहुः—अधिकरणज्ञानमात्रमभावधीहेतुः, न तु तदिन्द्रियसन्निकर्षोऽपि। अत एव देवताद्यभावस्तदधिकरणासन्निकर्षेऽपि गृह्यत इति चार्वाकसिद्धान्तमाश्रित्योक्तम्'। इति।

**कालेऽपि तर्हि सन्तीति न तावन्मात्रेणाभावावधारणम् ॥ तदैवोत्पन्ना इति चेन्न— अनुपलम्भेन हेतूनां बाधात् । अबाधे वा स एव दोषः ॥**

**[23] अत एव प्रत्यक्षमपि न स्यात् ; तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात्। उपलभ्यन्त एव ; गोलकादि २ रूपत्वात्तेषामिति चेन्न—तदुपलब्धेः पूर्वं तेषामनुपलम्भात् । न च यौगपद्यनियमः ; कार्यकारणभावादिति ॥**

---

देर्बहिरनुपलम्भकाले चेन्द्रियसन्निकर्षाहत्वाभावान्नाभावावधारणमिति चेत्—तर्हि योग्यताविशिष्टानुपलब्धिः कारणमित्यसत्पथमागतोऽसि । ननु यत्र यन्नोपलभ्यते तत्र तदभावो निश्चीयते, न सर्वत्र । बहिः स्थितेन च तत्रैव पुत्राद्यभावनिश्चयः । पुत्रो नास्तीति सामान्यतोऽधिकरणाग्रहेणाभावप्रत्ययश्च न भवति ; अभावस्यानुयोगिसापेक्षत्वात् । भवतु वा कामम् ; बहिः पुत्राद्यभावविषयकतयोपपत्स्यते । गृहे पुत्रो नास्तीति गृहावच्छेदेनाभावप्रत्ययापादनं त्वशक्यम् ; गृहप्रत्यक्षहेतोरिन्द्रियसन्निकर्षस्याभावात्—इति—अत्रोच्यते—बहिःपुत्राभावनिश्चये सति शोकः कुतो न जायते ? पुत्रध्वंसाग्रहणादिति चेत्—कदा ध्वंसग्रहणम् ? गृहावच्छेदेनैव पुत्राभावनिश्चये इति चेत्—तर्हि बहिष्ठे पुत्रे गृहस्थश्चार्वाको विक्रोशेत् । देशान्तरे तत्सत्त्वसम्भावनया न शोक इति चेत्—अनुपलभ्यमानत्वाद्देशान्तरमेव नास्ति ; कुत्र सम्भावना ? अतो यदा यावदुपलभ्यते तदा तावदेव प्रामाणिकमिति पुत्रादेरिव गृहादेरप्यभावनिश्चयात् मरणादिकालिकपुत्राद्यभावनिश्चयस्यास्य चाविशेषादनिवार्यः शोकः ॥ पूर्वं पश्चाच्चोपलभ्यमानस्य मध्ये सत्त्वं स्वीक्रियत इति चेत्—तर्ह्यनुपलम्भमात्रेणाभावनिश्चयः प्रमा न स्यात्।

[23] एवमनुपलम्भमात्रेणाभावनिश्चये प्रत्यक्षमेव न जायेत हेत्वभावात् । चक्षुरादीनां तत्कारणानामनुपलभ्यमानत्वेनासत्त्वात् । ननु गोलकादीनामिन्द्रियस्थानत्वेनाभिमतानामेवेन्द्रियत्वाभ्युपगमात् तेषां चोपलभ्यमानत्वान्न हेत्वभाव इति चेन्न—घटाद्युपलब्धेः पूर्वं गोलकादीनामनुपलम्भात् । कदाचिद्दर्पणादौ तदुपलम्भेऽपि नियमेन घटाद्यैकैकोपलब्धिपूर्वक्षणे तेषां गोलकादीनामुपलम्भस्यासम्भवात् । तथा चानुपलम्भात्तदभावे सति कथं प्रत्यक्षोत्पत्तिः । न चैवमपि प्रत्यक्षसामान्यनिषेधः कथम्, गोलकाद्युपलम्भे प्रत्यक्षसत्त्वादिति वाच्यम्—गोलकाद्युपलम्भस्यैव सिद्धेः । अनुपलम्भकालेऽभाववादिनो गोलकाद्युपलब्धेः पूर्वं गोलकादीनामनुपलम्भसत्त्वात् तदा च तदभावे सति तदुपलम्भोत्पत्त्यसम्भवात् । न चोपलब्धेर्गोलकादेश्च युगपदुत्पत्तिर्युक्ता ; उपलब्धिं प्रति गोलकादेर्विषयविधया करणविधया च कारणत्वात् प्राक्क्षणे तदभावे प्रत्यक्षासम्भवात् । अत एव घटादिविषयताकहेतोर्बाधितत्वादपि प्रत्यक्षस्य नात्मलाभ इति । तदर्थं

---

२ अयं क. २ पाठः । पा० **उपलभ्यन्त एव गोलकादय इति चेन्न ।**

**[24] एतेन—न परमाणवः सन्ति ; अनुपलब्धेः । न ते नित्या निरवयवा वा, पार्थिवत्वात् घटादिवत् । न पार्थसीयपरमाणुरूपादयो नित्याः रूपादित्वात् दृश्यमानरूपादिवत् । न रूपत्वपार्थिवत्वादि नित्याकार्यातीन्द्रियसमवायि जातित्वात् शृङ्गत्ववत् । नेन्द्रियाणि सन्ति, योग्यानुपलब्धेः । अयोग्यानि च शशशृङ्गप्रतिबन्दिनिरसनीयानीति १ एवं स्वर्गापूर्वदेवतानिराकरणं नास्तिकानां निरसनीयम्। मीमांसकश्च तोषयितव्यो भीषयितव्यश्चेति ॥**

प्राक्क्षणे तत्स्वीकारेऽनुपलम्भेऽपि वस्तुसत्त्वादनुपलम्भमात्रस्याभावसाधकत्वासिद्धेरिति ॥ वस्तुतो गोलकादेरन्धादावप्यक्षतत्वान्नेन्द्रियत्वमित्यन्यदेतत् ॥

[24] एतेनोक्तेन प्रकारेण परमाण्विन्द्रियादिनिरसनं, स्वर्गापूर्वदेवतानिराकरणं च नास्तिकानां निरसनीयम् । ते खल्वेवमाहुः—न वयं पूर्वं पश्चाच्चोपलभ्यमानस्य मध्ये सत्त्वं, अनुमानादिनापलपामः । प्रत्यक्षयोग्या पदार्था अनुपलम्भकालेऽनुमानादिना कामं सिद्ध्यन्तु ; तत्र हेतुसाध्यसम्बन्धस्य व्याप्तिरूपस्य प्रत्यक्षेण ग्रहणसम्भवात् । अन्यत्तु परमाणुतद्गतरूपादिकमनुमानतः प्रतिषेधनीयम् । एवं गोलकाद्यतिरिक्तेन्द्रियाण्यपि किं प्रत्यक्षयोग्यानि स्वीक्रियन्ते, उतायोग्यानि । न तावत्तानि योग्यानि सन्ति ; अनुपलब्धेः । नाप्ययोग्यानि ; अयोग्यानामनुपलब्धिमात्रेण शशशृङ्गवन्निरासात् । अन्यथा शशशृङ्गमपि स्यादिति प्रतिबन्दिः । तथा च सामान्यतोऽभावप्रत्यक्षं प्रत्यनुपलब्धिरेव कारणम् । योग्यप्रतियोगिकाभावप्रत्यक्षरूपविशेषे तु योग्यतारूपा प्रतियोगिग्राहकसामग्र्यपि सहकारिकारणम् । एवमनुपलब्ध्या परमाण्वादिनिषेधवत् नास्तिककृतं स्वर्गापूर्वदेवतानिराकरणं प्रत्येतव्यम्—इति । एषां निरसनमप्युक्तप्रकारेणैव बोद्धव्यम् । सर्वं हीदं पूर्वोक्तेश्वर-तद्ज्ञान-आत्मत्वादिपक्षकानुमानतुल्यम् । अतश्च परमाण्वादिपक्षकानुमानेष्वाश्रयासिद्धिः स्पष्टा । रूपत्वपृथिवीत्वादिकं, अविनाशि अनुत्पन्नं अतीन्द्रियं च यत् तदसमवेतम्, जातित्वादित्यनुमाने च साध्यतावच्छेदकाप्रसिद्ध्याऽप्रसिद्धविशेषणः पक्षः । एवमनुपलम्भमात्रस्याभावग्राहकत्वे, 'अदृष्टिपातिते हेतौ प्रत्यक्षमपि दुर्लभ' मित्युक्त एव दोषः । अयोग्यवस्तुन एवाप्रसिद्धौ तदभावग्रहं प्रति केवलानुपलब्धिर्हेतुरिति कल्पना चानुपपन्ना ; वस्तुसिद्ध्यसिद्धिभ्यां व्याघातात् । शशशृङ्गनिषेधासम्भवादिकं च प्रागेवोक्तम् । अतः प्रत्यक्षसामान्ये योग्यतायाः सहकारित्वं निराबाधम् । एवं स्वर्गापूर्वदेवतानिराकरणमप्याश्रयासिद्ध्यादिना भाव्यम् । एवं मीमांसकोऽपि यथा तत्र स्वर्गापूर्वसमर्थकत्वात्तोषयितव्यः । तथा ईश्वरेण

१ इतीति । इदानीमित्यर्थः । एवमिति चार्थे ; निराकरणं चेत्यन्वयः । उभयमपि निरसनीयमिति ॥

**[25] यद्येवमनुपलम्भेनादृश्यप्रतिषेधो नेष्यते, अनुपलभ्योपाधिप्रतिषेधोऽपि नैष्टव्यः । तथा च कथं तथाभूतार्थसिद्धिरपि ; अनुमानबीजप्रतिबन्धासिद्धेः । तदभावे शब्दादेरप्यभावः ; प्रामाण्यासिद्धेः । सेयमुभयतः पाशा रज्जुः १ ॥**

**[26] अत्र कश्चिदाह—माभूदुपाधिविधूननम् , चतुःपञ्चरूपसम्पत्तिमात्रेणैव प्रतिबन्धनिर्वाहात् । तस्याश्च सपक्षासपक्षदर्शनादर्शनमात्रप्रमाणकत्वात् । यत्र तु तद्भङ्गः, तत्र प्रमाणभङ्गोऽप्यावश्यकः । न ह्यस्ति सम्भवो दर्शनादर्शनयोरनिष्टुवं २ हेतुरूपाविप्लव इति ॥**

सह यथावस्थितदेवतादिप्रह्वादिनिराकर्तृत्वाद्धीपयितव्यश्च । न चेश्वरादेर्बाधकानुमानवत् साधकानुमानमपि न सम्भवति ; पक्षसाध्यहेतुषु तत्प्रवेशे पक्षसाध्यसाधनाप्रसिद्धीनामनिवार्यत्वादिति मन्तव्यम्—साध्यकोटावेव तत्प्रवेशात् । तत्रापि सामान्यतो दृष्टानुमानस्वीकारात्तत्सिद्धिरित्यलम् ।

[25] अथ—अनुपलम्भेनादृश्यपदार्थप्रतिषेध इष्यते न वा । आद्ये ईश्वराद्यसिद्धिः । अन्त्येऽपीश्वरादिसाधकत्वेनोपन्यस्तेष्वनुमानेषु अदृश्योपाधिमादाय सोपाधिकत्वकल्पनात्तदसिद्धिरेव । न हि तादृश उपाधेरनुपलब्धत्वात्प्रतिषिद्ध्यत इति सुवचम् ; अनुपलम्भस्यादृश्यप्रतिषेधकतायास्त्वयाऽनङ्गीकारात् । तथा च कथं सोपाधिकैरनुमानैरतीन्द्रियार्थानां सिद्धिः ; अनुमित्युपजीव्यस्य व्याप्त्यपरपर्यायस्य प्रतिबन्धस्योपाधिवशादग्रहणात् । एवंरीत्या सर्वानुमानेष्वप्यदृश्योपाधिसम्भावनयाऽनुमानसामान्याभावे सति आप्तवाक्याद्युपमूलकानुमानद्वारकव्यवहाराधीनशक्तिग्रहविरहात् , आप्तोक्तत्वादिना प्रामाण्यानुमानासम्भवाच्च प्रमाणत्वेनाभिमतस्य शब्दादेरप्यभाव इति स्थितं चार्वाकसम्मतं प्रत्यक्षमात्रप्रामाण्यम् । तथा चानुपलम्भस्यादृश्यप्रतिषेधकत्वेऽप्रतिषेधकत्वे चोभयथापीश्वराद्यसिद्धिरिति द्वेधा विकल्प्य विहितेयं दूषणरज्जुः शिरोद्वयेऽपि ग्रन्थिमती अशिथिला परबन्धनक्षमा अस्मदभीष्टप्रतिक्षेपिकेति—बलीयानाक्षेपः ।

[26] अस्मिन्नाक्षेपे सिद्धान्त्येकदेशी कश्चिदेवं समाधिमाह—अनुपलम्भमात्रेणादृश्यप्रतिषेधो न भवत्येव । अतो नादृश्योपाधिविधूननेऽस्माभिर्यतनीयम् । अकृतेऽपि तन्निषेधे स्वकारणवशादेव व्याप्ति-

१ यथा रज्जुरेका लम्बमाना एकेन इतरेणान्येनोऽप्याकृष्यमाणा स्वाग्रद्वयेनापि बद्धं पालादि लम्भयति तथेति । यथा वा रज्जुकारेण रज्जुश्शैथिल्यदुर्वेष्टनपरिहाराय तत्र तत्र शाखायां बद्धस्वाग्रद्वया न शैथिल्यं प्राप्नोति तथेति । यथा वाऽऽदावन्ते च कृतग्रन्थिः रज्जुरशिथिलेति । केचिदुभयतःस्पाशेति पदमाद्रियन्ते । स्पश बन्धन इति धातुनिष्पन्नः स्पाशो बन्ध इति । बो. । 'सेयं शिरोद्वये पाशवती रज्जु'रिति ।

२ अयं क २ पाठः । बो. 'हेतोः पक्षानां रूपाणां विप्लव' इति । पा० हेतुरूपप्लवत इति ।

[27] अप्रयोजकोऽपि तर्हि हेतुः स्यादिति चेत्—भूयोदर्शनाविप्लवे कोऽयमप्रयोजको नाम ? न तावत् साध्यं प्रत्यकार्यमकारणं वा ; सामान्यतो दृष्टानुमानस्वीकारात्। नापि सामग्र्यां कारणैकदेशः; पूर्ववदभ्युपगमात् । नापि व्यभिचारी; तदनुपलम्भात् । व्यभिचारोपलम्भे वा स एव दोषः । न च शङ्कितव्यभिचारः; निर्बीजशङ्कायाः सर्वत्र सुलभत्वात् । नापि व्याप्यान्तरसहवृत्तिः ; एकत्रापि साध्येऽनेकसाधनोपगमात् । नाप्यल्पविषयः ; धूमादेस्तथाभावेऽपि (थाभूतस्यापि) हेतुत्वात्। ननु धूमो (मोऽपि) वह्निमात्रेऽप्रयोजक एव, तन्निवृत्तावपि तदनिवृत्तेः। आर्द्रेन्धनवत्तं

निर्वाहात्। पक्षसत्त्वसपक्षसत्त्वाविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वाख्येषु रूपेषु चतुर्णां पञ्चानामपि वा सम्पत्तिग्रहादेव व्याप्तिसिद्धिर्भवति । तथा हि–केवलान्वयिनि विपक्षाप्रसिद्ध्या विपक्षासत्त्वादन्येषां, केवलव्यतिरेकिणि सपक्षसत्त्वासंम्भवादन्येषां च चतुर्णां, अन्वयव्यतिरेकिणि च पञ्चानां सम्पत्तिः । एतत्सम्पत्तिग्रहश्च हेतोः सपक्षे दर्शनाद्विपक्षेऽदर्शनाच्च प्रमाणाद्भवति । सपक्षे यथायोगं हेतुदर्शनस्य विपक्षे हेत्वदर्शनस्य चाविप्लवे उक्तानां हेतुरूपाणां विप्लवस्यासम्भावनीयत्वात् हेतुरूपभङ्गे उक्तदर्शनादर्शनरूपप्रमाणभङ्गोऽप्यावश्यक इति सिद्धं तन्मात्रप्रमाणकत्वम्।

[27] नन्विदमयुक्तम् । रूपसम्पत्तिमात्रेण सद्धेतुत्वे अप्रयोजकत्वेन कथ्यमानोऽपि सद्धेतुः स्यादिति चेत्—श्रूयताम् । पञ्चधा तावद्धेत्वाभासा महर्षिणा विभक्ताः सन्ति । तद्भिन्नाश्च सद्धेतव इत्यनुक्तिसिद्धम् । तेषु च पञ्चस्वाभासेषु नापेक्षितरूपसम्पत्तिः । तथा चाप्रयोजक इति यदि तत्रैकतमं ब्रवीषि, तस्य न हेतुत्वप्रसक्तिः । अथानाभासमेव कञ्चित् ; तन्न युक्तम्— भूयोदर्शनाविप्लवे सर्वरूपसम्पत्तौ सत्यां कोऽयमप्रयोजको नाम ? निरुच्यतां तावदिदमप्रयोजकत्वम् ; सर्वथा निरसनीयमेव लक्ष्यते । तथा हि-न तावत् कार्यत्वकारणत्वान्यतरशून्यत्वमप्रयोजकत्वम् ; 'पूर्ववच्छेषवत् सामान्यतोदृष्ट'मिति सूत्रे कारणं कार्यं च हेतुं निर्दिश्य तदन्यस्य सामान्यतोदृष्टाख्यस्य सद्धेतोः स्वीकृतत्वात् तस्याप्रयोजकत्वापातेन विरोधात्॥ नापि प्रयोजकपदस्य सामग्र्यां प्रयोगदर्शनात् सामग्रीभिन्नत्वं तत्प्रविष्टकिञ्चित्कारणात्मत्वमप्रयोजकत्वम् । एकस्मादपि कारणात्कार्यानुमानस्य पूर्ववदिति सूत्रेऽभ्युपगमात् पूर्वं कारणं हेतुतयाऽस्यास्तीति हि परामर्शो वाऽनुमितिर्वा पूर्ववदित्युच्यते । दण्डचक्रादेरेकस्माद्घटरूपकार्यानुमानासम्भवेऽपि, अयं घटवान् कपालद्वयसंयोगादित्यनुमितिर्भवत्येव । अन्येषां तु कारणानां व्यभिचरितत्वादहेतुत्वम् । नापि व्यभिचरित्वमेवाप्रयोजकत्वम्—विपक्षसत्त्वेन निश्चिते अप्रयोजके व्यभिचारोपलम्भासम्भवात् । यदि तदुपलम्भस्तर्हि स व्यभिचार एव दोषः । नापि वस्तुतो व्यभिचाराभावेऽपि सन्दिह्यमानव्यभिचारकोऽप्रयोजक इति–निष्कारणसन्देहस्य सद्धेतुत्वेनाभिमते सर्वत्र सुलभत्वेनानुमा-

वह्निविशेषं प्रति तु प्रयोजकः ; तन्निवृत्तौ तस्यैव निवृत्तेरिति—एतदप्ययुक्तम्—सामान्यप्रयोजकतायां विशेषसाधकत्वायोगात्; तदसिद्धौ तस्यासिद्धिनियमात्; सिद्धौ वा सामान्यविशेषभावानुपपत्तेः। नापि क्लृप्तसामर्थ्येऽन्यस्मिन् कल्पनीयसामर्थ्याप्रयोजकः : नाशे कार्यत्वसावयवत्वयोरपि हेतुभावादिति ॥

[28] तदेतदपेशलम्–कथं हि विशेषाभावात् कश्चिद्व्यभिचरति कश्चिच्च नेति शक्यमवगन्तुम्। ततो निर्णायकाभावे सति साहित्यदर्शनमेव शङ्काबीजमिति कासौ निर्बीजा।

---

तस्यैव विलयप्रसङ्गात्। नापि प्रकृतसाध्यं प्रति व्याप्यभूतवस्त्वन्तरसामानाधिकरण्यमप्रयोजकत्वम् ; व्याप्यान्तरसद्भावेऽप्यस्यापि व्याप्यत्वसम्भवात्। एकस्मिन्नवाग्नौ धूमभस्मादिबहुहेतुदर्शनात्। अन्यथा विनिगमकाभावात्कस्यापि व्याप्यत्वं न स्यादिति। नापि साध्यन्यूनदेशकत्वं तत्; धूमादेरग्न्यादिन्यूनदेशवृत्तित्वेऽपि हेतुत्वात्। नन्वग्निसामान्यं प्रति धूमोऽप्रयोजक एव, धूमनिवृत्तावप्यय.पिण्डेऽग्न्यनुवृत्तेः। अतो धूमेनाऽर्द्रेन्धनविशिष्टाग्निरेव साध्यः; धूमनिवृत्तौ तादृशविशिष्टाग्निनिवृत्तेः। अत उक्ताल्पविषयकत्वमेव तदिति चेत्–एतदप्ययुक्तम्–विशेषं प्रति व्याप्ये सामान्यं प्रति व्याप्यत्वस्य कैमुतिकनयसिद्धत्वात्। सामान्यं प्रति प्रयोजकत्वासिद्धिर्यत्र, तत्र विशेषं प्रत्यपि प्रयोजकत्वासिद्धेर्नियतत्वात्। एकाप्रयोजकस्याप्यन्यप्रयोजकत्वसिद्धौ तु तयोरेकान्ययोः सामान्यविशेषरूपत्वमेवानुपपन्नम् ॥ नाप्येकस्मिन् साध्यसाधकत्वस्यावश्यक्लृप्तत्वेऽन्यस्य हेतोर्निर्दुष्टस्यापि साध्यसाधनसामर्थ्यकल्पने गौरवात् कल्पनीयसामर्थ्यकत्वमेवाप्रयोजकत्वम्—इदं नाशि कार्यत्वादिति गुणादौ नाशित्वप्रयोजकतायाः कार्यत्वे क्लृप्तत्वेऽपि द्रव्ये कार्यत्वेनेव सावयवत्वेनापि नाशित्वानुमानस्य सम्मतस्य भङ्गापत्तेः। तस्माद्रूपसम्पत्तिस्थलेऽप्रयोजकत्वेनाहेतुत्वस्यासम्मते दुर्वचत्वात्त्रोपाधिविधूननस्यानावश्यकत्वाददृश्योपाधिसम्भावनायामपि नेश्वराद्यनुमानभङ्ग इति निरस्तो नास्तिकपक्ष इति।

[28] तदेतदप्रयोजकस्यापि सद्धेतुत्ववचनमकरशिक्षितमहृद्यम्–उक्तं शङ्कितव्यभिचारत्वमेवाप्रयोजकत्वमिति सुवचत्वात्। न चास्याशङ्कायाः निष्कारणत्वम्; कारणसद्भावात्। कथं ह्यस्ति विशेषेऽवगन्तुं शक्यते– अयं हेतुर्व्यभिचरितः, अयं तु न तथेति। अतो व्यभिचरितत्वाव्यभिचरितत्वान्यतरनिर्णायकस्य विशेषस्यादर्शने सति, हेतौ साध्यसाहचर्यदर्शनं, ऊर्ध्वत्वदर्शनमिव स्थाणुत्वतदभावसंशयं, व्यभिचारितत्वाव्यभिचारितत्वसंशयं साधारणधर्मवत्ताज्ञानविधया जनयति ; साध्यसाहचर्यस्य व्यभिचरितहेतावव्यभिचरितहेतौ च दर्शनेन साधारणधर्मरूपत्वात्। एवं च सर्वत्र सद्धेतौ साध्यसाहचर्यरूपसाधारणधर्मग्रहणाद्व्यभिचार शङ्का भवन्ती, तथा व्यभिचारिणस्सोपाधिकत्वनियमात्सोपाधिकत्वशङ्काप्रसक्तिरपि चार्वाकोक्ता सर्वत्र भवन्ती चार्वाकमोदा-

**एवं सति अतिप्रसक्तिरपि चार्वाकनन्दिनी १ नोपालम्भाय ॥**

**[29] स्वभावादेव कश्चित् किञ्चिद्व्यभिचरति, कश्चिच्च नेति स्वभाव एव विशेष इति चेत्—केन चिह्नेन पुनरसौ निर्णेय इति निपुणेन भावनीयम् ; भूयोदर्शनस्य शतशः प्रवृत्तस्यापि भङ्गदर्शनात् ॥ यत्र भङ्गो न दृश्यते २ तत् तथेति चेत्-आपाततो न दृश्यते इति सर्वत्र कालक्रमेणापि न द्रक्ष्यत इति को नियन्तेति ॥**

**[30] तस्मादुपाधितद्विरहावेव व्यभिचाराव्यभिचारनिबन्धनम् । तदवधारणं चाशक्यमिति । ननु यः सर्वैः प्रमाणैः सर्वदाऽस्मदादिभिर्यद्वत्तया नोपलभ्यते, नासौ तद्वान् ; यथा बकः श्यामिकया । नोपलभ्यते च वह्नौ धूम उपाधिमत्तया—इति शक्यमिति**

वह्यापि नानुमानोच्छेदिनयाऽस्मदुपालम्भाय ; न हि तत्त्वपरिदर्शिलक्षस्समुचितमाक्षेपमस्वीकृत्योपालब्धुमर्हति ; न चोपालम्भभिया ऋजुबुद्धिर्विमर्शको युक्तियुक्तं हठेन प्रतिषेद्धुमर्हति । अतश्शङ्कायास्सर्वत्र भवन्त्या अपि सहेतुकत्वात्तन्निवर्तको विशेष एवान्वेषणीय ॥

[29] अथ तर्हि स्वभाव एव निर्णायकोऽस्तु । अयं हेतुस्स्वभावत एव व्यभिचरति ; अन्यश्च स्वभावत एव न व्यभिचरतीति चेत् — कुत्र व्यभिचरितत्वनिर्णायकस्स्वभावः, कुत्र चान्य इति स्वभाव एवासौ केन गमकेन गम्यत इति भावनीयम् । अतस्स्वभावमात्रेण न समाधानम् ॥ तर्हि भूयोदर्शनं निर्णायकमास्त्विति चेन्न— यत्र पार्थिवत्वं तत्र लोहलेख्यत्वमिति मार्थिकदारवादौ भूयोदर्शनस्य शतशः प्रवृत्तस्यापि वज्रमणौ भङ्गदर्शनात् ; पार्थिवस्यैव तस्य लोहलेख्यत्वाभावात् ॥ तर्हि यत्र भङ्गादर्शनं तदव्यभिचारितमिति चेत् — विशेषाविवेचनाभावादिदानीमदर्शनेऽपि देशान्तरे वा कालान्तरे वाऽपि भङ्गो न द्रक्ष्यत इत्यस्य व्यवस्थापकः कः ॥

[30] अतो भङ्गानुपलम्भस्य दुर्वचनया भूयोदर्शनं न गमकमिति निर्णायकविशेषापेक्षायां, उपाधिमत्त्वं व्यभिचरितत्वं तदभावेऽव्यभिचरितत्वमित्येव वक्तव्यम् । उपाध्यभावावधारणं चाशक्यम्- व्यभिचारशङ्कायामुपाधिशङ्कायाः सहजत्वात् अनुपलम्भेोपाधिप्रतिषेधः कथमित्याक्षिप्तत्वाच्च ॥

१ बो. 'सर्वत्रापि सा स्यादित्येकदेशिना चार्वाकं प्रत्यापादिताऽतिप्रसक्तिः ।' प्र. 'अवश्यं शङ्कया भाव्यम नियामकमपश्यतामिति चार्वाकोक्तातिप्रसक्तिर्नोपालम्भाय ; शङ्काबीजस्य सहचारदर्शनस्य सत्त्वादित्यर्थः । ' चार्वाकनन्दिनी चार्वाकपुत्रिका । चार्वाकानन्दकरीति तु युक्तोऽर्थः । चार्वाकनन्दिन्यपीत्यन्वयः । अतिप्रसक्तिरेकदेशिना सिद्धान्तिनं प्रत्यापादिता या सैव । अथ वा अतिप्रसक्तिर्भवन्त्यपि नोपालम्भायेत्येवार्थः । चार्वाकनन्दिनीत्यनेन 'कथं नु चार्वाकनन्दकरी चार्वाकं प्रत्यापाद्यत' इति परिहसनम् ।

२ तत्र तथा क.ख. पाठः । बो. 'तत्र अदृष्टभङ्गं तथा अव्यभिचारस्वभावम् ।'

**चेन्न—अस्याप्यनुमानतया तदपेक्षायामनवस्थानात्। १ सर्वादृष्टेश्च सन्देहात्; स्वादृष्टेर्व्यभिचारतः; सर्वदेत्यसिद्धेः॥**

[31] **तादात्म्यतदुत्पत्तिभ्यां नियम इत्यन्ये। तत्र तादात्म्यं विपक्षे बाधकात् भवति। तदुत्पत्तिश्च पौर्वापर्येण प्रत्यक्षानुपलम्भाभ्याम्। २ न ह्येवं सति शङ्कापिशाची अव-**

नन्वनुमानेनोपाधिविरहः साध्यते—धूमो वह्निविषये उपाधिरहितः केनापि प्रमाणेन केनापि पुरुषेण तद्वत्तयोपलभ्यमानत्वाभावात् यदेवं, तदेवं यथा बकस्तथा श्यामरूपवत्तयाऽनुपलभ्यमानः श्यामरूपरहित इति चेन्न—अस्याप्यनुमानतया व्यभिचारशङ्कायामुपाध्यभावापेक्षायामनुमानान्तरप्रयोगः, पुनस्तत्रापि तथेत्यनवस्थाप्रसङ्गात्। उपाधिमतया सर्वपुरुषादृश्यमानत्वस्य सन्दिग्धतया हेतोः सन्दिग्धासिद्धत्वाच्च॥ स्वमात्रादृश्यमानत्वं हेतुरिति चेन्न—तस्य वस्तुपरत्वेऽपि कारणान्तरवशात् सम्भवेन व्यभिचारित्वात्। ननु सर्वैरिति वा स्वमात्रेणेति वा न विवक्षितम्; सर्वदाऽदृश्यमानत्वमेव हेतुरिति चेन्न—सर्वदेत्यस्यासिद्धेः; कालान्तरे दृश्यत्वस्यापि सम्भवात्। अत उपाधिविरहावधारणमशक्यम्॥

[31] ननु तर्हि, 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न न दर्शना'दिति विपक्षेऽदर्शनात् सपक्षे दर्शनाच्चाविनाभावसिद्धिं निषिद्ध्य तादात्म्याद्वा तदुत्पत्तेर्वा तत्सिद्धिं ब्रुवतो बौद्धस्य पक्षमवलम्ब्य शङ्कापरिहारोऽस्तु। तयोर्मध्ये तादात्म्यसिद्धिश्च प्रथमस्तबकोक्तरीत्या शिंशपायाः वृक्षसामग्रीकार्यत्वरूपाद्विपक्षे बाधकाद्भवति। तदुत्पत्तिसिद्धिश्च पूर्वं वह्निप्रत्यक्षे अपरं धूमः प्रत्यक्ष्यते; पूर्वं वह्निर्नोपलभ्यते यत्र, तत्र धूमोऽपि नोपलभ्यत इत्येवं प्रत्यक्षानुपलम्भाभ्यां भवति। एवं प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावग्रहणवर्णने सति, 'वह्निरिति किम्? पिशाचो धूमस्य कारणं स्यात; तथा च वह्निव्यभिचारी धूमः स्यादि'ति शङ्कापिशाच्याः नावकाशः। यत्र पिशाचादौ कारणत्वमाशङ्क्यमानं' तत्रापि तस्य प्रत्यक्षानुपल-

१ इदं वाक्यमित्थमेवात्र आत्मतत्त्वविवेके च लक्ष्यते। आनुपूर्वी कारिकावल्लक्ष्यते। कुत्रत्येति मृग्यम्। तथा सति, 'सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः। सर्वदा' इत्युक्तरीत्याऽस्य हेतुत्वासिद्धेरिति पङ्क्त्यर्थः॥

२ प्र. 'प्रत्यक्षानुपलम्भ' वन्वयव्यतिरेकाविति। वे. 'प्रत्यक्षानुपलम्भपञ्चकेन तदुत्पत्तिनिश्चय इति बौद्धाः। तत्र पौर्वापर्येण वह्निधूमयोरुपलम्भौ प्रत्यक्षद्वयम्। वह्न्यनुपलम्भे धूमानुपलम्भः, अन्यस्मिन् पूर्वभाविनोपलब्धेऽपि धूमानुपलम्भ इत्यनुपलम्भत्रयमिति प्रत्यक्षानुपलम्भपञ्चकम्॥ अन्येषां तु वह्नेर्धूमस्य पौर्वापर्यस्य च त्रीणि प्रत्यक्षाणि; वह्नेर्धूमस्य च द्वावनुपलम्भौ' इति।

काशमासादयति ; आशङ्क्यमानकारणभावस्यापि पिशाचादेरेतल्लक्षणाविरोधेनैव तत्त्वनिर्वाहादिति—१ नैवमपि ; उभयगामिनोऽव्यभिचारनिबन्धनस्यैकस्याविवेचनात् ; प्रत्येकं चाव्यापकत्वात्। कुतश्च कार्यात्मानौ कारणमात्मानं च न व्यभिचारत इति ॥

[32] अत्रोच्यते—शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

---

भरूपप्रमाणाविरोधेनैव निर्वाह्यत्वात् क्वचित् धूमस्थले च वह्न्यभावे वह्निकार्यत्वभङ्गापत्तेः। तथा च बौद्धमतावलम्बनेनानुमाननिर्वाह इति चेत्—इदमपि न युक्तम् ; तादात्म्यानुमानतदुत्पत्त्यनुमानोभयानुगतस्याव्यभिचारनिर्णायकस्यैकस्य बौद्धैरपरिशीलनात्। न चोभयोरप्युभयस्थलानुगतत्वं सुवचम्—एकैकस्मिन्नुभयोरव्यापनात्। न चैकैकत्रैकैकमिति युक्तम्-तथा सत्यैकैकस्याप्युभयगामित्वाभावादव्यभिचारप्रयोजकत्वायोगात्। एवं तादात्म्यतदुत्पत्तिव्यतिरिक्तानुमानानामपि सूचयिष्यमाणतया सर्वात्मना द्वयस्याव्यापकत्वाच्च। न केवलमेतावत् ; धूमो वह्न्यव्यभिचारी वह्निकार्यत्वात्, शिंशपा वृक्षाव्यभिचरिता वृक्षतादात्म्यादित्यनुमानयोरपि पुनर्व्यभिचारशङ्कायां तैः समाधिर्न विवेचितः। अतः कार्यं कुतो न कारणव्यभिचारि ; तदात्मापि कुतस्तदात्माव्यभिचारीति। अतो व्यभिचारशङ्कापरिहारस्य दुष्करतया नास्तिकचार्वाकाक्षेपो निष्प्रकम्पं स्थित इति चेत्—

[32] अत्रोच्यते-व्यभिचारशङ्का सहेतुकेति शङ्कां स्थापयता किं सर्वत्र व्यभिचारशङ्कत्यनुमानमात्रोच्छेद इति स्थाप्यते, किं वाऽनुमानं स्वीकृत्य व्यभिचारशङ्कापरिहारप्रकारोऽज्ञानाज्जिज्ञास्यते। आद्यमशक्यम्-व्यभिचारशङ्का हि संप्रति विपक्षसत्त्वादर्शनादेव भवति। अन्यथा हेतोर्विपक्षे दर्शने व्यभिचारनिश्चय एव स्यात्' न शङ्का। तथा च कालान्तरदेशान्तररूपाधिकरणानुमानं विना तत्र 'व्यभिचरे'दिति शङ्काऽयोगादनुमानं सिद्धम् ॥ एवं व्यभिचाराव्यभिचाररूपकोटिद्वयविषयकत्वाच्छङ्कायाः, अव्यभिचारस्य क्वचित् सिद्धत्वात्तेनाव्यभिचारिणा कदाचिदनुमानं न निषेध्यम्। एवं शङ्कावादिना, अयं हेतुरसाधकः शङ्कितव्यभिचारत्वादित्यनुमानेनाहेतुत्वस्य स्थाप्यतयाऽप्यनुमानसिद्धिः ॥ एवमदृश्योपाधिशङ्काऽपि दृश्योपाधिदुर्वचत्वनिश्चयमूलकाददृश्यत्वानुमानादेवेति, तथा अयं हेतु सम्भावितव्यभिचारः सम्भावितोपाधिकत्वादित्यनुमानार्थैवेति च सिद्धमनुमानम् ॥ एवं हेत्वभावादनुमानमप्रमाणमित्यप्रामाण्यमप्यनुमानेन स्थाप्यम् ॥ अस्मद्वाक्यश्रवणाद्वादी निवर्तिष्यत इत्याशयेनैव शङ्कावाक्यप्रयोगात्, वाक्यतदर्थज्ञानादेरनु-

---

१. न एवमप्युभयगामिन—इति वाक्यच्छेदः पुस्तकेषु। बो. 'नानेनापि प्रकारेणाभावनिश्चय इत्याह नैवमिति। कुत इत्यत आह उभयेति।' प्र. 'दूषयति नैवमपीति।'

**[33] कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्क्येत। तदाकलनं च नानुमानमवधीर्य कस्यचित्। मुहूर्तयामाहोरात्रपक्षमासर्त्वयनसंवत्सरादयो हि भाविनो भवन्मुहूर्ताद्यनुमेया एव, अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात्। अनाकलने वा कमाश्रित्य व्यभिचारः शङ्क्येत (दशङ्केति)। तथा च सुतरामनुमानस्वीकारः। एवं च देशान्तरेऽपि वक्तव्यम् ॥**

मानसापेक्षत्वाच्च तदनिषेध्यम् ॥ एवमुपाधिशङ्कयानुमानप्रतिषेधस्यापि अयमनिश्चितव्याप्तिकः सम्भावितोपाधिकत्वादित्यनुमानरूपतया तत्राप्युपाधिशङ्कायां तस्यानुमानस्य निरस्तत्वेऽस्मदुक्तप्राक्तनानुमानमनाकुलितमिति ॥ तत्सिद्धं शङ्का चेदनुमाऽस्त्येवेति ॥ अथ यदि शङ्का नास्ति -- तर्हि शङ्काभावः सुतरामनुमानसाधकः ॥ अस्तु तर्ह्यनुमानं प्रमाणम्। शङ्कानिवृत्तिः कुत इति जिज्ञास्यत इति चेत् — अनुकूलतर्कः शङ्काया अवधिर्निवर्तकः। एवं तर्कः शङ्कावधिकः; तर्कस्य शङ्का पूर्वावधिः। शङ्कायां सत्यां तर्कः प्रवर्तते; न चेन्नेति ॥ उत्तरोत्तरतर्के व्यभिचारशङ्का च व्याघातदर्शनावधिका। स्वकृताशङ्कायाः स्वकीयक्रियया भवतो व्याघातस्य ग्रहणमेव तदवसानभूमिरिति। एवमयं तर्क इत्थंभूतस्तं व्युत्पादयत मूलकृतो मत इति ॥

[33] तदुपपादयति- उपाधिमत्त्वेन व्यभिचरितत्वेन वा इदानीमनुपलब्धत्वादनुपाधिकमव्यभिचारि चेत्युक्तौ या आशङ्का क्रियेत, 'पश्चात्कदाचित्तथोपलभ्येते' ति—सा कालान्तरस्य प्रथमतः प्रमाणेनाग्रहणे न भवति। अनुमानावधीरणे च न कश्चित्केनचित् प्रमाणेन कालान्तरमाकलयितुमलम्। वर्तमानो मुहूर्तादिरूपः कालो मुहूर्तादिकालान्तरोत्तरकः कालत्वादतीतकालवदित्याद्यनुमानं हि तत्र प्रमाणम्। न चानुभावकप्रमाणाभावेऽपि स्मरणरूपं कालान्तरज्ञानं भवितुमर्हतीति शङ्क्यम्- अननुभूतस्य स्मरणायोगात्। [न च कालत्वेन रूपेण सामान्यलक्षणाप्रत्यासत्त्या कालान्तरग्रहणमस्तीति वाच्यम् — प्रामाणिकानामेव विशेषाणां सामान्यप्रत्यासत्त्या ग्रहणात्। कालान्तरसाधकप्रमाणाभावे च तदसिद्धौ एवंवर्णनासम्भवात्। न हि शृङ्गत्वेन शशशृङ्गमपि गृहीतमिति कश्चिद्वक्तुमर्हति। किं च विशिष्य कालान्तरं निर्दिश्य हि तदा व्यभिचारापादनं कार्यम्। ननु वह्न्यनुपलम्भेऽपि धूमोपलम्भोऽस्त्विति सामान्यत आपादनमिति चेत्—तत्रापि निर्विशेषं न सामान्यमिति न्यायेन कालविशेषग्राहिताया आवश्यकत्वात् प्रकृतकाले च इदमन्यभाववत् धूमवच्चेत्युपलम्भाभावेन कालान्तरपर्यवसानमभ्युपेत्यम्। अतो विशेषरूपेण तदास्तित्वानाकलने कमाधारं पुरस्कृत्य व्यभिचारः शङ्क्येत। अतोऽनुमानप्रमाणं व्यभिचारपक्षेऽपि सिद्धम्। न च नानुमीयते; किन्तु 'यदि कालान्तरादिकं स्यात्, यदि तत्र साध्यं विनोपलम्भः स्यादिति संभावनैवेति वाच्यम् — अज्ञातस्य कालान्तरादेः सम्भाव-

[34] **स्वीकृतमनुमानम् । सुहृद्भावेन पृच्छामः–कथमाशङ्का निवर्तनीयेति चेत्—न—यावदाशङ्कं तर्कप्रवृत्तेः ॥**

---

नाविषयत्वस्याप्ययोगात् कालसद्भावतदभावरूपकोटिद्वयस्य प्रागदृष्टतया स्वरसतस्तद्विषयकसंशयस्यासम्भवाच्च ; उपपत्तिपरिशीलनं विना सम्भावनाया अनुत्पत्तेश्च । ] अतः कालान्तराद्यनुमानमावश्यकमिति तदर्थं तदनुमानस्वीकारे सुतरामनुमानस्य स्वीकार्यता । तत्सिद्धं **न चेच्छङ्कातत<sup></sup>स्तरा**मिति ॥

(34) ननु सत्यमनुमानं प्रमाणं स्वीकर्तव्यम् । परं तु शङ्कापरिहारः कथमिति न ज्ञायते उपायस्य दुर्लभत्वादिति चेन्न—यदा यदाऽऽशङ्का, तदा तदाऽनुकूलतर्कः प्रवर्तनीय इति । कोऽसौ तर्क इति चेत्–व्यापकस्यानिष्टस्य प्रसञ्जनं तर्कः । तथा च यदि पर्वतेऽग्न्यभाव आपाद्येत , तर्हि तद्व्यापको धूमाभावोऽनिष्टः प्रसञ्ज्यते , 'यद्यत्राग्निर्न स्यात् , तर्हि धूमो न स्यादि' ति । यदि तु धूमे हेतौ सोपाधिकत्वं वह्निव्यभिचारित्वं वाऽऽपाद्येत , तर्हि , 'यद्येवं स्यात्, धूमो वह्निजन्यो न स्यात्' इति वह्निजन्यत्वाभावस्यानिष्टस्य प्रसञ्जनं क्रियत इति ॥

[नन्वत्र न तावत् प्रथमस्तर्को व्याप्तिग्रहणोपयोगी । तथा हि—तर्के आपाद्यापादकयोः व्याप्यव्यापकभावः विपर्यये पर्यवसानं चावश्यकम् । अत्र च धूमाभाव आपाद्यः , अग्न्यभाव आपादकः । आपाद्यं प्रत्यापादकं व्याप्यम् । धूमाभावापादनस्य च धूमसत्त्वे पर्यवसानम् । एवमापाद्यकोटिविपर्ययपर्यवसाने सति आपादककोटिविपर्ययपर्यवसानं भवति । तथा च तर्कबलाद्वह्निमत्त्वं पक्षे पर्यवसितं भवति । एवं चानुमितेरेवैवं सिद्धत्वादनुमित्युपयोगि वह्निधूमव्याप्तिग्रहोपायत्वमस्य कथम् ? नापि द्वितीयस्तर्को व्याप्तिग्रहसाधनम् । वह्निजन्यो न स्यादित्यापादनं हि किं धूमस्य वह्निजन्यत्वनिश्चये सति, उत तदभावे । आद्ये नियतपूर्ववर्तित्वरूपस्य कारणत्वस्य व्यापकताघटितत्वेन कार्यत्वस्य व्याप्यताघटिततया वह्निजन्यत्वस्य स्वपूर्वक्षणवृत्तिवह्निव्याप्यतारूपतया तादृशजन्यत्वनिश्चयवतो वह्निव्यभिचारित्वशङ्काया एवासम्भवेनापादनस्यानवसरग्रस्तत्वात् । व्याप्तिग्रहो हि प्रागेव सिद्ध इति । अन्त्ये तदनिश्चये सति वह्निजन्यत्वाभावस्यानिष्टत्वाज्ञानादापादनमकिञ्चित्करम् । अतो व्यर्थस्तर्क इति चेत्—

उच्यते—द्विविधस्तर्कः विषयपरिशोधको व्याप्तिग्राहकश्चेति । पूर्वोक्ततर्कयोराद्यो विषयशोधकः ; पक्षे साक्षाद्वह्न्यभावापादनात् तत्परिहाराय विषयशोधनमात्रं तेन कृतम् । एतदनन्तरं , अस्तु वह्न्यभावः ; धूमाभावस्तु मास्तु , वह्न्यभाववद्वृत्तिरेवास्त्विति व्यभिचारित्वशङ्कायां द्वितीयतर्कोत्थानम् । तथा च पक्षे साध्याभावशङ्का प्रथमा ; तदनुरोधेन हेतौ साध्यव्यभिचारित्वशङ्का द्वितीया । तत्र च द्वितीये तर्के यत् विकल्प्य दूषणं कृतम् , तत्रेदं श्रूयताम्—

[35] तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयता इच्छा

जन्यत्वं व्याप्यत्वघटितमेवेति न निर्बन्धः ; किं तु तत् स्वरूपसम्बन्धविशेषो वा अखण्डोपाधिर्वा अन्यादृशं वा भवितुमर्हति । परं तु तत् जन्यत्वं प्राक् धूमे वह्निव्याप्यताज्ञानमूलकमेव ज्ञातमस्ति । अथापि संप्रति तद्विस्मरणादिना व्यभिचारशङ्कायां सत्यां निश्चितपूर्वस्य जन्यत्वस्याभावः स्यादित्यापादने कृते व्यभिचारित्वकोटेरपि विपर्यये पर्यवसाने व्याप्तिग्रहः सिद्धो भवति ॥ तथा जन्यत्वस्य व्याप्यत्वघटितत्वपक्षेऽप्येवं निर्वाहः—वह्निजन्यत्वनिश्चयविरहिणं प्रत्येवैवमापादनं क्रियते । इतश्च स, 'वह्निजन्यत्वाभावोऽपि मे इष्ट' इति वदेत् । तदा, यदि वह्निजन्यो न स्यात्, धूमार्थिनां वह्नौ प्रवृत्तिर्न स्यादिति वक्तव्यम् । तथा च वह्निजन्यत्वाभावस्यानिष्टत्वे वह्निजन्यत्वनिश्चये च सिद्धे तस्यैव निश्चयस्य व्याप्तिनिश्चयरूपतया व्यभिचारसंशयनिवृत्तिः । जन्यत्वाभावापादनरूपस्य च तर्कस्य जन्यत्वरूपविपर्ययपर्यवसानोपयोगित्वात्तर्को व्याप्तिग्राहक इत्युच्यते । जन्यत्वस्य व्याप्यत्वाघटितत्वपक्षे च जन्यत्वाभावापादनस्य जन्यत्वपर्यवसाने तन्मूलाव्यभिचारित्वविपर्ययपर्यवसाने तदेव चाव्यभिचारित्वरूपव्याप्तिज्ञानमिति तर्कस्य व्याप्तिग्राहकता । वस्तुतः प्रतियोगिव्यधिकरणसाध्याभाववदवृत्तित्वरूपव्याप्तेरनुमित्युपयोगिनी ; कार्यात्यव्यवहितप्राक्क्षणावच्छिन्नवह्न्यभाववदवृत्तित्वं च वह्निजन्येति न व्याप्तेरपेक्षितताया जन्यताघटकत्वम् ।

एतावतेदमुक्तं भवति—व्यभिचारित्वाव्यभिचारित्वसमानाधिकरणसाहचर्यरूपसाधारणधर्मवत्ताज्ञानाद्व्यभिचारसंशयो भवतीति प्रागुक्तम् । एवमुपाधिसंशयादपि व्यभिचारसंशयः । तत्र, वह्निजन्यो न स्यात्, धूमार्थिनां वह्नौ प्रवृत्तिर्न स्यादित्यादिना तर्केणाव्यभिचारित्वव्याप्यवत्ताज्ञानरूपविशेषदर्शनं संशयप्रतिबन्धकं सम्पाद्यते । तथा च विरुद्धकोटिभानासम्भवात् व्याप्तिरूपाव्यभिचारित्वग्रहणमिति । न चायं वह्न्यव्यभिचारी वह्निजन्यत्वादित्यनुमानप्रयोगस्यैव सुकरतया, यथेव तर्हि न स्यादिति तर्कोपः कुत इति वाच्यम्—धूमो वह्निव्यभिचारी स्यादित्याशङ्कमानं प्रति, यदि व्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादित्याशङ्कानुवादपुरःसरं तदनुरूपसमाधानस्यैव स्वरसत्वात् । इदं च परं प्रति बोधने । स्वयं परिशीलनदशायां त्वनुमानमेवेष्टं युज्यते ; वह्निजन्यत्वरूपविशेषदर्शने सत्येव तज्जन्यो न स्यादित्यारोपसम्भवात् । परं तु यदि पुंसः संशयमात्रमस्ति ; तदाऽनुमानमेवेष्टोऽप्यलम् । यदि तु व्यभिचारित्वकोटेर्मीलयाऽभिमतत्वमिष्टत्वमापतति, तदा संशयविघटनवदिच्छाविघटनस्यापि कार्यतया तर्कस्यादरः । ]

[35] तथा च शङ्कायां सत्यां विना निश्चयं प्रवर्तितुमनिच्छतः पुंसः धूमवानयं विपक्षोऽस्तु । वह्न्यभाववानस्त्विति वह्न्यभाववत्ताज्ञ नेच्छा जायते । सा च तादृशज्ञानोपायान्वेषणे पुरुषं

**विच्छिद्यते । विच्छिन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलो ऽधितिष्ठति ; अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम् ॥**

---

प्रवर्तयन्ती व्याप्तिज्ञानोत्पत्तिं प्रतिबध्नाति । शङ्का च सोपाधिकत्वविषयिणी व्यभिचारविषयिणी वाऽपि भवति । आद्ये तत्परिहाराय यद्ययं धूमः (सोपाधिकः स्यात्) स्वाव्यापक-वह्निव्यापक-किञ्चित्पदार्थकः स्यात्, वह्निजन्यो न स्यादिति, यद्वा यदि वह्निधूमाव्यापककिञ्चिद्व्याप्यः स्यात् धूमजनको न स्यादिति तर्कः । अन्त्ये, यदि धूमो वह्निव्यभिचारी स्यात्; वह्निजन्यो न स्यादिति तर्कः । तत्रोपाधिशङ्काऽपि व्यभिचारशङ्कायामेव पर्यवस्यति । अयं हेतुः साध्य-व्यभिचारी साध्यव्यापकोपाधिव्यभिचारित्वादिति व्यभिचारोन्नयनं ह्युपाधिना क्रियते। तथा चोक्त-स्तर्कः वह्निजन्यत्वाभावरूपापाद्यकोटिविषयकः सोपाधिकत्वरूपायां वा शङ्कितुरभिमतायामापा-दककोटौ अनिष्टमुपनयति ; धूमे वह्निजन्यत्वाभावस्य तज्ज्ञानस्य च शङ्कितुरनिष्टत्वात्, सोपा-धिकत्वसव्यभिचारत्वयोश्चापादकत्वात्, सोपाधिकत्वादिज्ञानमनिष्टसाधनमिति बुद्धिं जनयतीति यावत् । अनिष्टं च प्रामाणिकत्यागोऽप्रामाणिकार्थस्वीकारो वा यथायथम् । तर्काकार एव च स्याद्घटितोऽनिष्टत्वादिव्यञ्जकः । एवं व्यभिचारज्ञानेऽनिष्टसाधनत्वज्ञाने सति तत्र द्वेषात् धूमे व्यभिचरितत्वेच्छायाः पक्षे विपक्षत्वेच्छायाश्च विच्छेदात् प्रमाता विपक्षत्वज्ञानोपायव्यग्रतारूप-वैयाकुल्यरहितो भूयोदर्शनतः सहचरितत्वेन स्मृतं हेतुं व्याप्तिपक्षधर्मताविशिष्टत्वेन परामृशति। अन्यथा तु व्यभिचारकोटिविच्छायामप्रतिक्षिप्तायां तदुपष्टब्धा अव्यभिचारित्वशङ्का न व्याप्ति-निश्चयोत्पत्तये अवकाशं दद्यात् । इयमेव व्यभिचारशङ्का आक्षेपकपुरुषनिष्ठा आक्षिप्तपुरुषे स्वयमसतीति, इच्छाधीनेति च आहार्यशङ्कत्युच्यते । ईदृशशङ्कासहास्थितेच्छाविच्छेदे चोक्तरीत्या सति परामर्शे परामर्शविषयाल्लिङ्गात् करणादनुमितिक्रियानिष्पत्तिः । अतस्तर्कः शङ्कावधिरिति ।

[अत्र मणिकारादयः, 'व्यभिचारज्ञानाभावविशिष्टसहचारज्ञानं व्याप्तिग्रहोपायः । व्यभि-चारशङ्काविघटनं च तर्केण क्रियते । ततो व्याप्तिग्रह' इत्याहुः । प्रकृतयथाश्रुतग्रन्थानुसारेण तु विपक्षेच्छाविरहविशिष्टसाहचर्यज्ञानं व्याप्तिग्रहोपाय इति ज्ञायते । यदुच्यते, '**विच्छिन्न-विपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं** लिङ्गमनाकुलोऽधितिष्ठती'ति । तथा च विपक्षजिज्ञासैव व्याप्तिग्रहप्रतिबन्धिका; न व्यभिचारसंशयः; संशयस्य निश्चयप्रतिबन्धकत्व-कल्पनाऽयोगात् । व्यभिचारनिश्चयकाले तु तस्य तदभाववत्तानिश्चयविधया प्रतिबन्धकत्वादेव न व्याप्तिग्रहः । एवं व्यभिचारसंशयोऽपि न तर्कविनाश्यः; विरोधिविषयकत्वाभावेन तस्य तत्प्रतिबन्धकत्वायोगात ; मणिमन्त्रादिन्यायानुसरणे च गौरवात् । व्यभिचारसंशयनिवृत्तिस्तु व्याप्तिग्रहादेव । एतदुक्तं भवति—साध्यार्थिनः पुंसो विपक्षेच्छा न भवतीति नास्ति; तथा

**[36] ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्तते । ततोऽनवस्थया भवितव्यम्—न-शङ्काया व्याघातावधित्वात् । तदेव ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघा-**

सति ; धूमोऽस्तु, वह्निर्मास्त्विति शङ्काभावात्तर्कस्यैवानपेक्षणात् । अतो वृथाप्रवृत्तिपरिहार-परस्य विवेचकस्य, यद्ययं विपक्षः स्यात् तर्हि तथा विजानीयामितीच्छा भवत्येव । अस्याश्चेच्छायाः विपक्षत्वसंशयरूपशङ्का हेतुः । तत्र विपक्षत्वशङ्कायां विषयपरिशोधकतर्के प्रवृत्ते ततो व्यभिचारशङ्कायां व्याप्तिग्राहकतर्कप्रवृत्तिरिति प्रागेवोक्तम् । तत्र द्वितीयतर्केण व्यभिचारितत्वा-पादननिवृत्तौ प्रथमतर्केण विपक्षेच्छा विच्छिद्यते । ततो द्वितीयतर्कविपर्ययपर्यवसानभूतेऽव्य-भिचरितत्वनिश्चयात्मके व्याप्तिग्रहे सति प्रथमतर्कविपर्ययपर्यवसानात्मा साध्यनिश्चयोऽनुमिति-रूपो निष्पद्यते । अयं साध्यनिश्चय एव विषयपरिशुद्धिः । एतत्करत्वादेव स तर्को विषय-[1] परिशोधक इत्युच्यते । द्वितीयस्य व्याप्तिग्रहपर्यवसायित्वाद्धि व्याप्तिग्राहकत्वम् । एवं द्वितीयस्य व्याप्तिग्रहात् प्रागपेक्षितत्वात् प्रथमस्य व्याप्तिग्रहात् पश्चाद्विपर्ययपर्यवसानवत्त्वाच्च यथाक्रमं पूर्वोत्तराङ्गत्वम् । तथा च व्यभिचारेच्छाविपक्षेच्छयोस्तर्काभ्यां निवृत्तिः ; अनिष्टापा-दने सति इच्छाविच्छेदस्यानुभविकत्वात् । सुरापानादीच्छा हि तत्रानिष्टापादने निवर्तत इति । तस्मादिच्छारूपशङ्कैव तर्कनिवर्त्या । संशयरूपव्यभिचारशङ्काविपक्षत्वशङ्कयोस्तु परा-मर्शादित एव निवृत्तिरिति । इदमपि समनन्तरमेव वक्ष्यति, “ततः शङ्कैव स्वरूपतः फल-तश्च निवर्तनीया । तत्र फलमस्याः विपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्तते। ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपैति । व्याप्तिग्रहात् पूर्वमनिवर्तमानाऽपि व्यभिचारशङ्का न व्याप्तिग्रहप्रतिबन्धिका ; इच्छाया एव प्रतिबन्धकत्वस्वीकारात् । तस्याश्च वारितत्वात् । अतो यथाश्रुतमेव साधीय इति युक्तमुत्पश्यामः । ]

[36] ननु यदि वह्निः स्यात् तर्हि धूमोऽपि न स्यादित्यादिस्तर्कोऽपि वह्न्यभावधूमाभावादे-र्व्याप्यव्यापकभावसापेक्ष इति वह्न्यभावोऽस्तु, धूमाभावो मास्त्विति तत्र व्यभिचारशङ्कायामुत्था-पितायां तद्भञ्जकतर्कान्तरग्रहणे तत्राप्येवमित्यनवस्था दुर्धर्षेति चेन्न—शङ्कायाः व्याघातावधिकत्वात् । यद्विषयकशङ्काया हि स्वव्यापारविघातः, स्वोक्तिव्याघातः, स्वाभिमतिव्याघातो वा न भवति,

[1] मकरन्दे तु, “अत एवायं न्यायविषयपरिशोधक इति गीयते । न्यायस्य परामर्शस्य विषयो लिङ्गं तस्य परिशुद्धिः परामर्शप्रतिबन्धकसाध्याभावजिज्ञासातदुपायानुसरणपरत्वयोरपगमः । ....न चैवं तर्कस्य न्यायोत्तराङ्गत्वप्रतिपादनविरोधः ; परामर्शव्यापारस्तर्क इति मतेन तदुत्था-नात् । तदाह तत्रैव (प्रमेयतत्त्वबोधे) वर्धमानः, ‘तर्को न्यायस्य पूर्वाङ्गम्, न्यायविषय-परिशोधकत्वात्, व्याप्तिग्राहकत्वाच्च’ इत्याहुः” इत्युक्तम् ।

**तादृशो दोषा नावतरन्तीति लोकमर्यादा । न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते । तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत् ॥**

---

तदेवाशङ्क्यत इति लोकव्यवस्था । न खलु स्वकीयमनोवाक्कायव्यापारविरुद्धां शङ्कां कश्चिदनुगतिरुद्भावयितुमलम् । तथा च प्रकृते, यदि वह्न्यभावेऽपि धूमः स्यात्, धूमार्थिना वह्निघटितसामग्र्यामेव प्रवृत्तिर्न स्यादिति प्रवृत्तिविघात आपद्येत । न चेदमिष्टम् ; प्रवृत्तेरेव क्रियमाणत्वात् ॥ न च क्रियाव्याघातश्शङ्कानिष्ठ आधारतया स्वोपजीव्यां शङ्कां कथं रुणद्धीति कथं व्याघातावधिकत्वम् ; यावताऽऽधेयो व्याघातो वर्तमान आधारस्य शङ्कायाः स्थापक एव लक्ष्यत इति खण्डनकारमनुरुद्ध्य शङ्क्यम्— क्रियाया व्याघातावधिकत्वमित्यनेन व्याघातरूपानुपपत्तिमत्क्रियावधिकत्वमित्यस्य विवक्षितत्वात् । तथा च क्रिया दृश्यमाना वह्न्यभावेऽपि धूमस्थितेरिष्टत्वशङ्कां तर्कान्तरनिरपेक्षमेव रुणद्धि । एवमत्र धूमस्याग्निमनपेक्ष्य स्थितिरप्यस्तु धूमार्थिनोऽग्नौ प्रवृत्तिरप्यस्त्विति न सुवचम्—यदि तन्निरपेक्षवस्त्वर्थिनः पुंसस्तन्निरपेक्षत्वज्ञाने सत्यपि तद्विषयकप्रवृत्तिः स्यात्, तन्निरपेक्षत्वज्ञानकालिकः प्रवृत्त्यभाव आनुभविको न स्यात् । न च प्रवृत्तितदभावावेकत्र सम्भवतः ; विरोधात् । एवं धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यपि विपर्ययपरिशोधकतर्कगतव्याप्यव्यापकभावभङ्गपरिहारार्थस्तर्कः । न चात्रापि तद्भङ्गशङ्का ; जन्यत्वस्य व्याप्यत्वात्मकतया व्यभिचारित्वजन्यत्वोक्तयोः मिथो व्याहतत्वात् । तस्माद्व्याघातावधिराशङ्केति नानवस्था । तथा चापाद्यापादकयोर्व्याप्यव्यापकभावरूपमङ्ग तर्के सुस्थमिति । ननु वह्निजन्यो न स्यादित्यत्रेष्टापत्तिरिति चेत्—इष्टापत्तिरियं किं धूमे वह्निजन्यत्वानङ्गीकारात्, किं वा जन्यजनकभावस्यैव लोकेऽस्वीकारात् । आद्ये दूषणमुक्तम्—प्रवृत्तिर्न स्यादिति । एवं वह्न्यघटितसामग्र्यजन्यो धूमो यदि वह्निजन्योऽपि न स्यात्—तर्ह्यजन्य एव स्यादित्यपि दूषणम् । अन्त्यमपि न युक्तम् ; न हि हेतुहेतुमद्भाव एव मा भूदिति शक्यशङ्कम्—तथा हि सति शङ्कैव न स्यात् । व्यभिचारशङ्का हि इच्छाद्वारा व्याप्तिज्ञानप्रतिबन्धाय । हेतुफलभावाभावे च सा व्यर्था । एवं जन्यजनकभाव एव नास्तीति शङ्काऽपि तत्सद्भाववादिपक्षप्रतिक्षेपाय । यदि जन्यजनकभाव एव न स्यात्, शङ्कया किं जनिष्यते । अतो यथा सर्वं मिथ्या भविष्यतीति वाक्यं सर्वान्तर्गतस्य स्वस्य मिथ्यात्वे सत्यत्वे च सर्वमिथ्यात्वबोधनाक्षमम्—आद्यपक्षे स्वयमसत्त्वेनासमर्थत्वात् ; अन्त्ये च किञ्चित्सत्यत्वेन सर्वमिथ्यात्वायोगात् तथेदमिति । यथा वा सर्वं मिथ्येति वाक्यवत् सर्वं भविष्यतीति वाक्यमपि न सम्भावितम्—स्वस्य भूतत्वेन सर्वभविष्यत्त्वायोगात् ; तथेदमपीति । तथा चापादितविपर्यये इष्टापत्त्ययोगात् आपाद्यस्यानिष्टत्वरूपमङ्गं विपर्यये पर्यवसानरूपमङ्गं च तर्के सुस्थमिति । आपाद्यस्य विपर्यये

**[37] अथाप्यतीन्द्रियोपाधिनिषेधे किं प्रमाणमि(धःकिंप्रमाणक इ)त्युच्यतामिति चेत्-- न वै कश्चिदतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति, यस्याभावे प्रमाणमन्वेषणीयम्। केवलं साहचर्ये निबन्धनान्तरमात्रं शङ्कयते। ततः शङ्कैव फलतः स्वरूपतश्च निवर्तनीया। तत्र फलमस्याः विपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्तते; ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्॥**

पर्यवसाने सति व्याप्यव्यापकभावबलादापादकस्यापि विपर्यये पर्यवसानं सिद्धम्। इदमेव च तर्कस्य विपर्यये तत्कोटिपर्यवसायित्वम्—यत् स्वविषयीभूतस्यापाद्यस्य विपर्ययात् आपादकविपर्ययरूपकोटिपर्यवसानकरत्वमिति १। तर्कस्याङ्गपञ्चकं—प्रतितर्कापराहतत्वं, आपाद्यापादकयोर्व्याप्यव्यापकभावः, आपाद्यस्य परानिष्टत्वं, परानुकूलत्वं, विपर्यये पर्यवसानं चेति यत् प्रसिद्धं, तत्र साक्षादनुक्तमप्यत्रोक्तप्रायं वेदितव्यमित्यलम्।

[37] ननु धूमेनाग्न्यनुमानेऽतीन्द्रियोपाधिशङ्कायां तन्निषेधो न प्रत्यक्षेण, तस्यातीन्द्रियत्वात्। अतोऽनुमानेन स निरस्यः। ततस्तस्मिन्नप्यनुमाने उपाधिशङ्कायां तन्निषेधोऽनुमानान्तरेणेत्यनवस्थेयमपरिहार्येति चेन्न; प्रमाणसिद्धस्य ह्यन्यत्राभावः प्रमाणेनान्विष्यते। उक्तं हि 'नशशशृङ्गादिकं निषिद्ध्यत' इति। अतोऽप्रसक्तत्वादप्रतिषेधः। ततो भवताऽतीन्द्रियोपाधिरिहास्तीति विशिष्य दुर्वचम्। किं तु क्वचिद्धेतौ उपाधिप्रयुक्तव्याप्त्युपजीवित्वस्य दर्शनात् प्रकृतहेतावपि साध्यसाहचर्ये कश्चिदुपाधिः प्रयोजकः स्यादिति सामान्यत एव शङ्कनीयम्। तथा च कस्यचित् प्रकृतसाधनाव्यापकत्वशङ्का, ततः प्रकृतसाधने साध्यव्यभिचारित्वशङ्का चैवावतिष्ठते; न तु विशिष्यातीन्द्रियोपाधिशङ्का काचिदिति॥ नन्वियमपि शङ्का न तर्कनिवर्त्या; तर्कस्यैतद्विरोधिविषयकत्वाभावादिति चेत्—माभूत्तर्कतः साक्षान्निवृत्तिः; अथापि तत्फलं हेतौ व्यभिचारित्वनिश्चयेच्छा पक्षे विपक्षत्वज्ञानेच्छा च तर्कतः साक्षान्निवर्तते। एवं विपक्षेच्छानिवृत्त्या च परामर्शप्रवृत्तौ तस्य विरोधिविषयकत्वाच्छङ्का स्वरूपतोऽपि निवर्तिष्यते। न पुनः शङ्कानिवृत्तिरनुमानात्प्रागपेक्षितेति॥ तथा च योग्यानुपलब्धिरेवाभावग्राहिका, न केवला। न च तावताऽतीन्द्रियोपाधिशङ्कयाऽनुमानोच्छेदः शब्दप्रमाणाद्युच्छेदश्च। न वा तद्भियाऽप्रयोजकहेतुत्वनङ्गीकारः। न वा तदङ्गीकारे व्यभिचारितत्वाक्षेपस्य सर्वत्र सुलभस्य परिहारासम्भवः; तर्कस्यैव सर्वाक्षेपकुक्षिम्भरित्वादिति सुस्थमेतत्॥

१. 'विपर्यये तत्कोटिपर्यवसायिनश्च तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्व'मिति दीधिति-(पु. ६८०) वाक्यानुसरणेन सर्वत्र तत्र तत्कोटीति लेखनम्।

[38] **न चैतदनागमम्, न्यायाङ्गतया तर्कं व्युत्पादयतः सूत्रकारस्याभिमतत्वात् । अन्यथा तद् व्युत्पादनवैयर्थ्यात् ॥**

[39] **तदयं संक्षेपः—यत्रानुकूलतर्को नास्ति सोऽप्रयोजकः। स च द्विविधः शङ्कितोपाधिर्निश्चितोपाधिश्च ; यत्रेदमुच्यते—**

**'यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।**
**विपक्षस्य कुतस्तावत् हेतोर्गमनिकाबलम् ॥'**

[40] **तत्रोपाधिस्तु—साधनाव्यापकत्वे सति साध्यव्यापकः । तद्धर्मभूता हि व्याप्ति-**

---

[38] न चैतत् तर्कसत्त्व एवानुमानस्य निर्दुष्टत्वमसंप्रदायमस्मत्कपोलकल्पितम् । महर्षिणैव हि पदार्थमध्ये तर्कं परिगणय्य, 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति लक्षयित्वा, 'प्रमाणतर्कसाधनोपालम्भ' इति प्रमाणसहकारितामाचक्षाणेन तर्कः शङ्काबाधिमत इति । व्याप्तिग्राहकतया तदुपयोगाभावे तद्व्युत्पादनमेव हि व्यर्थमिति । न चायं तर्क एव व्याप्तिज्ञानमनुमितिर्वा ; 'कारणोपपत्ति' इति, 'तत्त्वज्ञानार्थ'मिति च तयोः पृथक्करणादिति ॥

[39] एतावता प्रबन्धेनेदमुक्तं भवति--अनुकूलतर्कवान् हेतुः प्रयोजकः । अनुकूलतर्करहितत्वमप्रयोजकत्वम् । स च द्विविधः शङ्कितोपाधिको निश्चितोपाधिकश्च । अत्र यावच्चेत्यादि वृद्धवचनमपि प्रमाणम् । यावत् **विपक्षस्य** साध्याभाववतः **हेत्वव्यतिरेकित्वं** हेतुमत्त्वमत्यल्पमपि शङ्क्यते, व्यभिचरित इत्याक्षेपः क्रियत इति यावत्, तावत् हेतोः साध्यगमकत्वे **बलं** व्याप्तिग्रहो नास्तीति तदर्थः । अत्र **शतांशेनापी**त्यनेन ईषत्सन्देहाधीनाक्षेपोऽप्यलम् ; उपाधिनिश्चये तु सुतरामिति ज्ञाप्यते ।

[40] ननु साध्यसाधने क्लृप्तसामर्थ्यकत्वं ह्युपाधिकत्वम् । एवं च कल्पनीयसामर्थ्यकं सोपाधिकमित्यापतति । तथा च कार्यत्वमादाय सावयवत्वं सोपाधिकं नाशित्वानुमापकं न स्यादिति उपाधिलक्षणं साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । आभ्यां दलाभ्यां कार्यत्वं प्रति सावयवत्वस्य सावयवत्वं प्रति कार्यत्वस्य चोपाधित्वं वार्यते । नाशित्वव्याप्यकार्यत्वव्याप्यतया सावयवत्वं सुतरां नाशित्वव्याप्यमिति न तत्रोपाधित्वप्रसक्तिः । अत्रोपाधिशब्दप्रवृत्तिः कथमिति चेत्--उच्यते--स्वसमीपस्थे स्वधर्मं य आधत्ते स उपाधिः । यथा जपाकुसुमं स्वगतां रक्ततां स्फटिके । एवमुपाधित्वेनाभिमतः स्वगतां साध्यव्याप्तिं हेतावavभासयति ; एतन्निष्ठैव व्याप्तिर्हेतौ चकास्तीति स उपाधिरिति । इदं च भट्टपादैः, 'अन्य परप्रयुक्ताना'मिति कारिकया दर्शितं नैयायिकानुमतम् । सद्धेतवस्तावत् स्वभावत एव व्याप्तिमन्तः । अन्ये तु स्वतो व्याप्तिरहिता उपाधिप्रयुक्तां उपाधिसन्निधानसिद्धां साध्यव्याप्तिमुपजीवन्ति । तादृशहेतुरूप-

जपाकुसुमरक्ततेव स्फटिके, साधनाभिमते चकास्तीत्युपाधिरसावुच्यत इति । तदिदमाहुः—

'अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥' (मी. श्लो. वा. १४. १-५.) इति ।

---

धर्मदर्शनेन व्यापकस्य साध्यस्य धर्मस्यावधारणं नैवेष्टमिति । [नन्वेवं चेदुपाधिशब्दार्थः, साध्यव्याप्यत्वमुपाधिलक्षणेऽवश्यं वाच्यमिति कथं तत्त्यागेन यत्किञ्चिल्लक्षणकथनमिति चेत्—उच्यते । सत्यं, साध्यव्याप्य एव मुख्य उपाधिः । अथापि यत्र यत्र साध्यविशिष्टं साधनमस्ति, तत्र तत्र साधने उपाधिनिष्ठव्याप्तेरारोपवर्णनायोपाधौ साध्यविशिष्टसाधनव्यापकत्वमपि संमन्तव्यम् । इदं च विशिष्टव्यापकत्वं विशेष्यभूतसाधनव्यापकत्वरूपं न भवति ; तथा सति साधनव्यापकस्योपाधेरेव साध्यव्याप्यत्वे सुतरां साधनस्य साध्यव्याप्यत्वमिति समीहितसिद्धिर्न स्यात् । अतो विशिष्टव्यापकत्वं साध्यव्यापकत्वरूपं साधनाव्यापकत्वरूपं च वाच्यम् । एवं च यथा साध्यव्याप्य उपाधिः स्वगतां व्याप्तिं साधने आरोपयन् साध्यव्यापकत्वाव्याप्यत्वाद्धेतौ साध्यव्याप्यत्वाभावं गमयति, तथा साध्याव्याप्योऽपि कश्चित् साध्यव्यापकत्वाव्याप्यत्वरूपहेतुबलेन साध्याव्याप्यतां हेतौ गमयितुमर्हतीति यादृशाकारमादाय साध्यव्याप्यस्योपाधेर्हेतुदूषकत्वं, तादृशाकारमादायान्यस्यापि तदिति सादृश्यात्सोऽप्युपाधिशब्दस्य गौणोऽर्थः । मुख्योपाधित्वं तु साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वम् । अतः साध्यव्याप्यत्वस्योपाधिशब्दमुख्यव्यवहारनियामकत्वेऽपि दूषकतानियामकत्वाभावात् तदुपेक्ष्य गौणमुख्यसाधारणमुपाधिलक्षणं साधनाव्यापकत्वे सति साध्यव्यापकत्वरूपं स्वीकृतमिति । ननूपाधिलक्षणे साध्यव्याप्यत्वानिवेशे सर्वत्र पक्षेतरत्वमुपाधिः स्यात ; महानसादौ साध्यव्यापकत्वात् पर्वते धूमनिश्चयेन साधनाव्यापकत्वाच्चेति चेत्-उच्यते—पक्षे साध्यस्य सन्दिग्धतया पक्षेतरत्वे साध्यव्यापकत्वसन्देह एव ; न तु निश्चयः । ततो व्यभिचारशङ्कैव भविष्यति । सा च विपक्षजिज्ञासां जनयिष्यति । सा त्वनुकूलतर्केण शमयिष्यत इति न तेनोपाधिभूतेनोपद्रवलेशः ; अवश्यमेव कारणान्तरप्रयुक्तव्यभिचारशङ्कापरिहारायानुकूलतर्कस्यापेक्षितत्वात् । एवं साध्यमस्तु पक्षेतरत्वं मास्त्विति व्यापकत्वाक्षेपसम्भवान्नैव तस्य साध्यव्यापकत्वनिश्चयः ॥ एवं यद्वस्तु प्रकृतसाध्यमिव प्रकृतहेतुना साधयितुं शक्यम्, तदपि नोपाधिः । यथा पर्वतो वह्निमान् धूमादित्यत्र वह्निसामग्रीमत्त्वादि ॥ तत्र तर्केणोपाधिसाधनयोर्व्याप्यव्यापकभावसिद्ध्या साधनाव्यापकत्वभङ्गादिति ॥ ]

[नन्वप्रयोजकविषये मीमांसकभट्टपादसम्मतिप्रदर्शनं किमर्थमिति चेत्-उच्यते—मीमांसक-

**[41] तदनेन विपक्षदण्डभूतेन तर्केण सनाथे भूयोदर्शने, कार्यं वा कारणं वा ततोऽन्यद्वा, समवायि वा संयोगि वाऽन्यथा वा भावो वाऽभावो वा, सविशेषणं वा निर्विशेषणं वा लिङ्गमिति निश्शङ्कमवधारणीयम्; अन्यथा तदाभास इति रहस्यम् ॥**

मूर्धन्या एवमाहुः—यत्र यत्र धूमस्तत्राग्निरिति यावद्धूमाधिकरणमग्निग्रहणरूपव्याप्तिज्ञानं न कारणम्; तद्ग्राहकप्रमाणाभावात्, अनपेक्षितत्वाच्च; पक्षातिरिक्ते धूमवत्त्वेन दृष्टस्थलमात्रेऽग्निदर्शनं व्यभिचारादर्शनं च मिलितमनुमितिं जनयतीत्येतदलमिति न धूमसामान्यस्याग्निसामान्यव्याप्तिज्ञानमपेक्षितमिति। तदेतत् **न्यायरत्नमालाद्युक्तं** प्रतिविधातुमेतत्कारिकाप्रदर्शनम्। इदमत्र सूचितं भवति-अप्रयोजकोऽसद्धेतुरिति तावदितोऽवगम्यते। भवद्भिश्च मित्रातनयत्वादेरप्रयोजकत्वमुक्तम्। अतो व्यभिचारशङ्कायामनुमितिर्न भवतीति स्वीकृतमासीत्। न हि यथावद्व्यभिचारदर्शनं मित्रातनयत्वेऽस्ति एवं च सद्धेतावप्युपाधिशङ्कया व्यभिचारशङ्कया वाऽप्रयोजकत्वे आपादिते तत्परिहारपरिशीलनेनैवानुमितिनिर्वाहः कार्यः। न चेदृशी अप्रयभावशङ्का तत्तत्स्थलादागतपुरुषमुखात् सर्वत्र निवर्तयितुं शक्या। तथा सति चाप्तोपदेश एव तत्र मानं, नानुमानमिति। तथा च तदर्थमनुकूलतर्के प्रवृत्ते तस्य विपर्यये पर्यवसायित्वस्वाभाव्यात् व्यभिचरितत्वेच्छाविच्छेदिनो व्यभिचाराभावनिश्चायकत्वमवश्यस्वीकार्यम्। अतो व्यभिचाराभावरूपा सर्वधूमे व्याप्तिर्गृहीतैवेति कथं प्रमाणाभावः? इत्थं व्यभिचारशङ्कानिवर्तनाय व्याप्तिज्ञानस्यापेक्षितत्वात् कथमनपेक्षितत्वमपि? अतः पूर्वोक्तरीत्या सर्वत्र व्यभिचारशङ्कासम्भवात् सर्वसाधारण्येन व्याप्तिज्ञानमेवानुमितिहेतुः। नन्वेवं व्याप्तिज्ञानस्य सकलधूमवत्स्वग्निज्ञानरूपतया पर्वतेऽप्यग्नेर्ज्ञातत्वादनुमितेर्गृहीतग्राहित्वमेव स्यादिति चेन्न—सामान्यतः सर्वत्राग्निग्रहेऽपि पर्वतत्वेन पर्वते तस्यानुमित्यैव ग्राह्यत्वात्। तदिदमगृहीतग्राहित्वं प्राभाकरखण्डनबद्धपरिकरैर्भवद्भिरेव शास्त्रदीपिकादौ सम्यगुपपादितमिति। तत्सिद्धमविनाभावानिश्चयादप्रयोजको न हेतुरिति।]

[41] एवं सोपाधिकस्याप्रयोजकत्वात्तत्र तर्कापेक्षायाश्चोपपादितत्वात्—अनेन विपक्षत्वजिज्ञासाविच्छेदकेन तर्केण सहितं भूयोदर्शनपदविवक्षितमविवक्षिते यत्स्वव्यापके सहचारदर्शनमस्ति चेत् साध्यं प्रति गौतमोक्तरीत्या कार्यं वा कारणं वाऽनुभयं वा, कणादोक्तदिशा सम्बन्धविषयेऽपि समवायि वा संयोगि वाऽन्यसम्बन्धकं वा, स्वरूपविषयेऽपि भावो वाऽभावो वा, हेतुतावच्छेदकधर्मविषयेऽपि विशेषणान्तरविशिष्टमविशिष्टं वा यत् यादृशं तर्कोपस्कृतं तत् तादृशं सल्लिङ्गमिति शक्यमवधारयितुम्; न तत्र व्यभिचारशङ्कावकाशः; तर्कसनाथभूयोदर्शनाभावे तु सर्वः लिङ्गाभास इत्याकरनिगूढोऽयमर्थः; यमिममविद्वांसः-अप्रयोजकमपि सद्धेतुं केचिदाशेरते, तादात्म्यतदुत्पत्तिस्थलमात्रे हेतुस्थितिं च सौगता इति ॥

**[42] तादात्म्यतदुत्पत्त्योरप्येतदेव बीजम्। यदि हि का(यदि का)र्यात्मानौ कारणमात्मानं चातिपतेताम्, तदा तयोस्तत्त्वं व्याहन्येत। अत एव सामग्रीनिवेशिनश्चरमकारणादपि कार्यमनुमिमते १ सौगता अपि। तस्माद्विपक्षबाधकमेव प्रतिबन्धलक्षणम्।**

**[43] तथा हि—शाकाद्याहारपरिणतिविरहिणि मित्रातनये, न किञ्चिदनिष्टमिति नासौ तस्य व्यापिका; व्यापिका तु श्यामिकायाः, कारणत्वावधारणात्। कारणं च तत् तस्य; तदतिपत्य भवने चेति व्याहतम्। एवमन्यत्राप्यूहनीयमिति॥**

[42] तादात्म्यस्थले तदुत्पत्तिस्थले चाविनाभावं प्रत्यप्येतदेव तर्कसनाथत्वं मूलम्। कुतश्च **कार्यात्मानौ** धूमशिंशपे, **कारणमात्मानं च** अग्निवृक्षौ न व्यभिचरत इति प्रश्ने हि, तथा सति तयोरात्मत्वं कार्यत्वं च न स्यादित्युत्तरयितव्यम्। एवं सति तर्केऽन्यत्राप्यविनाभावसम्भवादेव तादात्म्यकार्यमात्रहेतुवादिनोऽपि ते कारणकलापान्तर्गतात्तन्तुद्वयसंयोगादिरूपादन्तिमकारणाद्धेतोः कार्यघटाद्यनुमितिं क्वचिदाहुः। कारणान्तरस्य कार्यं विना भावेऽपि चरमकारणस्याविनाभाव एव; अन्यथा चरमकारणत्वमेव व्याहन्येतेति हि तदाशयः। अतोऽप्रतिक्षेप्यत्वात् 'विपक्षबाधकमानवेदनीयः स्वभावनियम' इति सौगतस्पृष्टस्तर्क एव सर्वस्थलेऽपि नियमगमक इति।

[43] अथाप्रयोजक उदाह्रियते—मातामहगृहे प्रसूतं मित्रातनयमाकर्ण्य जनकबन्धवश्चिन्तयन्ति, स श्यामः मित्रातनयत्वादिति। यद्यपि तत्र श्यामत्वाभाववति मित्रातनयत्वमन्यत्र न दृष्टम्, अथापि शाकाद्याहारपरिणतिरुपाधित्वेनोपन्यस्यते। न च प्रकृतहेतुनोपाधिरप्यनुमीयते—स शाकाद्याहारपरिणतो मित्रातनयत्वादिति; तथा च नोपाधिः साधनाव्यापकत्वमिति वाच्यम्। शाकादिपरिणामस्य शाकादिसामग्रीसम्पाताधीनत्वात् मित्रातनयत्वाधीनत्वाभावात्। मित्रातनये तद्विरहिणि सति हि न किञ्चिदनिष्टं शक्योद्भावनम्। अतस्तर्काभावाच्छाकाद्याहारपरिणतिर्न मित्रातनयत्वव्यापिका। यद्यपि साधनाव्यापकत्वसन्देहः स्यात्—तथाऽपि सन्दिग्धोपाधित्वमक्षतम्। श्यामत्वं प्रति तु सा परिणतिर्व्यापिकैव; घटकाकादौ श्यामत्वदर्शनेऽपि जातिविशेषाव्यापक-गर्भश्यामत्वं प्रति वैद्यकप्रामाण्येन शाकादिपरिणामस्य कारणत्वावधारणात्, कारणस्य कार्यव्यापकत्वात्, तत् शाकपाकजत्वं तस्य श्यामत्वस्य कारणम्, तत् शाकपाकजत्वमतिक्रम्य श्यामत्वगुणो भवति चेत्तर्हि व्याहता भवति, कारणाभावे कार्याभावस्यावश्यकत्वात्। अतः सोपाधिकत्वान्न सिषाधयिषितस्य साध्यस्य सिद्धिप्रसङ्गः। उपाधिर्हि द्विविधः, शुद्धसाध्यव्यापकः, यत्किञ्चित्पक्षवृत्तिधर्मविशिष्टप्रकृतसाध्यव्यापकश्चेति। तत्र च प्रकृते श्यामरूपनियामकजातिविशेषाभावविशिष्टगर्भश्यामत्वरूपविशिष्टसाध्यव्यापकोऽयमुपाधिरिति॥ एवं निश्चितो-

१ प्र. 'अत एव बधिरादेर्मुरजाभिघातादिना शब्दानुमानमित्याह अत एवेति।'

**[44] क पुनरप्रयोजकोऽन्तर्भवति ? न कचिदित्येके। यथा हि सिद्धसाधनम्—न बाधितविषयम्, विषयापहाराभावात्; नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः, कालातीतविलोपप्रसङ्गात्; न चानैकान्तिकादिः, व्यभिचाराद्यभावात्—तथाऽयमपि। सूत्रं तूपलक्षणपरमिति—तदसत्—विभागस्य न्यूनाधिकसंख्याव्यवच्छेदफलत्वात्॥**

---

पाधिकाप्रयोजकस्थलेऽप्युपाधिसत्त्वमूहनीयम्–यथाऽयोगोलकं धूमवत् वह्नेरित्यत्रार्द्रेन्धनसंयोगः, अग्नीषोमीयाहिंसा अधर्मः हिंसात्वादित्यत्र निषिद्धत्वं चोपाधिः। सुरापानादौ ह्यधर्मत्वं निषिद्धत्वनिबन्धनम्; तच्चाधर्मत्वव्यापकम्; पक्षीभूतहिंसाविशेषे तु विहिते न निषिद्धत्वमिति साधनाव्यापकं च। [ननु सर्वत्रानुमाने पक्षे साध्यस्य सन्दिग्धतया उपाधेश्च पक्षावृत्तित्वेन साध्यव्यापकत्वमुपाधौ सन्दिग्धमेवेति कथं निश्चितोपाधिकाप्रयोजकसद्भाव इति चेत्–सत्यम्। अथापि साधनाव्यापकत्वांशसन्देहनिश्चयाभ्यामेवोपाधौ सन्दिग्धनिश्चितभेदः। तथा चोभयविधोपाधिनाऽपि हेतौ व्यभिचारशङ्कैव क्रियते इति शङ्कितव्यभिचारकत्वरूपमप्रयोजकत्वमुभयानुगतम्। अत एव प्राक् द्विविधाप्रयोजकविषयेऽपि 'यावच्चाव्यतिरेकित्व'मिति कारिकायाः प्रमाणतया ग्रहणं, उपर्यप्रयोजकसामान्यस्य सन्दिग्धानैकान्तिकत्वविमर्शश्च स्वरसतो घटते। अथ वा, यद्युपाधिर्न स्यात् तर्हि साध्यं न स्यादिति समुचिततर्कबलेन साध्योपाध्योर्व्याप्यव्यापकभावनिश्चयात् साध्यव्यापकत्वसन्देहो नैव भवतीति निश्चितोपाधिकत्वं सुवचम्।] एवञ्चोपाधिलक्षणान्तर्गतविषये, हेतुविषये तर्कान्तर्गतविषये वा यत्र व्याप्यव्यापकभावे शङ्कावतारः, तत्र सर्वत्रानुकूलतर्के सत्येव व्याप्तिनिश्चयः, तदभावे त्वप्रयोजकत्वमेवेत्यप्यूहनीयम्।

[44] नन्वेवमप्रयोजकस्य सद्धेतुत्वाभावे, 'सव्यभिचारविरुद्धसाध्यसमप्रकरणसमकालातीता हेत्वाभासाः' (न्या. १. २.) इति सूत्रोक्तेषु स क्वान्तर्भवतीति चेत्–अत्र केचित्—न क्वचिदन्तर्भवति। सिद्धसाधकहेतुवदयं पञ्चातिरिक्त इति। सिद्धसाधनहेतुर्हि न बाधितसाध्यकः, विषयस्य ग्राह्यस्य पक्षादपहृतत्वाभावात्। अतो न कालातीतेऽन्तर्भवति; साध्याभाववत्तानिश्चयबलेन संशयकालमतीतस्यैव हेतोः कालातीतत्वात्। नाप्यपक्षधर्माख्योऽसिद्धपर्यायः साध्यसमः; हेतोः पक्षे सत्त्वात्। न च साध्यस्य निर्णीततया पक्षताया अभावात् पक्षताविशिष्टधर्मिवृत्तित्वरूपपक्षधर्मत्वाभावादसिद्धत्वमेवेति वाच्यम्—असिद्धिघटकपक्षे पक्षतारूपविशेषणप्रवेशाभावात्। अन्यथा बाधितस्थलेऽपि साध्यसन्देहरूपपक्षताया अभावेनासिद्धत्ववर्णनसम्भवेन कालातीतविलोपप्रसङ्गात्। एवं व्यभिचारविरोधाद्यभावात् सिद्धसाधनं नानैकान्तिकविरुद्धादिहेत्वाभासोऽपि। अतः यथा सोऽतिरिक्तस्तथाऽयमप्रयोजकोऽपि। विभागसूत्रं तु प्रकृतद्वयो-

**[45] क तर्हि द्वयोरन्तर्निवेशः ? असिद्ध एव । तथा हि—व्याप्तस्य हि पक्षधर्मताप्रतीतिः सिद्धिः । तदभावोऽसिद्धिः । इयं च व्याप्तिपक्षधर्मता[१]स्वरूपाणामन्यतमा-**

---

पलक्षकम् ; 'वरं सूत्रातिक्रमो न वस्त्वतिक्रम' इति न्यायादिति तेषां हृदयम् — तदसत्–विभागस्य यावद्वान्तरकथनरूपतया प्रतीतातिरिक्तसंख्याव्यवच्छेदफलकत्वात् । अतो द्वयोरप्युक्तान्तर्भाव एव ।

[45] अन्तर्भावश्चासिद्ध एव । असिद्धो हि नाम सिद्ध्यभाववान् । सिद्धिः प्रतीतिः साध्यव्याप्यहेतुमानयमिति व्याप्तिविशिष्टपक्षधर्मत्वप्रतीतिरिति यावत् । एतदभावरूपासिद्धिश्च व्याप्त्यप्रतीतिः पक्षाप्रतीतिर्हेतुस्वरूपाप्रतीतिरिति त्रिधा भवति । आसाञ्चान्यथासिद्धिराश्रयासिद्धिस्स्वरूपासिद्धिरिति यथाक्रमं नामानि । सर्वो हि दोषो हेतोरेव । तत्र हेतोस्स्वात्माग्रहणाद्दोषस्स्वरूपासिद्धिः । अन्या चासिद्धिर्हेत्वनुबन्धिविषया । अन्यथासिद्धिस्साध्यं विनापि पक्षे हेतुसिद्धिः, हेतोस्साध्यव्याप्यत्वासिद्धिः । आश्रयासिद्धिरपि द्विधा, धर्मिस्वरूपाप्रतीतिः पक्षत्वाप्रतीतिश्चेति । तथा चाप्रयोजकत्वमन्यथासिद्धिः । सिद्धसाधनञ्च पक्षत्वाप्रतीतिरूपाश्रयासिद्धिः; न तु बाधोऽपि सा ; साध्यव्याप्यहेतुमान् पक्ष इत्याकारिकायां व्याप्तगतपक्षधर्मत्वप्रतीतिरूपसिद्धौ व्याप्त्यंशे तथैव सति पक्षत्वांशस्यैव साक्षाद्विघटनात् । न त्वेषप्रकारो बाधे ; वह्निरनुष्णः कृतकत्वादित्यादौ बाधेन व्याप्तेरेव प्रथमं विघटनात् । अनुमितिं प्रति पक्षतापरामर्शयोः कारणत्वात् व्याप्तिज्ञानं, पक्षता, परामर्शोऽनुमितिरिति क्रमो वाच्यः । तत्र बाधेन प्रथमव्याप्तिज्ञानमेव विघट्यते ; सिद्ध्या तु तदनन्तरा पक्षतेति । एवं बाधसिद्ध्योर्मध्ये बाधस्य पक्षत्वासिद्धिमात्रानिर्वाहकत्वात् सिद्धेश्च तादृशत्वात्, सिद्धसाधनपार्थक्ये च पक्षत्वासिद्धिरिति विभागस्यान्यथाऽनिर्वाहात्, ह्रदो वह्निमान् धूमादित्यादौ बाधे व्याप्तिविघटकत्वाभावेऽपि पक्षधर्मताज्ञानविघटकतया पक्षतामात्रविघटकत्वाभावात् सिद्धसाधनमेव पक्षत्वासिद्धिः । न च व्याप्तिविघटनं नाम किं व्याप्त्यसिद्धिराहो व्यभिचारप्रतीतिः । आद्ये बाधस्यान्यथासिद्धावन्तर्भावः ; अन्त्ये अनेकान्ते ; ह्रदो वह्निमान् धूमादित्यत्र च स्वरूपासिद्धिरहस्येव दोष इति कुतो बाधितस्य पञ्चमत्वमिति वाच्यम्—यत्र बाधज्ञानानन्तरं व्याप्तिविघटनं तत्र बाधस्योपजीव्यत्वात्, यत्र स्वरूपासिद्ध्यज्ञानं, यत्र वा परामर्शानन्तरं बाधप्रत्यक्षम्, तत्र बाधज्ञानस्यैव कार्यकरत्वात् साक्षादनुमितिप्रतिबन्धकत्वाच्च बाधस्य पृथग्दोषत्वात् ॥

---

१. सर्वत्र पक्षधर्मतेति पाठ एव लक्ष्यते । अत्र धर्मतेत्यधिकं भाति । तार्किकरक्षायामपि पक्षधर्मतेत्येवास्ति । तत्रासिद्धिश्चतुर्धा विभक्ता ; व्याप्तिपक्षधर्मतास्वरूपाणामभावः तज्ज्ञानाभावश्चेति विशेषः ॥

प्रतीत्या भवन्ती यथासंख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते। मध्यमाऽप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या वेति द्वयी। तत्र, चरमा सिद्धसाधनमिति व्यपादिश्यते ; व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात्। न त्वेवं बाधे ; व्याप्तेरेव प्रथमं विघटनादिति विशेषः॥

[ नव्यास्तु पक्षतायास्स्वरूपसत्याः कारणत्वात् परामर्शविषयत्वाभावात् सिद्धसाधनस्थले परामर्शविषयव्याप्त्यादिविघटनस्यानुमितिविषयसाध्यवत्त्वविघटनस्य वाऽभावेन हेतोर्न हेत्वाभासत्वम्। पक्षतारूपहेत्वभावादनुमितिः परं न भवति। अतस्सिद्धसाधनहेतुप्रयोग वादिनो न हेत्वाभासत्वोद्भावनम्, किन्तु निग्रहमात्रमित्याहुः॥ अत्रेदमुत्पश्यामः—प्रत्यक्षितविषयेऽपि सन्निकर्षे सति धारावाहिप्रत्यक्षस्य, प्रतीतार्थकशब्दश्रवणेऽपि पुनर्बोधस्य च सम्मतत्वात् तद्वदेव सिद्धविषये परामर्शसत्त्वेऽनुमित्युत्पत्तौ न किञ्चिद्बाधकम्। अतस्सिद्धेर्नानुमितिं प्रत्यपि प्रतिबन्धकत्वम्। एवं पक्षताप्यनुमितौ न कारणम् ; असत्यापि साध्यसंशये, असत्यामपि सिषाधयिषायां, सत्यामपि सिद्धावनुमितेरङ्गीकारसम्भवात्। समानविषये प्रत्यक्षादिसामग्र्याः प्रबलत्वात्क्वचित्प्रत्यक्षादिसामग्रीरूपप्रतिबन्धकवशादनुमितिः कामं मा जायताम्। "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार" इति वाचस्पतिमिश्रवचनं च प्रत्यक्षसामग्रीसद्भावकालाभिप्रायं अनुमितिसामग्रीसम्पादनप्रयासाभावपरं च ; न तु सिद्धेः प्रतिबन्धकत्वपरम्। अतः प्रत्यक्षे जाते पुनः प्रत्यक्षोत्पादकसामग्र्यभावे च स्वयं सम्पन्नपरामर्शबलादनुमितिरपीष्यत एव। एतावता सिद्धसाधनं न दोष इति नोच्यते। सर्वत्र न्यायप्रयोगस्य परार्थत्वात् वादिनोर्मध्ये एकनिर्ज्ञातविषये परेण तज्ज्ञापनार्थन्यायप्रयोगस्यानवकाशादनपेक्षितार्थकथनेन दोषस्य जागरूकत्वात्। तत्र निग्रहस्थानमात्रं नवीनमतावलम्बने स्यात् ; अनुमितिपरामर्शविषयांशविपरीताकारसत्त्व एव हेतोर्दुष्टत्वाङ्गीकारात्। प्राचीनरीत्या तु हेत्वाभासत्वम्; पक्षत्वासिद्धस्तैः परिगणनात्। पक्षता च सिषाधयिषा साध्यवत्त्वजिज्ञासा। तस्याः परार्थानुमितावङ्गत्वात्तदभावेऽनपेक्षितहेतुप्रयोगाद्धेत्वाभासतेति सिद्धसाधनोद्भावकस्याशयः। सिद्धाविदृशसाध्यवत्त्वजिज्ञासाभङ्गः क्रियते; इच्छायास्सर्वत्र विषयपूर्त्यैव नाशात् साध्यज्ञाने सति साध्यजिज्ञासाया असम्भवात्। अत एव सिद्धविषये जिज्ञासाविच्छेदादनुमित्यौपयिकपरामर्शसामग्रीसम्पादनप्रवृत्त्यभावमात्रेण सिद्धेरनुमितिप्रतिबन्धकत्ववाचोयुक्तिः। न तु स्वतस्सामग्रीसम्पाताधीनशाब्दादिपरामर्शस्थलेऽपि तावताऽनुमित्यनुत्पत्तिः। न च सिद्धस्थले परामर्शसत्त्वेऽपि पूर्वसिद्धविषयस्मरणमात्रम्, नानुमितिरिति वाच्यम् ; मानाभावात् ; सिद्ध्यनुमित्योः प्रतिबन्ध्यप्रतिबन्धकभावकल्पनायामेव गौरवात् ; अनुमित्सादिनानासिषाधयिषायास्तत्रोत्तेजकत्वकल्पनाच्च गौरवात्। 'बुभुत्सापीन्द्रियान्तरादा-

[46] **यत्त्वप्रयोजकः सन्दिग्धानैकान्तिक इत्यनैकान्तिकेऽन्तर्भाव्यते-तदसत्—व्याप्त्यसिद्ध्या हि निमित्तेन व्यभिचारः शङ्कनीयोऽन्यथा वा। प्रथमे असिद्धिरेव दूषणम्;**

**कृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती ... ... उपयुज्यते ; न तु स्वरूपतः।'** इति प्रागुक्तरीत्या सिषाधयिषाया अनुमितिसामग्रीनिष्पादकत्वेन साक्षादनुमितिहेतुत्वाभावात्। ज्ञानस्य वस्तुतन्त्रतया च कारणायत्तत्वेन क्रियावत् पुरुषतन्त्रत्वाभावेनेच्छाभावमात्रेण तदनुत्पाद-वर्णनस्यायुक्तत्वात्। अतः सिद्धिर्नानुमितिप्रतिबन्धिका ; किं त्विच्छाविघटिका। बाधज्ञानस्य च नेदृशेच्छाविघटकत्वम् ; तद्विपरीतज्ञानस्य तज्ज्ञानप्रतिबन्धकत्वेऽपि तज्ज्ञानेच्छाविघटकत्वाभा-वात्। अतो बाधेन पक्षत्वस्याहत्य विघटनाभावाद्बाधः पृथग्हेत्वाभासः। कचिद्बाधज्ञानपरेण साध्यप्रतिज्ञायां कृतायां साध्यवत्त्वजिज्ञासा जायमाना परकीयहेतुप्रयोगानन्तरं हेतोर्व्याप्य-त्वनिश्चये सति शाम्यति। तावता न बाधेनाऽऽहत्य पक्षता विघट्यते, व्याप्तिज्ञानमेव विघट्यते साध्यज्ञानं वेति। एवं पक्षताया अनुमितिविशेष एवोपयोगात् तत्रैव पक्षत्वासिद्धिर्दूषणम्। बाध-दोषस्तु स्वार्थपरार्थसर्वानुमितिसाधारणः। अतः कालातीतोऽतिरिक्त इति] तत्सिद्धं नाप्रयोजकः सिद्धसाधनवदतिरिक्तः ; किं तु सिद्धसाधनवदेवासिद्धान्तर्गत इति।

[46] यत्तु अप्रयोजकस्थले व्यभिचारशङ्कासत्त्वात्सन्दिग्धानैकान्तिकत्वादनैकान्तिक एव सोऽ-न्तर्भाव्यत इति-तदसत्—किमनुकूलतर्कस्य व्याप्तिग्राहकस्याभावेन व्याप्त्यनिश्चयाद्व्यभिचारशङ्का, किं वा प्रागुक्तरीत्या साध्यसाहचर्यरूपसाधारणधर्मवत्ताज्ञानमात्रात्। नान्त्यः, तस्याः शङ्कायाः सर्वहेतुसाधारणत्वेन दुष्टतानापादकत्वात्। अन्यथा सद्धेतोरपि दुष्टत्वापत्तेः। न चैतद्युक्तम् ; पश्चाद्विचारबलाद्धेतौ व्याप्तिमत्त्वेन निर्णीते शङ्काया अनवकाशाद्दोषस्यानित्यत्वापत्तेः। अतो दुष्टादुष्टविभागौचित्याय हेत्वाभासस्य नित्यदोषत्वाय च विपक्षबाधकाभावाधीनव्याप्यत्वासिद्धिमू-लिकैव शङ्का दूषकत्वेन वाच्या। तथा च सर्वत्र साधारणधर्मवत्ताज्ञानाधीनत्वेऽपि व्यभिचार-शङ्कायास्सा व्याप्त्यसिद्धिविशिष्टैवान्ततो दूषिका भवतीत्युपजीव्यत्वादसिद्धिरेव दूषणमिति। तत-श्चानैकान्तिकस्य न द्वेधा विभागः, सन्दिग्धानैकान्तिकत्वस्य सद्धेतुसाधारण्यादिति निश्चितसाध्या-भाववद्वृत्तिरनैकान्तिकः, व्याप्यत्वासिद्धश्चाप्रयोजक इति।

[ननु व्याप्यत्वासिद्धेर्व्याप्त्यग्रहरूपत्वे स ग्रहः किं ज्ञानसामान्यरूप उत प्रमारूपः ; नाद्यः ; दुष्टहेतावपि व्याप्तिभ्रमसम्भवेनाग्रहायोगात्। नान्त्यः ; प्रकृतहेतुविशेष्यकप्रकृतसाध्य-व्याप्तिप्रमितेर्दुष्टहेतावप्रसिद्धतया तदभावरूपव्याप्त्यग्रहस्य दुर्वचत्वात्। किं च व्याप्तिप्रमित्य-भावस्य व्याप्त्यभावनिबन्धनतया व्याप्त्यभाव एव लाघवाद्व्याप्यत्वासिद्धिः। एवं पक्षाभाव-हेत्वभावौ पक्षासिद्धिस्वरूपासिद्धी। पक्षत्वासिद्धिस्तु पक्षतायाः स्वरूपसत्या एवापेक्षितत्वात्सुतरां

**उपजीव्यत्वात्; नानैकान्तिकम्; उपजीवकत्वात्। १ अन्यथाशङ्कात्वदूषणमेव; निर्णीते तदनवकाशादिति॥**

पक्षत्वाभाव एव। स च व्याप्त्यभावो व्यभिचार एव; अव्यभिचारस्य व्याप्तित्वादिति कथं व्याप्यत्वासिद्धसव्यभिचारयोर्भेदः। अपि च सोपाधिकस्यैव व्याप्यत्वासिद्धत्वात् उपाधेश्च व्यभिचारोन्नायकतयैव दूषकत्वादुपाधिना व्यभिचारज्ञानमेव जन्यते, न तु व्यभिचारविलक्षणस्य कस्यापि व्याप्त्यभावस्य ज्ञानमिति सोपाधिकस्स व्यभिचाराविशिष्ट इति चेत्-उच्यते-वस्तुतो व्याप्त्यभावो यत्र, तत्रैव वास्तवहेत्वाभासत्वम्। अथापि शाकपाकजत्वाद्युपाधिस्थले साधनाव्यापकत्वसन्देहात् व्याप्तेरिव व्यभिचारस्याप्यनिश्चितत्वाद्व्यभिचारोद्भावनायोगात् व्याप्त्यनिश्चयोद्भावनमेव कार्यम्। एवं च व्याप्त्यनिश्चयरूपव्याप्यत्वासिद्धेः पार्थक्ये स्थिते सर्वत्रोपाधिमूलदोषोद्भावनस्थले ऐकरूप्याय व्याप्त्यसिद्ध्युद्भावनमेवेष्यते; उपाधिनिश्चयाधीनव्यभिचारनिश्चयस्थलेऽपि व्याप्त्यनिश्चयस्य सत्त्वात्। यत्र तूपाधिना व्यभिचारोन्नयनं विना, इदं साध्याभाववदिति विशिष्य निश्चयपूर्वकमेव व्यभिचारग्रहणम्-यथा पर्वतो धूमवान् वह्नेरित्यादौ; तत्रायोगोलकान्तर्भावेण विशिष्य तन्निश्चयात्-तत्र सव्यभिचारत्वोद्भावनमिति। न च सव्यभिचार इत्यस्यानिश्चितव्याप्तिक इत्यर्थवर्णनेन व्याप्यत्वासिद्धिसामान्यं तत्रान्तर्भावयितुं शक्यमिति शङ्क्यम्--एवं तर्हि विरुद्धसत्प्रतिपक्षयोरपि व्याप्त्यनिश्चयसद्भावेन सव्यभिचारान्तर्भावापत्तेः। सव्यभिचारविरुद्धसत्प्रतिपक्षमध्ये कतमस्यानिश्चितव्याप्तिकार्थत्वमिति विनिगमकाभावाच्च। तथा च यथा विरोधप्रतिपक्षनिश्चये सत्येव विरुद्धसत्प्रतिपक्षत्वे, तथा विशिष्य व्यभिचारनिश्चये सत्येव सव्यभिचारत्वमिति विविच्य व्याप्त्यनिश्चयस्यासिद्ध्यन्तर्भावस्वीकार एव युक्तः॥ एवं पक्षे हेत्वभावपक्षतावच्छेदकाभावयोरेव वास्तवदोषत्वेऽपि क्वचित्पक्षे तत्सन्देहेऽप्यनुमित्यभावादनिश्चयोद्भावनस्यावश्यकत्वात् पक्षानिश्चयहेत्वनिश्चयरूपे एव पक्षासिद्धिहेत्वसिद्धी। परं तु पक्षे हेत्वभावपक्षतावच्छेदकाभावयोर्व्यभिचारादेरिवासिद्धिपार्थक्येन सूत्रे परिगणनाभावात् तयोरप्यसिद्धावेवान्तर्भाव इष्टः॥ अत्रेदमपि भाति-असिद्धिपदेनानिश्चयमात्रग्रहणमेव युक्तम्। अत एव साध्याविशिष्टत्वात्साध्यसमत्वकथनं सूत्रे सङ्गच्छते। पक्षे हेत्वभावादेश्च साध्याभावादेरिव कालातीत एवान्तर्भावः। अत एव भाष्ये कालातीतोदाहरणम्, नित्यः शब्दः संयोगव्यङ्ग्यत्वादिति कृतं सङ्गच्छते। शब्दाभिव्यक्तिकाले भेरीदण्डसंयोगाद्यभावात् संयोगव्यङ्ग्यत्वरूपविशिष्टहेत्वभाव एव हि तत्रोच्यते। तथा च व्यभिचारस्येव हेत्वभावादेरप्यसिद्धिपार्थक्यमेवेति।

१. बो. **अन्यथा** व्याप्तिनिर्णये तु व्यभिचारशङ्कात्मकं दूषणमेव नोदेतीति। निर्णीते विषये शङ्काया निरवकाशत्वादिति॥

ईदृशी कल्पना कामं गृह्यतां त्यज्यतामपि ।
यावता ग्रन्थनिर्वाहस्तावदत्रोपयुज्यते ॥ ]

सर्वथाऽनुकूलतर्काभावे हेतोरकिञ्चित्करत्वेऽपि तत्सत्त्वे आशङ्कालेशस्याप्यभावादनुमानप्रामाण्यं सुष्ठु प्रतिष्ठितम् । एवमप्याश्रयासिद्ध्यादिदोषदुष्टतया न तदीश्वरविषये बाधकं भवितुमलमिति सिद्धम् ।

---

## टिप्पणीपरिशिष्टम् ।

१८. ७. **कार्यानुपलब्धीति** । कार्यं चानुपलब्धिश्च कार्यानुपलब्धी । कार्यस्यानुपलब्धिः कार्यानुपलब्धिः । ते च सा च कार्यानुपलब्धयः । तद्रूपाणां लिङ्गानां भङ्गे इत्यर्थः ।

२३. ६. **नास्तिकैरपि तथाकरणप्रसङ्गात् सम्भोगवत् लोकव्यवहारासिद्धत्वादिति** वाक्यसमाप्तिः । अथ शङ्कते **अफलमपी**त्यादियोजनान्तरम् ।

२९. ५. **न हीति** । (६९. पु) उपाधिविशिष्टाभावे उपाधिमात्रं प्रतियोगि, आत्मनो व्यापित्वात् अभावायोगात् । दण्डाभावविशिष्टपुरुषाभावे तु पुरुषोऽपि प्रतियोगी, सदण्डपुरुषभिन्नानामदण्डपुरुषाणां दण्डिमति देशेऽसत्त्वात् ।

४६. ६, **निःसाधना इति** । 'मीमांसानिपुणं नपुंसक'मिति रीत्या उपालम्भोऽपि स्यात् ।

५०. ३. **तदीयस्वभावेति** । तदिति विषयबन्धनमुच्यते, तदुपयोगिस्वभावा; विषयैश्चित्तं प्रकृतिर्बध्नातीति । पूर्वं तु तदीयस्य चैतन्यीयस्य स्वभावो यस्यास्तादृशीति व्याख्यान्तरानुरोधेन व्याख्यातम् ।

,, ४. **आहत्ये**त्यस्य साक्षादित्यर्थं इह ग्रन्थे सर्वत्र, अन्यत्रैव प्राच्यग्रन्थेषु । तदीयः चित्सम्बन्धी ।

५१. १. **उपधानायोगात्**- ग्रहणस्यायुक्तत्वात् तत्प्रसङ्गादित्यर्थः; ग्रहणायोगप्रसङ्गादिति वा । व्याघ्राद्यभिमानदशायामपि नरत्वेन ग्रहणप्रसङ्गादिति भावः । कदाचिद्व्याघ्राद्यभिमानसत्त्वात् सर्वदा नरत्वेनाभिमानाभावप्रसङ्गादिति वा ।

५३. ३. **अन्यथेति**—अनिर्मोक्षप्रसङ्गपरिहाराय हि बुद्ध्यादिस्वीकारः, स्वीकारेऽपि तद्दोष-तादवस्थ्यमिति ।

५४. ४. **न त्विति** । यावद्धर्मकं कार्यं तावद्धर्मकं कारणमिति पाठः स्यात् । अन्यथा तु तावद्धर्मकं तावन्मात्रधर्मकमित्यर्थः । विस्तरोक्तरीतिर्वा ।

७०. ५. **कोष्ठगत्या**—अन्तर्विवेचनेन ।

७२. ३. **विरतेति** । सप्तमीबहुव्रीहौ ईश्वरस्य प्रपञ्चक्षोभाश्लेषसिद्धिः ; पञ्चमीबहुव्रीहौ जीवस्य तत्क्षोभाश्लेष ईश्वराधीन इति सिद्ध्यति ।

७५. ७. शाब्दी प्रमा भावकारणसापेक्षा प्रमात्वादनुमानादिवदित्यभिसन्धायाह **अनुमानादा-विति** । अत्राप्रयोजकं शङ्कते **अन्यथेति** । अप्रामाण्यमनुमिनोति **गुणाभाव इति** । अत्राप्रयोजकशङ्का **अप्रामाण्यं प्रतीति** । परिहरति **प्रामाण्यं प्रत्यपीति** ।

९८. ४. **क्वचित्**—भूतलं प्रत्यक्षेण गृहीत्वाऽभावानुमानस्थले अभावप्रत्यक्षस्थले च ।

१०३. १. **स्पर्शादीति** । एतद्वाक्यार्थः । १५३ पुटे (11) फक्किकायां विशदमवसेयः

१०४. ३. **सामग्रीनिविष्टा**—सामग्र्यन्तर्भूता सामग्रीन्यूनदेशवृत्तित्वव्याप्येति यावत् ।

१११. ७. साध्यधर्मिणं साध्यं धर्मविशिष्टो धर्मीति भाष्यात् साध्यपदं विधेयविशिष्टपरम् । दृष्टान्तधर्मिव्यावृत्तये साध्येति । धर्मभूतसाध्यव्यावृत्तये धर्मीति ।

शुभमस्तु ।



# शोधनिका ॥

—(●)—

| पु. | पं. | शुद्धम् | पु | पं | शुद्धम् |
|---|---|---|---|---|---|
| १४. | १३. | लभ्यमानावधिक | ७०. | १९. | व्यापकानां |
| १६. | ६. | साजात्ये एव कार्य | ८३. | २६. | चिदर्थापत्ति |
| १७. | २८. | नदर्शनादिति नशब्दसमासः। | ८७. | ३. | ये त्वेकदेशिनो |
| २६. | २२. | सहकारित्वसम्भवा | ९४. | ५. | कालानियमात् |
| २९. | १५. | प्रतिबन्धरूप | ९६. | १३. | किञ्चिद्दृश्यदेश |
| ३०. | १६. | प्राक्प्रध्वंसादि | ९७. | २. | प्रत्यय |
| ३३. | २५. | तया सहजशक्ति | ,, | १८. | त्येतत्साध |
| ३५. | २७. | तत्राप्यन्ततस्तु | ९९. | १९. | जगति |
| ३६. | २३. | पृथिवीत्वव्याप्यजाति | ११२. | ६. | न-तदस |
| ४०. | १२. | कार्पासबीज | ,, | ११. | व्याप्तिसिद्धिः |
| ४१. | २. | संसर्गविशेषैः | ११४. | २. | तथैवास्तु, कि |
| ४४. | ९. | निष्पापत्वा | ११५. | १०. | तत्रैकस्याः |
| ४५. | १०. | परीक्ष्यसमवेतं | ११८. | १४. | वृत्तिनिरोध |
| ४७. | २७. | कश्चित् इति | ११९. | ९. | स्थितिरूपा |
| ४८. | ७. | समवायेन भोगं प्रति | १२२. | ५. | कायाधिष्ठा |
| ५०. | १२. | णत्वकल्पने | ,, | २८. | मित्यस्याग्र |
| ,, | १५. | कारणमिति | १२३. | २. | व्युत्पद्यते |
| ,, | २०. | तावद्ग्राह | ,, | १०. | बाधक |
| ५२. | २०. | भेदाग्रहणं | १४८. | १९. | द्रव्यानारम्भकेति |
| ६०. | १७. | बीजत्वावच्छिन्नकार्य | १५१. | १८. | भवति |
| ६१. | २५. | बाधक | १५३. | २५. | रौप्यादि |
| ,, | २६. | दर्शने तु | १५५. | ७. | रूपस्वभावः |
| ६२. | १९. | सामग्रीकत्वस्य | १५९. | ३. | निश्चयः |
| ६९. | १४. | भुद्रयासंयोगा | १६०. | १०. | कदाचिद्भावि |

१६३. १०. प्रसिद्धेंऽशे
१६४. १०. श्वरास्सिद्ध
१६५. १०. मदज्ञातान
,, १६. प्रत्यक्षं
१६६. ६. ष्टिदशा
,, १४. कोशान्निवर्त
१६७. २४. स्येवासिद्धेः ।
,, २७. टादेर्विषयतया हेतो
१६८. २०. त्वन्न अतीन्द्रियं
,, २२. अदृष्टिबाधिते
१६८. २३. लब्धिर्हेतु
१७०. २६. क्षासत्त्वेनानिश्चिते
१७१. ४. मर्थोऽप्रयोजकः
१७५. १३. तदवसानभूमि
,, २३. धूमोपलम्भो
१८२. १९. ह्युपाधित्वम्
,, २१. चेत्–उच्यते । उपाधिलक्षणं साध्य
,, २३. मविवक्षितयत्संख्याकं
१८८. २२. सिद्धया चेदशसाध्य
१८९. ८. कचिद्बाधज्ञाने, परेण

---

# पूर्वभागमूलकारिकासूची ॥